श्रीगणेशाय नमः ॥

# सनातनधर्मसंग्रहः ॥

## ईश्वरस्मरणम् ।

१.

यजुः अ० ३४ ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु॥१॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥२॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्प-
मस्तु ॥ ३ ॥ येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन
सर्वम् । येन यज्ञस्तायते सप्त होता तन्मे मनः शिवसङ्क-
ल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता
रथनाभाविवाराः । यस्मिँश्चित्तꣳ सर्वमोतं प्रजानां तन्मे
मनः शिवसङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव यन्मनु-
ष्यान्नेनीयते ऽभीषुभि र्वाजिन इव । हृत्प्रतिष्ठं यदजिरं
जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥

२.

यजुः अ० २५ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा वि-
धेम ॥ १० ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा
जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय
हविषा विधेम ॥ ११ ॥ यस्येमे हिमवन्तो महित्वा यस्य
समुद्रꣳ रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू

कस्मै देवाय हविषा विधेय ॥ १२ ॥ य आत्मदा बलदा
यस्य विश्व उपासते प्रशिष यस्य देवाः । यस्य च्छायामृतं
यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ १३ ॥

---

३.

पुरुषसूक्तम् ।

यजु॰ अ॰ ३१ ॥ ओ३म् ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिꣳ सर्वत स्पृत्वा ऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष
एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमाऽतो ज्यायाँ
श्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दि
वि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥ ततो
विराड ऽजायत विराजो अधि पूरुषः । स जातो अत्यरि-
च्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ तस्माद्यज्ञात् सर्वहुतः
सम्भृतं पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्यानारण्या
ग्राम्याश्च ये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि
जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ ७ ॥
तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे
तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥ तं यज्ञं बर्हिषि प्रौक्षन
पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च
ये ॥ ९ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं
किमस्यासीत्किं बाहू किमूरू पादा उच्येते ॥ १० ॥ ब्राह्म-
णोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वै-
श्यः पद्भ्याꣳ शूद्रो अजायत ॥ ११ ॥ चन्द्रमा मनसो जात-
श्चक्षोः सूर्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्नि-
रजायत ॥ १२ ॥ नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः
समवर्त्तत । पद्भ्यां भूमि दिशः श्रोत्रात् तथा लोकाँ २ ॥

अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं
तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजंत
देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः
सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ अद्भ्यः
सम्भृतः पृथिव्यै रसाच विश्वकर्मणः समवर्त्तताग्रे । तस्य
त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय
॥ १८ ॥ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा
विजायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थु
र्भुवनानि विश्वा ॥ १९ ॥ यो देवेभ्य आतपति यो देवानां
पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये
॥ २० ॥ रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् । य-
स्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ २१ ॥ श्रीश्चते
लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ
व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥ २२ ॥

---

४.

## रुद्रसूक्तम् ।

यजु. अ. १६ ॥ ॐ ३ ॥ नमस्ते रुद्र मन्यवउतोत इषवे नमः । बाहु-
भ्यामुत ते नमः ॥ १ ॥ या ते रुद्र शिवा तनूरघोरा पाप-
काशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताऽभिचाक-
शीहि ॥ २ ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां
गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥ ३ ॥ शिवेन
वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जग-
दयक्ष्मꣳ सुमना असत् ॥ ४ ॥ अध्यवोचदधिवक्ता

प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातु-
धान्योऽधराचीः परासुव ॥ ५ ॥ असौ यस्ताम्रो अरुण
उत बभ्रुः सुमङ्गलः । ये चैनᳬं रुद्रा अभितो दिक्षु श्रिताः
सहस्रशोऽवैषाᳬं हेड ईमहे ॥ ६ ॥ असौ योऽवसर्पति नील-
ग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्य्यः
सदृष्टो मृडयातिनः ॥ ७ ॥ नमोऽस्तु नीलग्रीवाय सहस्रा-
क्षाय मीढुषे । अथो ये अस्य सत्वानोऽहन्तेभ्योऽकर-
न्नमः ॥ ८ ॥ प्रमुञ्च धन्वनस्त्वमुभयो रात्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥ ९ ॥ विज्यन्धनुः
कपर्दिनो विशल्यो बाणवाँ २ ॥ उत । अनेशन्नस्य या इषव
आभुरस्य निषङ्गधिः ॥ १० ॥ या ते हेति र्मीढुष्टम हस्ते बभूव
ते धनुः ॥ तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ ११ ॥
परिते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः । अथो य इषुधि
स्तवारे अस्मिन्निधेहि तम् ॥ १२ ॥ अवतत्य धनुष्ट्वᳬं सह-
स्राक्ष शतेषुधे । निशीर्य्य शल्यानाम्मुखाशिवो नः सुमना
भव ॥ १३ ॥ नमस्त आयुधायानातताय धृष्णवे । उभा-
भ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥ १४ ॥ मानो महा-
न्तमुत मा नो अर्भकम्मान उक्षन्तमुत मान उक्षितम् ।
मा नो वधीः पितरम्मोत मातरम्मानः प्रियास्तन्वो रुद्र-
रीरिषः ॥ १५ ॥ मा न स्तोके तनये मा न आयुषि मा
नो गोषु मानो अश्वेषु रीरिषः । मा नो वीरान्रुद्र भा-
मिनो वधीर्हविष्मन्तः सदमित् त्वा हवामहे ॥ १६ ॥
नमो हिरण्य बाहवे सेनान्ये दिशाञ्च पतये नमो नमो
वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमो नम– शष्पि-
ञ्जरायत्विषीमते पथीनाम्पतये नमो नमो हरिकेशायोपवी-
तिने पुष्टानाम्पतये नमो नमो बभ्लुशाय ॥ १७ ॥ नमो
बभ्लुशाय । व्याधिनेन्नानाम्पतये नमो नमो भवस्य
हेत्यै जगताम्पतये नमो नमो रुद्रायाततायिने क्षेत्राणा

स्पतये नमोनमः सूतायाहन्त्यै वनानाम्पतये नमो नमो रोहिताय ॥ १८ ॥ नमो रोहिताय । स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नमऽ उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमोनमः कृत्स्नायतया ॥ १९ ॥ नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमोनमः सहमानाय निव्याधिनऽ आव्याधिनीनाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे परिचरायारण्यानाम्पतये नमो नमो वञ्चते ॥ २० ॥ नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिणऽ इषुधिमते तस्कराणाम्पतये नमोनमः सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥ २१ ॥ नमऽ उष्णीषिणे । गिरिचराय कुलुञ्चानाम्पतये नमो नमऽ इषुमद्भ्यो धन्वायिभ्यश्चवो नमो नमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्चवो नमो नमऽ आयच्छद्भ्यो स्यद्भ्यश्चवो नमो नमो विसृजद्भ्यः ॥ २२ ॥ नमो विसृजद्भ्यो विध्यद्भ्यश्चवो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्चवो नमो नमः शयानेभ्यऽ आसीनेभ्य श्चवो नमोनमस्तिष्ठद्भ्यो धावद्भ्यश्चवो नमो नमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः । सभापतिभ्यश्चवो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्चवो नमोनमऽ आव्याधिनीभ्यो विविध्यन्तीभ्यश्चवो नमोनमऽ उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गणेभ्यः ॥ २४ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्चवो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्चवो नमो नमः सेनाभ्यः ॥ २५ ॥ नमः सेनाभ्यः । सेनानिभ्यश्च वो नमो नमो रथि-

भ्योऽ अर्थेभ्यश्च वो नमो नमः क्षत्तृभ्यः सङ्गृहीतृ-
भ्यश्च वो नमो नमो महद्भ्योऽ अर्भकेभ्यश्चवो नमः॥२६॥
नमस्तक्षभ्यः। नमस्तक्षभ्यो रथकारेभ्यश्च वो नमोन-
मः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः
पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो
नमः श्वभ्यः ॥ २७॥ नमः श्वभ्यः श्वपतिभ्यश्च वो
नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये
च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने॥
२८॥ नमः कपर्दिने। च व्युप्तकेशाय च नमः सहस्रा-
क्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय
च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय ॥ २६ ॥
नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च
नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च नमऽ
आशवे॥ ३०॥ नमऽ आशवे। चाजिराय च नमः शीघ्र्या-
य च शीभ्याय च नमऽ ऊर्म्याय चावस्वन्याय च
नमो नादेयाय च द्वीप्याय च॥ ३१ ॥ नमोज्ज्येष्ठाय
च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्य-
माय चापगल्भाय च नमो जघन्याय च बुध्न्याय
च नमः सोभ्याय। ३२ ॥ नमः सोभ्याय च प्रति-
सर्याय च नमो याम्याय च क्षेम्याय च नमः श्लो-
क्याय चावसान्याय च नमऽ उर्वर्याय च खल्याय च
नमो वन्याय ॥ ३३॥ नमो वन्याय च कक्ष्याय च
नमः श्रवाय च प्रतिश्रवाय च नमऽ आशुषेणाय चाशुर-
थाय च नमः शूराय चावभेदिने च नमो विल्मिने॥ ३४॥
नमो विल्मिने। च कवचिने च नमोऽवर्मिणे च वरूथिने
च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहन
न्याय च नमो धृष्णवे॥ ३५ ॥ नमो धृष्णवे च प्रमृशाय
च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने

च नमः स्वायुधाय च सुधन्वने च ॥ ३६ ॥ नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च नमः कूप्याय ॥ ३७ ॥ नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च नमो वात्याय ॥ ३८ ॥ नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गवे ॥ ३९ ॥ नमः शङ्गवे । च पशुपतये च नमऽ उग्राय च भीमाय च नमोऽग्रे वधाय च दूरे वधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ ४० ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१ ॥ नमः पार्य्याय चावार्य्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय ॥ ४२ ॥ नमः सिकत्याय च प्रवाह्याय च नमः किᳬशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमऽ इरिण्याय च प्रपथ्याय च नमो व्रज्याय ॥ ४३ ॥ नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च नमः शुष्क्याय ॥ ४४ ॥ नमः शुष्क्याय च हरित्याय च नमः पाᳬसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नमऽ ऊर्व्याय च सूर्म्याय च नमः पर्णाय ॥ ४५ ॥ नमः पर्णाय च पर्णशदाय च नमऽ उद्गुरमाणाय चाभिघ्नते च नमऽ आखिदते च प्रखिदते च नमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमोनमोवः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो

नमऽ आनिर्हतेभ्यः ॥ ४६ ॥ द्रापेऽ अन्धसस्पते दरिद्रनी-
ललोहित । आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मा रोङ् मो-
चनः किंचना ममत् ॥ ४७ ॥ इमा रुद्राय । तवसे कपर्दिने-
क्षयद्वीराय प्रभरामहे मती ॥ यथा शम सद्विपदे चतु-
ष्पदे विश्वम्पुष्टं ग्रामेऽ अस्मिन्ननातुरम् ॥ ४८ ॥ या ते ।
रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ॥ शिवा रुतस्य
भेषजी तया नो मृड जीवसे ॥ ४६ ॥ परिनोरुद्रस्य हेति-
र्वृणक्तु परित्वेषस्य दुर्म्मति रघायोः ॥ अवस्थिरामघ
वद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥ ५० ॥ मीढुष्टम
शिवतम । शिवोनः सुमना भव ॥ परमे वृक्षऽ आयुध-
न्निधाय कृत्तिं वसानऽ आचर पिनाक म्बिभ्रदा गहि॥५१॥
विकिरिद्र विलोहित नमस्ते अस्तु भगवः । यास्ते
सहस्रꣳ हेतयो न्यमस्मन्निवपन्तु ताः ॥ ५२ ॥ सहस्राणि
सहस्रशो बाह्वो स्तव हेतयः ॥ तासामीशानो भगवः
पराचीना मुखाकृधि ॥ ५३ ॥ असङ्ख्याता सहस्राणि
ये रुद्राऽ अधि भूम्याम् ॥ तेषाꣳ सहस्रयोजने ऽवधन्वा-
नि तन्मसि ॥५४॥ अस्मिन्महत्यर्णवेन्तरिक्षे भवाऽअधि।
तेषाꣳ सहस्रयोजने ऽवधन्वानि तन्मसि ॥ ५५ ॥ नील-
ग्रीवाः शितिकण्ठा दिवः रुद्राः उपाश्रिताः ॥ तेषाꣳ
सहस्रयोजने ऽवधन्वानि तन्मसि ॥ ५६ ॥ नील-
ग्रीवाः शितिकण्ठाः शर्व्वा अधः क्षमाचराः ॥ तेषाꣳ
सहस्रयोजने ऽवधन्वानि तन्मसि ॥ ५७ ॥ ये वृक्षेषु ।
शष्पिञ्जरा नीलग्रीवा विलोहिताः ॥ तेषा ꣳ
सहस्रयोजने ऽवधन्वानि तन्मसि ॥ ५८ ॥ ये भूताना
मधिपतयो विशिखासः कपर्दिनः तेषा ꣳ सहस्र-
योजने ऽवधन्वानि तन्मसि ॥ ५६ ॥ ये पथाम्पथि
रक्षय ऐलबृदा आयुर्य्युधः ॥ तेषा ꣳ सहस्रयोजने
ऽवधन्वानि तन्मसि ॥ ६० ॥ ये तीर्थानि प्रचरन्ति

सृकाहस्ता निषङ्गिणः ॥ तेषा ७ सहस्र योजने ऽवधन्वा
नि तन्मसि ॥ ६१ ॥ येन्नेषु । विविद्ध्यन्ति पात्रेषु पिबतो
जनान् ॥ तेषा ७ सहस्रयोजने ऽवधन्वानि तन्मसि
॥ ६२ ॥ यऽ एतावन्तश्च भूया ७ सश्च दिशो रुद्रा-
वितस्थिरे ॥ तेषा७ सहस्रयोजने ऽवधन्वानि त-
न्मसि ॥ ६३ ॥ नमोस्तु । रुद्रेभ्यो ये दिवि येषां-
वर्षमिषवः ॥ तेभ्यो दश प्राचीर्दशदक्षिणा दश प्रती-
चीर्दशोदीचीर्दशोर्ध्वाऽः ॥ तेभ्यो नमोऽ अस्तु तेनो
वन्तु तेनो मृडयन्तु ते यन्द्विष्मोयश्च नो द्वेष्टि तमेषाञ्जम्भे
दध्मः ॥ ६४ ॥

---

५.

यजुः अ ३२ ॥ ओ३म् ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥ १ ॥
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् ॥ २ ॥
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ।
हिरण्यगर्भ इत्येष मा मा हि७सी
दित्येषा यस्मान्न जात इत्येषः ॥ ३ ॥
एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः॥४॥
यस्माज्जातं न पुरा किञ्चनैव य आबभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया स७रराणस्त्रीणि ज्योती७षि सचते स षोडशी॥५॥
येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ६ ॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ।
आपो ह यद् बृहती र्यश्चिदापः ॥ ७ ॥

वेन स्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम् ।
तस्मिन्निदꣳ सञ्च वि चैति सर्वꣳ स ओतः प्रोतश्च विभूः प्रजासु ॥८॥
प्र तद्वोचेदमृतं नु विद्वान् गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पिता सत् ॥९॥
स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥ १० ॥
परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्या त्मनात्मानमभि सं विवेश ॥ ११ ॥
परि द्यावा पृथिवी सद्य इत्वा परि लोकान् परिदिशः परिस्वः ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत् ॥ १२ ॥

---

महा॰ अनु॰ अ॰ १४ नमोस्तुते शाश्वत सर्वयोने ब्रह्माधिपं त्वामृषयो वदन्ति।
तपश्च सत्वञ्च रजस्तमश्च त्वामेव सत्यञ्च वदन्ति सन्तः ॥ १ ॥
त्वं वै ब्रह्मा च रुद्रश्च वरुणो ऽग्निर्मनुर्भवः ॥
धाता त्वष्टाविधाता च त्वं प्रभुः सर्वतो मुखः ॥ २ ॥
त्वत्तो जातानि भूतानि स्थावराणि चराणि च ॥
त्वया सृष्टमिदं कृत्स्नं त्रैलोक्यं सचराचरम् ॥ ३ ॥
यानीन्द्रियाणीह मनश्चकृत्स्नं ये वायवः सप्तचैवचाग्नयः ॥
ये देवसंस्था स्तवदेवताश्च तस्मात् परं त्वामृषयो वदन्ति॥ ४॥
वेदाश्च यज्ञाः सोमश्च दक्षिणा पावको हविः ॥
यज्ञोपगञ्च यत्किञ्चित् भगवां स्तदसंशयम् ॥ ५ ॥
इष्टंदत्तमधीतञ्च व्रतानि नियमाश्च ये ॥
ह्रीः कीर्त्तिः श्रीर्द्युतिस्तुष्टिः सिद्धिश्चैव तदर्पणी ॥ ६ ॥
कृतिर्विकारः प्रलयः प्रधानं बीजमव्ययम् ॥
मनसः परमायोनिः प्रभावश्चापि शाश्वतः ॥ ७ ॥
अव्यक्तः पवनोऽचिन्त्यः सहस्रांशु र्हिरण्मयः ॥
सादिर्गणानां सर्वेषां भवान् वै जीविताश्रयः ॥ ८ ॥
महानात्मा मतिर्ब्रह्मा विश्वः शम्भुः स्वयम्भुवः ॥

बुद्धिःप्रज्ञोपलब्धिश्च सम्वित्ख्यातिर्धृतिः स्मृतिः॥९॥
पर्य्यायवाचकैः शब्दैर्महानात्माविभाव्यते ॥
त्वां बुध्वा ब्राह्मणो विद्वान् प्रमोहं विनियच्छति॥१०॥
हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृपिष्टुतः ॥
सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरो मुखः ॥ ११ ॥
सर्वतः श्रुतिमांल्लोके सर्वमावृत्यतिष्ठसि ॥
फलं त्वमसि तिग्मांशोर्निमेषादिषु कर्मसु ॥ १२ ॥
त्वं वै प्रभार्चिः पुरुषः सर्वस्य हृदि संस्थितः ॥
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥१३॥
त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नाः संश्रिताश्च ये ॥
ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः॥१४॥
यस्त्वां ध्रुवं वेदमते गुहाशयं प्रभुं पुराणं पुरुषञ्चविग्रहम् ॥
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्यतिष्ठति॥ १५।
नमस्ते भगवन् देव नमस्ते भक्तवत्सल ॥
योगेश्वर नमस्ते ऽस्तु नमस्ते विश्वसम्भव ॥ १६ ॥
प्रसीद मम भक्तस्य दीनस्य कृपणस्य च ॥
अनैश्वर्य्येण युक्तस्य गतिर्भव सनातन ॥ १७ ॥

७.

उपमन्युरुवाच। ऋषिरासीत् कृते तात तण्डिरित्येव विश्रुतः ।
अनु १६ दशवर्ष सहस्राणि तेन देवः समाधिना ॥ १ ॥
आराधितो ऽभूद्भक्तेन तस्योदर्कं निशामय ।
स दृष्टवान् महादेव मस्तौषीच्च स्तवैर्विभुम ॥ २ ॥
इति तण्डि स्तपो योगात् परमात्मानमव्ययम् ।
चिन्तयित्वा महात्मान मिदमाह सुविस्मितः ॥ ३ ॥
यं पठन्ति सदा सांख्या श्चिन्तयन्ति च योगिनः ।
परं प्रधानं पुरुष मधिष्ठातार मीश्वरम् ॥ ४ ॥
उत्पत्तौ च विनाशे च कारणं यं विदुर्बुधाः ।
देवासुर मुनीनाञ्च परं यस्मान्न विद्यते ॥ ५ ॥

अजन्तमहमीशान मनादिनिधनं प्रभुम् ।
अत्यन्तसुखिनं देव मनघं शरणं व्रजे ॥ ६ ॥
एवं ब्रुवन्नेव तदा ददर्श तपसां निधिम् ।
तमव्यय मनौपम्य मचिन्त्यं शाश्वतं ध्रुवम् ॥ ७ ॥
निष्कलं सकलं ब्रह्म निर्गुणं गुणगोचरम् ।
योगिनां परमानन्दमक्षरं मोक्षसंज्ञितम् ॥ ८ ॥
मनोरिन्द्राग्निमरुतां विश्वस्य ब्रह्मणो गतिम् ॥
अग्राह्य मचलं शुद्धं बुद्धिग्राह्यं मनोमयम् ॥ ९ ॥
दुर्विज्ञेय मसंख्येयं दुष्प्राप मकृतात्मभिः ।
योनिं विश्वस्य जगत स्तमसः परतः परम् ॥ १० ॥
यः प्राणयन्त मात्मानं ज्योतिर्ज्जीवस्थितं मनः ।
तं देवं दर्शनाकांक्षी बहून् वर्षगणान्नृपिः ।
तपस्युग्रे स्थितो भूत्वा दृष्ट्वा तुष्टाव चेश्वरम् ॥ ११ ॥
तण्डिरुवाच ॥ पवित्राणां पवित्रस्त्वं गतिर्मतिमतां वर ।
अत्युग्रं तेजसां तेजस्तपसां परमं तपः ॥ १ ॥
विश्वावसो हिरण्याक्ष पुरुहूतनमस्कृत ।
भूरिकल्याणद विभो परंसत्य नमो ऽस्तुते ॥ २ ॥
जातीमरण भीरूणां यतीनां यततां विभो ।
निर्वाणद सहस्रांशो नमस्तेऽस्तु सुखाश्रय ॥ ३ ॥
त्वत्तः प्रवर्तते सर्वं त्वयि सर्वं प्रतिष्ठितम् ।
कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेवहि ॥ ४ ॥
तनवस्ते स्मृतास्तिस्रः पुराणज्ञैः सुरर्षिभिः ।
अधिपौरुषमध्यात्ममधिभूताधिदैवतम् ॥ ५ ॥
अधिलोकाधिविज्ञानमधियज्ञस्त्वमेवहि ।
त्वां विदित्वा त्मदेहस्थं दुर्विदं दैवतै रपि ॥
विद्वांसो यान्ति निर्मुक्ताः परंभावमनामयम् ॥ ६ ॥
अनिच्छतस्तव विभो जन्ममृत्यु रनेकशः ।
द्वारं त्वं स्वर्गमोक्षाणामाक्षेप्ता त्वं ददासि च ॥ ७ ॥

ब्रह्मा भवश्च विष्णुश्च स्कंदेन्द्रौ सविता यमः ।
वरुणेन्दुर्मनुर्धाता विधाता त्वं धनेश्वरः ॥ ८ ॥
इन्द्रियाणीन्द्रियार्थाश्च प्रकृतिभ्यः परं ध्रुवम् ।
विश्वा विश्वपरोभावश्चिन्त्याचिन्त्यस्त्वमेव हि ॥ ९ ॥
यच्चैनत् परमं ब्रह्म यच्चैतत् परमं पदम् ।
या गतिः सांख्ययोगानां स भवान्नात्र संशयः ॥ १० ॥
नूनमद्य कृतार्थाः स्मो नूनं प्राप्ताः सतां गतिम् ।
यां गतिं प्रार्थयन्तीह ज्ञाननिर्मलबुद्धयः ॥ ११ ॥
अहो मूढाःस्म सुचिरमिमं कालमचेतसः ।
यन्नविद्मः परं देवं शाश्वतं यं विदुर्बुधाः ॥ १२ ॥
सेयमासादिता साक्षात् त्वद्भक्तिर्जन्मभिर्मया ।
भक्तानुग्रहकृद्देवो यं ज्ञात्वाऽमृतमश्नुते ॥ १३ ॥
देवासुर मुनीनान्तु यच्च गुह्यं सनातनम् ।
गुहायां निहितं ब्रह्म दुर्विज्ञेयं मुनेरपि ॥ १४ ॥
स एष भगवान् देवः सर्वकृत् सर्वतोमुखः ।
सर्वात्मा सर्वदर्शी च सर्वगः सर्ववेदिता ॥ १५ ॥
देहकृद्देहभृद्देही देहभुग्देहिनां गतिः ।
प्राणकृत् प्राणभृत् प्राणी प्राणदः प्राणिनां गतिः ॥ १६ ॥
अध्यात्मगतिरिष्टानां ध्यानिनामात्मवेदिनाम् ।
अपुनर्मारकामानां या गतिः सोऽयमीश्वरः ॥ १७ ॥
अयञ्च सर्वभूतानां शुभाशुभगतिप्रदः ।
अयञ्च जन्ममरणे विदध्यात् सर्वजन्तुषु ॥
अयं संसिद्धिकामानामृषीणां सिद्धिदः प्रभुः ॥ १८ ॥
भूराद्यान् सर्वभुवनानुत्पाद्य स दिवौकसः ।
दधाति देवस्तनुभिरष्टाभिर्यो बिभर्त्ति च ॥ १९ ॥
अतः प्रवर्तते सर्वमस्मिन्सर्वं प्रतिष्ठितम् ।
अस्मिंश्च प्रलयं याति अयमेकः सनातनः ॥ २० ॥
अयं स सत्यकामानां सत्यलोकः परं सताम् ।
अपवर्गश्च मुक्तानां कैवल्यंःचात्मवेदिनाम् ॥ २१ ॥

तं त्वां देवासुरनरास्तत्त्वेन न विदुर्भवम् ।
मोहिताः खल्वनेनैव हृदिस्थेनाप्रकाशिना ॥ २२ ॥
ये चैनं प्रतिपद्यन्ते भक्तियोगेन भाविताः ।
तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ॥ २३ ॥
यं ज्ञात्वा न पुनर्जन्ममरणं चापि विद्यते ।
यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ॥ २४ ॥
यं लब्ध्वा परमं लाभं नाधिकं मन्यते बुधः ।
यां सूक्ष्मां परमां प्राप्तिं गच्छन्नव्ययमक्षयम् ॥ २६ ॥
यं सांख्या गुणतत्त्वज्ञाः सांख्यशास्त्रविशारदाः ।
सूक्ष्मज्ञानतराः सूक्ष्मं ज्ञात्वा मुच्यन्ति बन्धनैः ॥ ३० ॥
यञ्च वेदविदो वेद्यं वेदान्ते च प्रतिष्ठितम् ।
प्राणायामपरा नित्यं यं विशन्ति जपन्ति च ।
ओङ्काररथमारुह्य ते विशन्ति महेश्वरम् ॥ ३१ ॥
अयं स देवयानानामादित्यो द्वारमुच्यते ।
अयञ्च पितृयानानां चन्द्रमा द्वारमुच्यते ॥ ३२ ॥
एष काष्ठादिशश्चैव सम्वत्सर युगादि च ।
दिव्यादिव्यः परो लाभो अयने दक्षिणोत्तरे ॥ ३३ ॥
एनं प्रजापतिः पूर्वमाराध्यबहुभिस्तवैः ।
प्रजार्थं वरयामास नीललोहितसंज्ञितम् ॥ ३४ ॥
ऋग्भि र्यमनुशासन्ति तत्त्वे कर्मणि बह्वृचः ।
यजुर्भिर्यं त्रिधा वेद्यं जुह्वत्यध्वर्य्यवोऽध्वरे ॥ ३५ ॥
सामभिर्यञ्च गायन्ति सामगाः शुद्धबुद्धयः ।
ऋतं सत्यं परं ब्रह्म स्तुवन्त्याथर्वणा द्विजाः ॥ ३६ ॥
यज्ञस्य परमायोनिः पतिश्चायं परः स्मृतः ॥
रात्र्यहः श्रोत्रनयनः पक्षमासशिरोभुजः ।
ऋतुर्वीर्य्यस्तपोधैर्य्यो ह्रब्द गुह्योरुपादवान् ॥ ३७ ॥
मृत्युर्यमो हुताशश्च कालः संहारवेगवान् ।
कालस्य परमायोनिः कालश्चायं सनातनः ॥ ३८ ॥

चन्द्रादित्यौ सनक्षत्रौ ग्रहाश्च सह वायुना ।
ध्रुवः सप्तर्षयश्चैव भुवनाः सप्त एव च ॥ ३९ ॥
प्रधानं महदव्यक्तं विशेषान्तं सवैकृतम् ।
ब्रह्मादिस्तम्बपर्यन्तं भूतादिसदसच्च यत् ॥ ४० ॥
अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यः परः ।
अस्य देवस्य यद्भागं कृत्स्नं सम्परिवर्त्तते ॥ ४१ ॥
एतत् परममानन्दं यत्तच्छाश्वतमेव च ।
एषा गतिर्विरक्तानामेष भावः परः सताम् ॥ ४२ ॥
एतत्पदमनुद्विग्नमेतद्ब्रह्म सनातनम् ।
शास्त्रवेदाङ्गविदुषामेतद्ध्यानं परं पदम् ॥ ४३ ॥
इयं सा परमा काष्ठा इयं सा परमा कला ।
इयं सा परमा सिद्धिरियं सा परमा गतिः ॥ ४४ ॥
इयं सा परमा शान्ति रियं सा निर्वृतिः परा ।
यं प्राप्य कृतकृत्याः स्म इत्यमन्यन्त योगिनः ॥ ४५ ॥
इयं तुष्टि रियं सिद्धिरियं श्रुतिरियं स्मृतिः ।
अध्यात्मगतिरिष्टानां विदुषां प्राप्तिरव्यया ॥ ४६ ॥
यजतां कामयानानां मखैर्विपुलदक्षिणैः ।
या गतिर्यज्ञशीलानां सा गतिस्त्वं न संशयः ॥ ४७ ॥
सम्यग्योगजपैः शान्तिनियमैर्देहतापनैः ।
तप्यतां या गतिर्देव परमा सा गतिर्भवान् ॥ ४८ ॥
कर्मन्यासकृतानां च विरक्तानां ततस्ततः ।
या गतिर्ब्रह्मसदने सा गतिस्त्वं सनातन ॥ ४९ ॥
अपुनर्भावकामानां वैराग्ये वर्त्ततान्तु या ।
प्रकृतीनां लयानाञ्च सागतिस्त्वं सनातन ॥ ५० ॥
ज्ञानविज्ञानयुक्तानां निरूपाख्या निरञ्जना ।
कैवल्या या गतिर्देव परमा सा गतिर्भवान् ॥ ५१ ॥
वेदशास्त्रपुराणोक्ताः पञ्चैता गतयः स्मृताः ।
त्वत्प्रसादाद्धि लभ्यन्ते न लभ्यन्तेऽन्यथा विभो ॥ ५२ ॥

इति तण्डिस्तपोराशिस्तुष्टावेशानमात्मना ।
जगौ च परमं ब्रह्म यत्पुरालोककृज्जगौ ॥ ५३ ॥

---

११.

भीष्मस्तवराजः ॥

शा॰ श्र॰ ४७ जनमेजय उवाच । शरतल्पे शयानस्तु भरतानां पितामहः ।
कथमुत्सृष्टवान् देहं कञ्च योगमधारयत् ॥ १ ॥
वैशम्पायन उवाच । श्रृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः ।
भीष्मस्य कुरु शार्दूल देहोत्सर्गं महात्मनः ॥ २ ॥
निवृत्तमात्रे त्वयने उत्तरे वै दिवाकरे ।
समावेशयदात्मानमात्मन्येव समाहितः ॥ ३ ॥
विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः ।
शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ४ ॥
व्यासेन वेदविदुषा नारदेन सुरर्षिणा ।
देवस्थानेन वात्स्येन तथाऽश्मकसुमन्तुना ॥ ५ ॥
तथा जैमिनिना चैव पैलेन च महात्मना ।
शाण्डिल्यदेवराताभ्यां मैत्रेयेण च धीमता ॥ ६ ॥
असितेन वसिष्ठेन कौशिकेन महात्मना ।
हारीतलोमशाभ्याञ्च तथाऽऽत्रेयेण धीमता ॥ ७ ॥
बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः ।
सनत्कुमारः कपिलो वाल्मीकि स्तुम्बुरुः कुरुः ॥ ८ ॥
मौद्गल्यो भार्गवो रामस्तृणबिन्दुर्महामुनिः ।
पिप्पलादोऽथ वायुश्च संवर्त्तः पुलहः कठः ॥ ९ ॥
काश्यपश्च पुलस्त्यश्च क्रतु र्दक्षः पराशरः ।
मरीचिरङ्गिराः काश्यो गौतमो गालवो मुनिः ॥ १० ॥
धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णानुभौतिकः ।
उलूकः परमोविप्रो मार्कण्डेयो महामुनिः ॥ ११ ॥
भास्करिः पूरणः सूकृष्णः तः परमधार्मिकः ।

एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ॥
श्रद्धादमशमोपेतैर्वृतश्चन्द्र इव ग्रहैः ॥ १२ ॥
भीष्मः स पुरुषव्याघ्रः कर्मणा मनसा गिरा ।
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिः शुचिः ॥ १३ ॥
स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ॥ १४ ॥
कृताञ्जलिपुटो भूत्वा वाग्विदां प्रवरः प्रभुः ।
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ १५ ॥
ष्म उवाच । आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् ।
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः ॥ १६ ॥
शुचिं शुचिपदं हंसं तत् पदं परमेष्ठिनम् ।
युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये प्रजापतिम् ॥ १७ ॥
यस्मिन् विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥ १८ ॥
यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ॥ १९ ॥
हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।
सहस्रबाहुमुकुटं सहस्रवदनोज्ज्वलम् ॥ २० ॥
प्राहु र्नारायणं देवं यं विश्वस्य परायणम् ॥
अणीयसामणीयांसं स्थविष्ठञ्च स्थवीयसाम् ।
गरीयसां गरिष्ठञ्च श्रेष्ठञ्च श्रेयसामपि ॥ २१ ॥
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥ २२ ॥
चतुर्भिश्चतुरात्मानं सत्वस्थं सात्वतां पतिम् ।
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ॥ २३ ॥
यस्मिन्नित्यं तपस्तप्तं तदङ्गेष्वनुतिष्ठति ।
सर्वात्मा सर्ववित् सर्वः सर्वज्ञः सर्वभावनः ॥ २४ ॥
यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ।

इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि ॥ २५ ॥
अतिवाय्विन्द्रकर्माणमतिसूर्यातितेजसम् ।
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ॥ २६ ॥
पुराणपुरुषं प्रोक्तं ब्रह्म प्रोक्तं युगादिषु ।
क्षये सङ्कर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥ २७ ॥
यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ।
नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ॥ २८ ॥
यमाहुर्जगतः कोषं यस्मिन् सन्निहिताः प्रजाः ।
यस्मिन् लोकाः स्फुरन्तीमे जले शकुनयो यथा ॥ २९ ॥
ऋतमेकाक्षरं ब्रह्म यत्तत् सदसतोः परम् ।
अनादिमध्यपर्य्यन्तं न देवा नर्षयो विदुः ॥ ३० ॥
यं सुरासुरगन्धर्वाः सिद्धा ऋषिमहोरगाः ।
प्रयताः नित्यमर्च्चन्ति परमं दुःखभेषजम् ॥ ३१ ॥
अनादिनिधनं देवमात्मयोनिं सनातनम् ।
अप्रेक्ष्यमनभिज्ञेयं हरिं नारायणं प्रभुम् ॥ ३२ ॥
यं वै विश्वस्य कर्त्तारं जगतस्तस्थुषां पतिम् ।
वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् ॥ ३३ ॥
महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ३४ ॥
यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे ।
यं विप्रसंघा गायन्ति तस्मै वेदात्मने नमः ॥ ३५ ॥
यस्तनोति सतां सेतुमृतेनामृतयोनिना ।
धर्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ॥ ३६ ॥
यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥ ३७ ॥
यञ्च व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ।
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ३८ ॥
यं त्रिधात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।

प्राहुः सप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः ॥ ३९ ॥
यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ४० ॥
अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्ताः सन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥४१॥
यस्मात् सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः ।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ॥ ४२ ॥
यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः ।
इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्टात्मने नमः ॥ ४३ ॥
अकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ।
वैकुण्ठस्य च तद्रूपं तस्मै कार्यात्मने नमः ॥ ४४ ॥
परः कालात् परो यज्ञात् परात् परतरश्च यः ।
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥ ४५ ॥
अन्नपानेन्धनमयो रसप्राणविवर्धनः ।
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥ ४६ ॥
यं न देवा न गन्धर्वा न दैत्या न च दानवाः ।
तत्त्वतो हि विजानन्ति तस्मै सूक्ष्मात्मने नमः ॥ ४७ ॥
यो मोहयति भूतानि स्नेहपाशानुबन्धनैः ।
सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ ४८ ॥
आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम् ।
यं ज्ञानेनाभिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ ४९ ॥
अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ।
अनन्तपरिमेयाय तस्मै दिव्यात्मने नमः ॥ ५० ॥
सर्वभूतात्मभूताय भूतादिनिधनाय च ।
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ५१ ॥
यस्मिन् सर्वं यतः सर्वं यः सर्वः सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥ ५२ ॥
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव ।

अपवर्गस्तु भूतानां पञ्चानां परतः स्थितः ॥ ५३ ॥
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
नमस्ते दिक्षु सर्वासु त्वं हि सर्वमयो निधिः ॥ ५४ ॥
नमस्ते भगवन् विष्णो लोकानां प्रभवाप्यय ।
त्वं हि कर्त्ता हृषीकेश संहर्त्ता चापराजितः ॥ ५५ ॥
न हि पश्यामि ते भाव्यं दिव्यं हि त्रिषु वर्त्मसु ।
त्वान्तु पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ॥ ५६ ॥
दिव्यं ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा ।
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ॥ ५७ ॥
दिशो भुजा रविश्चक्षुर्वीर्य्यं शुक्रः प्रजापतिः ।
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ५८ ॥
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ ५९ ॥
एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ ६० ॥
कृष्णव्रताः कृष्णमनुस्मरन्तो रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते कृष्णदेहाः प्रविशन्ति कृष्णमाज्यं यथा मन्त्रहुतं हुताशे ॥ ६१ ॥
नमो नरकसन्त्रासरक्षामण्डलकारिणे ।
संसारनिम्नगावर्त्ततरिकाष्ठाय विष्णवे ॥ ६२ ॥
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ६३ ॥
प्राणकान्तारपाथेयं संसारोच्छेदभेषजम् ।
दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥ ६४ ॥
यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत् ।
यथा विष्णुमयं सर्वं पाप्मा मे नश्यतान्तथा ॥ ६५ ॥
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ६६ ॥
इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।

वाग्यज्ञेनार्च्चितो देवः प्रीयतां मे जनार्द्दनः ॥ ६७ ॥
नारायणपरं ब्रह्म नारायणपरं तपः।
नारायणपरो देवः सर्वं नारायणः सदा ॥ ६८ ॥
वैशम्पायन उ०। एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥ ६९ ॥

---

१२.

गजेन्द्रकृतस्तुतिः।

भाग० स्कं० ओंनमो भगवते तस्मै यत एतच्चिदात्मकम्।
८-अ० ३-पुरुषायादिबीजाय परेशायाभिधीमहि ॥ १ ॥
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम्।
यो ऽस्मात् परस्माच परस्तं प्रपद्ये स्वयंभुवम् ॥ २ ॥
यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम्।
अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ३ ॥
कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु।
तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ४ ॥
न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ५ ॥
दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः।
चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ॥ ६ ॥
न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा।
तथापि लोकाप्ययसंभवाय यः स्वमायया तान्यनुकालमृच्छति ॥७॥
तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये।
अरूपायोरुरूपाय नम आश्चर्य्यकर्मणे ॥ ८ ॥
नम आत्मप्रदीपाय साक्षिणे परमात्मने।
नमो गिरां विदूराय मनसश्चेतसामपि ॥ ९ ॥
सत्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता।

नमः कैवल्यनाथाय निर्वाणगुणसंविदे ॥ १० ॥
नमः शान्ताय घोराय मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ ११ ॥
क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १२ ॥
सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
असता च्छाययोक्ताय सदाभासाय ते नमः ॥ १३ ॥
नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय ॥
सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १४ ॥
गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि ॥ १५ ॥
मादृक्प्रपन्नपशुपाशविमोक्षणाय
मुक्ताय भूरिकरुणाय नमोऽलयाय ।
स्वांशेन सर्वतनुभृन्मनसि प्रतीत
प्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १६ ॥
आत्मात्मजाप्तगृहवित्तजनेषु सक्तै-
र्दुष्प्रापणाय गुणसङ्गविवर्जिताय ।
मुक्तात्मभिः स्वहृदये परिभाविताय
ज्ञानात्मने भगवते नम ईश्वराय ॥ १७ ॥
यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ।
किंत्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम्॥१८॥
एकान्तिनो यस्य न कंचनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ १९ ॥
तमक्षरं ब्रह्मपरं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ २० ॥
यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २१ ॥
यथार्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ।

तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः ॥ २२ ॥
स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः ।
नायं गुणः कर्म न सन्नचासन्निषेधशेषो जयतादशेषः ॥ २३ ॥
जिजीविषे नाहमिहामुया किं मन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम्॥२४॥

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २५ ॥
योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥ २६ ॥

नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥ २७ ॥

नायं वेद स्वमात्मानं यच्छक्त्याऽहंधिया हतम् ।
तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥ २८ ॥

---

६.

यजु· ओम् सह नाववतु सह नौ भुनक्तु सहवीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥
ओम् शान्तिः शान्तिः शान्तिः ॥

अथर्व· ओम् भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ओम् शान्तिः शान्तिः शान्तिः ॥

यजु· ओम् शं नो मित्रः शं वरुणः । शं नो भवत्वर्य्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।

ओम् शान्तिः शान्तिः शान्तिः ॥

सत्यं वदिष्यामि पञ्चच ।

हरिः ॐ । ऋचं व्वाचम्प्रपद्ये मनो यजुः प्प्रपद्ये साम
प्प्राणम्प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये । व्वागोजः सहौजो मयि
प्राणापानौ ॥ १ ॥ यन्मे छिद्रञ्चक्षुषो हृदयस्य मनसो
व्वाति तृणम्बृहस्पतिर्म्मे तद्दधातु ॥ शन्नो भवतु भुव-
नस्य यस्पति- ॥ २ ॥ भूर्भुवः स्वः । तत्सवितुर्व्वरे-
ण्यम्भर्गो देवस्य धीमहि ॥ धियो यो नः प्प्रचोदयात्॥३॥
कया न श्चित्रऽ आभुवदूती सदावृधः सखा । कया
शचिष्ठया व्वृता ॥ ४ ॥ कस्त्वा सत्यो मदानां मँ
हिष्ठो मत्सदन्धसः दृढाचिदारुजे व्वसु ॥ अभीषुणः
सखीनामविता जरितृणाम् ॥ शतम्भवा स्यूतिभिः ॥ ६ ॥
कया त्वन्नऽ ऊत्याभिप्प्रमन्दसे व्वृपन् ॥ कया स्तोतृभ्यऽ-
आभर ॥ ७ ॥ इन्द्रो व्विश्वस्य राजति । शन्नोऽ अस्तु
द्विपदे शञ्चतुष्पदे ॥ ८ ॥ शन्नो मित्त्रः शं वरुणः शन्नो
भवत्वर्य्यमा ॥ शन्न ऽइन्द्रो बृहस्पतिः शन्नो व्विष्णुरुरु-
क्रमः ॥ ८ ॥ शन्नो व्वातः पवताँ शन्नस्तपतु सूर्य्यः ॥
शन्नः कनिक्रदद्देवः पर्ज्जन्योऽ अभिवर्षतु ॥ १० ॥
अहानि शम्भवन्तु नः शँ रात्रीः प्प्रति धीयताम् ॥
शन्नऽ इन्द्राग्ग्नी भवतामवोभिः शन्नऽ इन्द्रा वरुणा
रात हव्या ॥ शन्नऽ इन्द्रा पूषणा व्वाजसा तौ शमिन्द्रा
सोमा सुविताय शंय्योः ॥ ११ ॥ शन्नो देवीरभिष्टयऽ-
आपो भवंतु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ १२ ॥
स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः
शर्म्म सप्प्रथाः ॥ १३ ॥ आपो हि ष्ठा मयोभुवस्ता नऽ-
ऊर्ज्जे दधातन ॥ महे रणाय चक्षसे ॥ १४ ॥ यो वः शिव-
तमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः
॥ १५ ॥ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥

आपो जनयथा च नः ॥ १६ ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ व्वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७ ॥ दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ॥ मित्रस्याहं चक्षुषा सर्व्वाणि भूतानि समीक्षे ॥ मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥ दृते दृꣳह मा ॥ ज्ज्योक्ते सन्दृशि जीव्यासं ज्ज्योक्ते सन्दृशि जीव्यासम् ॥ १९ ॥ नमस्ते हरसे शोचिषे नमस्तेऽ अस्त्वर्च्चिषे ॥ अन्यांस्तेऽ अस्मत्तपन्तु हेतयः पावको अस्मब्भ्यꣳ शिवो भव ॥ २० ॥ नमस्ते ऽअस्तु विद्युते नमस्ते स्तनयित्नवे ॥ नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ २१ ॥ यतो यतः समीहसे ततो नोऽ अभयं कुरु ॥ शन्नः कुरु प्रजाभ्यो ऽभयन्नः पशुभ्यः ॥ २२ ॥ सुमित्रिया न ऽआपऽ ओषधयः सन्तु दुर्म्मित्रियास्तस्मै सन्तु यो ऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्मः ॥ २३ ॥ तच्चक्षुर्द्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्ब्रवाम शरदः शतमदीनाऽः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥ २४ ॥

---

यजुः अ० २२। ओ३म् आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्व्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्य्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य व्वीरो जायतान्निकामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ २२ ॥

---

यजुः अ॰ ९। ओ३म् इमं देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते
ज्यैष्ठ्याय महते जान राज्यायेन्द्रस्येन्द्रियाय । इममुष्य
पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमो ऽस्माकं
ब्राह्मणानाꣳ राजा ॥ ४० ॥

अथर्ववेदः अ॰६सू॰३१ सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥ १ ॥
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ॥ २ ॥
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ३ ॥
येन देवा न वियन्ति नो च विद्विषते मिथः ।
तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥ ४ ॥
ज्यायस्वन्तश्चित्तिनो मा वियौष्ट संराधयन्तः सधुरा-
श्चरन्तः । अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान्
वः संमनसस्कृणोमि ॥ ५ ॥ समानी प्रपा सह वोऽन्नभागः
समाने योक्त्रे सह वो युनज्मि । सम्यञ्चोऽग्निं सपर्यतारा-
नाभिमिवाभितः ॥ ६ ॥ सध्रीचीनान् वः संमनसस्कृ-
णोम्येकश्नुष्टीन्त्संवननेन सर्वान् देवा इवामृतं रक्षमाणाः
सायं प्रातः सौमनसो वो अस्तु ॥ ७ ॥

---

ऋग्वेदः । १० । १२ । १९१. संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इलस्पदे समिध्यसे स नो वसून्याभर ॥ १ ॥
सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ २ ॥
समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभिमन्त्रये वः
समानेन वो हविषा जुहोमि ॥ ३ ॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ४ ॥

# सनातनधर्मसंग्रहः ॥

## अथ साधारणधर्माः ॥

---

यजुर्वेदः धर्मञ्चर । धर्मान्न प्रमदितव्यम् ॥

तैत्तिरीयारण्यक० धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं
१०।६३— प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति धर्मे
सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति ॥

मनु॰ अ॰ ४॰ धर्मं शनैः संचिनुयाद् वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ २३८ ॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारा न ज्ञाति र्धर्मस्तिष्ठति केवलः ॥ २३९ ॥
एकः प्रजायते जन्तु रेक एव प्रलीयते ।
एको ऽनुभुङ्क्ते सुकृत मेक एव च दुष्कृतम् ॥ २४० ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ २४१ ॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ २४२ ॥
धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥ २४३ ॥

---

२.

शुकं प्रति व्यासस्योपदेशः ॥

शां, ३२१·४ धर्मं पुत्र निषेवस्व सह तीक्ष्णौ हिमातपौ ।
क्षुत्पिपासे च कोपं च जय नित्यं जितेन्द्रियः ॥ १ ॥

इति० म० धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ।
न तत्सेवेत मेधावी नहि तद्धितं मुच्यते ॥ २ ॥
एक एव सुहृद् धर्मो निधने ऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ३ ॥
शा० ३२२।५ धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषा मनुयाताऽपि पीड्यते ॥ ४ ॥
इति० म० शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः ।
श्रुतवानपि मूर्खश्च यो धर्मविमुखो नरः ॥ ५ ॥
पुलका इव धान्येषु पुत्तिका इव पक्षिषु ।
मशका इव कीटेषु येषां धर्मो न कारणम् ॥ ६ ॥
धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा ।
धर्मः स्वर्गस्य सोपानं धर्मात् स्वर्गमवाप्यते ॥ ७ ॥
धर्मं चिन्तयमानोऽपि यदि प्राणै विमुच्यते ।
ततः स्वर्ग मवाप्नोति धर्मस्यैतत् फलं विदुः ॥ ८ ॥
संचिन्तित श्चाप्युपसेवित श्च
दृष्टः श्रुतः संकथितः स्तुतो वा ।
सर्वाणि पापान्यपहन्ति धर्मो
निशातमांसीव सहस्ररश्मिः ॥ १२ ॥
तस्मात् सर्वात्मना धर्मं नित्यं तात समाचर ।
मा धर्मविमुखः प्रेत्य तमस्यन्धे पतिष्यसि ॥ १३ ॥
शां० ३२।१२। ये संतुष्टाः श्रुतिपरा महात्मानो महाबलाः ।
धर्म्यं पन्थानमारूढा स्तानुपास्स्व पृच्छ च ॥ १४ ॥
शा० ३२२।१३। अवधार्य मतं तेषां बुधानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ १५ ॥
मनो हि सर्वभूतानां संतमोति शुभाशुभम् ।
अशुभेभ्यस्तदाक्षिप्य शुभेऽर्थे चावधारय ॥ १६ ॥
कामं क्रोधं भयं लोभं दंभं मोहं मदं तथा ।
निद्रां मत्सरमालस्यं नास्तिक्यं च परित्यज ॥ १७ ॥
शां० ३२२।५ सत्यमार्जवमक्रोध मनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च क्षमां चैवानुपालय ॥ १८ ॥

शां०३२२।८० सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।
तथात्मानं समाधत्स्व भ्रश्यसे न पुनर्यथा ॥ १९ ॥

---

## ३.

### धर्मो हि परमो लाभः ॥

युधि० उ० । धर्मे मर्थञ्च कामञ्च वेदाः शंसन्ति भारत ।
शां० २७० कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म उ० । अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनम् ।
कुण्डधारेण यत् प्रीत्या भक्तायोपकृतं पुरा ॥ २ ॥
अधनो ब्राह्मणः कश्चित् कामाद्धर्म्ममवैक्षत ।
यज्ञार्थं सततोऽर्थार्थी तपोऽतप्यत दारुणम् ॥ ३ ॥
स निश्चयमथो कृत्वा पूजयामास देवताः ।
भक्त्या न चैवाध्यगच्छद् धनं सम्पूज्य देवताः ॥ ४ ॥
ततश्चिन्तामनुप्राप्तः कतमं दैवतन्तु तत् ।
यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतम् ॥ ५ ॥
सोऽथ सौम्येन मनसा देवानुचरमन्तिके ।
प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ ६ ॥
दृष्ट्वैव तं महाबाहुं तस्य भक्तिरजायत ।
अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशम् ॥ ७ ॥
सन्निकृष्टश्च देवानां न चान्यैर्मानुषैर्वृतः ।
एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ॥ ८ ॥
ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि ।
बलिभिर्विविधाभिश्च पूजयामास तं द्विजः ॥ ९ ॥
ततस्त्वल्पेन कालेन तुष्टो जलधरस्तदा ।
तस्योपकारनियतां इमां वाचमुवाच ह ॥ १० ॥
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥
आशायास्तनयो धर्मः क्रोधोऽसूयासुतः स्मृतः ।
लोभः पुत्रो निकृत्यायाः कृतघ्नो नार्हति प्रजाम् ॥ १२ ॥

ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा ।
अपश्यत् सर्वभूतानि कुशेषु शयितस्तदा ॥ १३ ॥
शमेन तपसा चैव भक्त्याच निरुपस्कृतः ।
शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत ॥ १४ ॥
मणिभद्रं स तत्रस्थं देवतानां महाद्युतिम् ।
अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर ॥ १५ ॥
तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च ।
शुभैःकर्मभिरारब्धाः प्रच्छिन्दन्त्यशुभेषु च ॥ १६ ॥
पश्यतामथयक्षाणां कुण्डधारो महाद्युतिः ।
निपत्य पतितो भूमौ देवानां भरतर्षभ ॥ १७ ॥
ततस्तु देववचनान्मणिभद्रो महामनाः ।
उवाच पतितं भूमौ कुण्डधार किमिष्यते ॥ १८ ॥
कुण्ड० उ० । यदि देवाः प्रसन्ना मे भक्तोऽयंब्राह्मणो मम ।
अस्यानुग्रहमिच्छामि कृतं किञ्चित् सुखोदयम् ॥ १९ ॥
तत स्तं मणिभद्र स्तु पुनर्वचनमब्रवीत् ।
देवानामेव वचनात् कुण्डधारं महाद्युतिम् ॥ २० ॥
म०भ०उ० । उत्तिष्ठोत्तिष्ठ भद्रन्ते कृतकृत्यः सुखी भव ।
धनार्थी यदि विप्रोऽयं धनमस्मै प्रदीयताम् ॥२१॥
यावद् धनं प्रार्थयते ब्राह्मणोऽयं सखा तव ।
देवानां शासनात्तावदसंख्येयं ददाम्यहम् ॥ २२॥
विचार्य्य कुण्डधारस्तु मानुष्यं धनमध्रुवम् ।
ततोऽस्य प्रार्थयामास धर्मे बुद्धिं सुदुर्लभाम् ॥२३॥
कुण्ड० उ० । नाहं धनानि याचामि ब्राह्मणाय धनप्रद ।
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥२४॥
पृथिवीं रत्नपूर्णां वा महद्वा रत्नसञ्चयम् ।
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः ॥२५॥
दृ० स० । विद्यारूपं धनं शौर्य्यं कुलीनत्व मरोगता ।
राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ॥
धर्मेऽस्य रमतां बुद्धिर्धर्मञ्चैवोपजीवतु ।
धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः ॥ २६ ॥

म०भ० उ० । सदा धर्मफलं राज्यं सुखानि विविधानि च ।
फलान्येवायमश्नातु कायक्लेशविवर्जितः ॥ २७ ॥

भीष्मउ० । ततस्तदेव बहुशः कुण्डधारो महायशाः ।
अभ्यासमकरोद्धर्मे ततस्तुष्टास्य देवताः ॥ २८ ॥

म०भ०उ० । प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च ।
भविष्यत्येष धर्मात्मा धर्मचार्यास्यते मतिम् ॥ २९ ॥
ततः प्रीतो जलधरः कृतकार्य्यो युधिष्ठिर ।
ईप्सितं मनसोलब्ध्वा वरमन्यैः सुदुर्लभम् ॥ ३० ॥
ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः ।
पार्श्वतोऽभ्यासतो न्यस्तान्यथ निर्वेदमागतः ॥ ३१ ॥

भीष्म उ० । निर्वेदाद्देवतानाञ्च प्रसादात् स द्विजोत्तमः ।
वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ॥ ३३ ॥
देवतातिथिशेषेण फलमूलाशनो द्विजः ।
धर्मे चास्य महाराज दृढा बुद्धिरजायत ॥ ३४ ॥
धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्त्ततः ।
कालेन महता तस्य दिव्या दृष्टिरजायत ॥ ३७ ॥
तस्य बुद्धिः प्रादुरासीद् यदि दद्यामहं धनम् ।
तुष्टः कस्यचिदेवेह मिथ्यावाङ् न भवेन् मम ॥ ३८ ॥
ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः ।
भूयश्चाचिन्तयत् सिद्धो यत्परं सोऽभिमन्यते ॥ ३९ ॥
यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् ।
स भवेदचिराद्राजा न मिथ्यावाग् भवेन् मम ॥ ४० ॥
तस्य साक्षात् कुण्डधारो दर्शयामास भारत ।
ब्राह्मणस्यतपोयोगात् सौहृदेनाभिचोदितः ॥ ४१ ॥
समागम्य स तेनाथ पूजाञ्चक्रे यथाविधि ।
ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन् नृप ॥ ४२ ॥
ततोऽब्रवीत् कुण्डधारो दिव्यन्ते चक्षुरुत्तमम् ।
पश्य राज्ञां गतिं विप्र लोकांश्चैव तु चक्षुषा ॥ ४३ ॥
ततो राजसहस्राणि मग्नानि निरये तदा ।
दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ॥ ४४ ॥

कुण्ड० उ० । मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः ।
कृतं मया भवेत् किन्ते कश्च तेऽनुग्रहो भवेत् ॥ ४५ ॥
पश्य पश्य च भूयस्त्वं कामानिच्छेत् कथं नरः ।
स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः ॥ ४६ ॥
भीष्म उ० । ततोऽपश्यत् स कामञ्च क्रोधं लोभं भयं मदम् ।
निद्रां तन्द्रां तथालस्य मावृत्य पुरुषान् स्थितान् ॥४७ ॥
कुण्ड० उ० । एते लोकाः सुसंरुद्धा देवानां मानुषाद् भयम् ।
तथैव देववचनाद्विघ्नं कुर्वन्ति सर्वशः ॥ ४८ ॥
न देवैरननुज्ञातः कश्चिद्भवति धार्मिकः ।
एष शक्तोऽसि तपसा दातुं राज्यं धनानि च ॥ ४९ ॥
भीष्म उ० । ततः पपात शिरसा ब्राह्मण स्तोयधारिणे ।
उवाच चैनं धर्मात्मा महान्मेऽनुग्रहः कृतः ॥ ५० ॥
कामलोभानुबन्धेन पुरा ते यदसूयितम् ।
मया स्नेहमविज्ञाय तच्च मे क्षन्तुमर्हसि ॥ ५१ ॥
क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम् ।
संपरिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत ॥ ५२ ॥
ततः सर्वांस्तदा लोकान् ब्राह्मणो ऽनुचचार ह ।
कुण्डधारप्रसादेन तपसा सिद्धिमागतः ॥ ५३ ॥
विहायसा च गमनं तथा सङ्कल्पितार्थता ।
धर्माच्छक्त्या तथायोगाद् या चैव परमा गतिः ॥ ५४ ॥
देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः ।
धार्मिकान् पूजयन्तीह न धनाढ्यान् न कामिनः ॥ ५५ ॥
सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः ।
धने सुखकला काचिद्धर्मे तु परमं सुखम् ॥ ५६ ॥

---

४.

धर्मलक्षणनिरूपणम् ।

युधि० उ० इमे वै मानवाः सर्वे धर्मं प्रतिविशङ्किताः ।
शां० २६०। कोऽयं धर्मः कुतो धर्म स्तन्मे ब्रूहि पितामह ॥ १ ॥
धर्म स्त्वयमिहार्थः किं ममुत्रार्थोऽपि वा भवेत् ।
उभयार्थो हि वा धर्म स्तन्मे ब्रूहि पितामह ॥ २ ॥

भीष्म उ०। सदाचारः स्मृतिर्वेदा स्त्रिविधं धर्मलक्षणम् ।
चतुर्थमर्थ मित्याहुः कवयो धर्मलक्षणम् ॥ ३ ॥
अपि ह्युक्तानि धर्म्याणि व्यवस्यन्त्युत्तरावरे ।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ॥
उभयत्र सुखोदर्क इह चैव परत्र च ॥ ४ ॥
अलब्ध्वा निपुणं धर्मं पापः पापेन युज्यते ॥
नच पापकृतः पापान् मुच्यन्ते केचिदाऽऽपदि ॥ ५ ॥
अपापवादी भवति यथा भवति धर्मवित् ।
धर्मस्य निष्ठा त्वाचार स्तमेवाश्रित्य भोत्स्यसे ॥ ६ ॥
यथा ऽधर्मसमाविष्टो धनं गृह्णाति तस्करः ।
रमते निर्हरन् स्तेनः परवित्तमराजके ॥ ७ ॥
यदास्यतद्धरन्त्यन्ये तदा राजान मिच्छति ।
तदा तेषां स्पृहयते ये वै तुष्टाः स्वकै र्धनैः ॥ ८ ॥
अभीतः शुचि रभ्येति राजद्वार मशङ्कितः ।
नहि दुश्चरितं किञ्चि दन्तरात्मनि पश्यति ॥ ९ ॥
सत्यस्य वचनं साधु न सत्या द्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥ १०॥
अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक् पृथक् ।
अद्रोह मविसम्वादं प्रवर्त्तन्ते तदाश्रयाः ।
ते चेन्मिथो ऽधृतिं कुर्यु र्विनश्येयु रसंशयम् ॥११॥
न हर्त्तव्यं परधनमिति धर्मः सनातनः ।
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रकीर्त्तितम् ॥ १२॥
यदा नियतिदौर्बल्य मथैषामेव रोचते ।
नह्यत्यन्तं बलवन्तो भवन्ति सुखिनोपि वा ॥१३॥
तस्मादनार्जवे बुद्धि र्न कार्य्या ते कदाचन ।
असाधुभ्योऽस्य न भयं न चौरेभ्यो न राजतः॥१४॥
अकिञ्चित्कस्यचित्कुर्वन्निर्भयः शुचिरावसेत् ।
सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान्
बहुधाचरितंपाप मन्यत्रैवा नुपश्यति ॥ १५ ॥

मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा ।
नहि दुश्चरितं किञ्चि दात्मनोऽन्येषु पश्यति ॥१६॥
दानव्य मित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः सम्प्रवर्त्तितम् ॥१७॥
यदा नियतिकार्पण्य मथैषामेव रोचते ।
न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनो ऽपिवा ॥ १८॥
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
नतत्परेषु कुर्वीत जानन्नप्रिय मात्मनः ॥ १६ ॥
योऽन्यस्याः स्यादुपपतिः स कं किं वक्तुमर्हति ।
यदन्यस्य ततः कुर्य्यान्न मृष्येदिति मे मतिः ॥ २० ॥
जीवितं यः स्वयं चेच्छेत् कथं सोऽन्यं प्रघातयेत् ।
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत् ॥ २१ ॥
अतिरिक्तैः संविभजेद् भोगै रन्यान अकिञ्चनान् ।
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्त्तितम् ॥ २२ ॥
यस्मिंस्तु देवाः समये संतिष्ठेरं स्तथा भवेत् ।
अथवा लाभसमये स्थिति धर्मेऽपि शोभना ॥ २३ ॥
सर्वं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ २४ ॥
लोक संग्रहसयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मधर्मार्थनियतं सताञ्चरित मुत्तमम् ॥ २५ ॥
धर्मलक्षणमा ऽऽख्यात मेतत्ते कुरुसत्तम ।
तस्मादनार्जवे बुद्धि र्न ते कार्य्या कथञ्चन ॥ २६ ॥
राज० प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
अ० १०९ यः स्यात्प्रभव संयुक्तः सधर्म इति निश्चयः ॥ १० ॥
धारणाद्धर्ममित्याहु र्धर्मेण विधृताः प्रजाः ।
यः स्याद्धारण संयुक्तः स धर्म इति निश्चयः ॥ ११ ॥
अहिंसार्थाय भूतानां धर्म प्रवचनं कृतम् ।
यः स्यादहिंसया युक्तः स धर्म इति निश्चयः ॥ १२ ॥

कणादः। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः॥

५.

धर्ममूलम्।

मनु. अ. २. विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत॥ १॥
वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥ ६॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥१२॥

याज्ञवल्क्यः। श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्॥ ७॥
पुराण न्याय मीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ ३॥

मनु. अ. २ श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥१०॥

मनुः अ. २. यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥७॥
सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै॥८॥

प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥ देव पितृकार्य्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि । यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्म विचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता अयुक्ताः अलूक्षा धर्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता अयुक्ताः अलूक्षा धर्म्मकामाः स्युः यथा ते तेषु वर्त्तेरन् तथा तेषु वर्त्तेथाः । एष आदेशः एष उपदेशः एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । तानि त्वयोपास्यानि । विचिकित्सा वा स्यात्तेषु वर्त्तेरन् सप्त च ॥

---

सर्वे साधारण धर्मानाह ।

मनुः अ. ६ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ९२ ॥
चतुर्भिरपि चैवैतै र्नित्यमाश्रमिभि र्द्विजैः ।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥ ९३ ॥

विष्णुः क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आत्मव्रतमलाभित्वं देवतानां च पूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥

बृहस्पतिः दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्याऽस्पृहत्त्वं च सर्वसाधारणो विधिः ॥

वन.अ.३१०. यशः सत्यं दमः शौचं मार्दवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्य मित्येतास्तनवो मम ॥
अहिंसा समता क्षान्ति स्तपः शान्तिरमत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियोह्यसि सदा मम ॥

शां. रा. १२। शमो दमस्तथा धैर्यं सत्यं शौचमथार्जवम् ।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः ॥ १६ ॥
शां. रा. २१- अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ।
अद्रोहः सत्यवचनं संविभागो दया दमः ॥
प्रजनः स्वेषु दारेषु मार्दवं ह्री रचापलम् ॥ ११ ॥
एवं धर्मं प्रधानेष्टं मनुः स्वायंभुवो ऽब्रवीत् ।
तस्मादेतत् प्रयत्नेन कौन्तेय परिपालय ॥ १२ ॥
शां. म. ६० अक्रोधः सत्यवचनं संविभागः क्षमा दया ।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ।
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ॥ ७ ॥
शां. म. ३६- अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोध इज्या धर्मस्य लक्षणम् ॥ १० ॥
उद्यो. ३४- इज्या ऽध्ययन दानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥
युधि० अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किं निश्चितं भवेदत्र तन्मे ब्रूहि पितामह ॥
भीष्मः अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा ।
आर्जवश्चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥
मनु अ १० अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्ये ऽब्रवीन्मनुः ॥ ६३ ॥
वन. ८८- एष धर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ।
सनातनस्य धर्मस्य मूलमेतत् सनातनम् ॥ ३२ ॥
उमोवाच । भगवन् सर्वभूतेश सर्वधर्मभृतां वर ।
अनु. १४१ पिनाकपाणे वरद संशयो मे महानयम् ॥ २० ॥
धर्मः किं लक्षणः प्रोक्तः कथं वा चरितुं नरैः ।
शक्यो धर्ममविन्दद्भिः धर्मज्ञ वद मे प्रभो ॥ २२ ॥

महे० उ० । अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ।
शमो दानं यथाशक्ति गार्हस्थ्यो धर्म उत्तमः ॥ २५ ॥
परदारेष्वसंसक्तो न्यासस्त्रीपरिरक्षणम् ।
अदत्तादानविरमो मधुमांसस्य वर्जनम् ॥ २६ ॥
एष पञ्चविधो धर्मो बहुशाखः सुखोदयः ।
देहिभिर्धर्मपरमैः अर्तव्यो देह संभवः ॥ २७ ॥
अनु॰अ॰१२० त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम् ।
न द्रुह्येचैव दद्याच्च सत्यञ्चैवपरं वदेत् ॥ १० ॥
इति वेदोक्त मृषिभिः पुरस्तात्परिकल्पितम् ।
इदानीं चैव नः कृत्यं पुरस्ताच परिश्रुतम् ॥ ११ ॥
शां॰अ॰२८६ धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे ।
आनृशंस्यमहिंसा चाप्रमादः संविभागिता ॥
श्राद्धकर्मातिथेयंच सत्यमक्रोध एव च ।
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ॥
आत्मज्ञानं तितिक्षा च धर्माः साधारणो नृप ॥

---

८.

## कोऽयं सनातनधर्मः ॥

भाग॰-७-११
युधि० उ० भगवन् श्रोतुमिच्छामि नृणां धर्मं सनातनम् ।
वर्णाश्रमाचारयुतं यत् पुमान् विन्दते परम् ॥ २ ॥
भवान् प्रजापतेः साक्षा दात्मजः परमेष्ठिनः ।
सुतानां संमतो ब्रह्मंस्तपोयोगसमादिभिः ॥ ३ ॥
नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ।
करुणाः साधवः शान्ता त्वद्विधा न तथा परे ॥ ४ ॥
नारद उ० । नत्वा भगवतेऽजाय लोकानां धर्महेतवे ।
वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥
योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः ।
लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥
धर्ममूलं हि भगवान् सर्ववेदमयो हरिः ।
स्मृतं च तद्विदां राजन् येन चात्मा प्रसीदति ॥ ७ ॥

सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥८॥
सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवता बुद्धिः सुतरां नृषु पाण्डव ॥ १० ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥११॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन्सर्वात्मा येन तुष्यति ॥ १२॥

संस्काराः वर्णधर्माः आश्रमधर्माः स्त्रीणां ।
धर्माः विशेष धर्माः अपि संग्रहीष्यन्ते ॥

---

६.

अथ यमनियमभेदेन धर्मानाह ॥

पतञ्जलिः अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः ।
शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥
याज्ञवल्क्यः ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसास्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ ३१३ ॥
स्नानं मौनोपवासेज्या स्वाध्यायोपस्थनिग्रहः ।
नियमो गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥ ३१४ ॥
यम- नि० ॥ अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता ।
अस्तेयमिति पञ्चैते यमा वै परिकीर्तिताः ॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
अप्रमादश्च सततं पञ्चैते नियमाः स्मृताः ॥
भाग- ११-१९ । अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ॥
शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥

एते यमाः सनियमाः उभयोर्द्वादश स्मृताः ।
पुंसामुपासिता स्तात यथाकामं दुहंति हि ॥
मनु. अ. ४। यमान् सेवेत सततं न नित्यं नियमान् बुधः ।
यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ॥ २०४ ॥
भा. ११।१९ यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।
यम३०। यमो यम इति श्रुत्वा वृथाह्युद्विजते जनः ॥
आत्म तु यमितो येन तस्यात्मैव यमः स्मृतः ॥
स०। आनृशंस्यं क्षमा सत्यं अहिंसा दम आर्जवम् ।
दानं प्रसादो माधुर्यं मार्दवं च यमा दश ॥
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः ।
व्रतोपवासं मौनञ्च स्नानं च नियमा दश ॥
यमैश्च नियमैश्चैव यः करोत्यात्मसंयमम् ।
अदृष्टैवेह मां ब्रह्मन् ब्रह्मलोकं स गच्छति ॥

---

१०.

अथ सत्यम् ।

यजुः तै०उ० सत्यं वद । सत्यान्नप्रमदितव्यम् ।
सत्या न्नास्ति परोधर्मः ।
मुण्डको०प० सत्य मेव जयते नानृतम् सत्येन पन्था विततो देवय
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निध
सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक् ज्ञानेन
ब्रह्मचर्येण नित्यम् । अन्तः शरीरे ज्योति र्मयो
हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ।
प्रश्नोपनि० तेषा मेवैष ब्रह्म लोको येषान्तपो ब्रह्मचर्यं
येषु सत्यं प्रतिष्ठितम् ॥ तेषामसौ विरजो
ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥
तैति. १२.३ सत्यं परं परꣳसत्यꣳसत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदा-
चन सताꣳहि सत्यं तस्मात्सत्ये रमन्ते ॥
मनुः अ. ४। सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥ १३८ ॥

पद्मपुराण यथार्थकथनं यच्च सर्वलोकसुखप्रदम् ।
तत्सत्यमिति विज्ञेय मसत्यं तद्विपर्ययः ॥

---

यु० उ० । सत्यंधर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः ।
शां॰म॰१६२॰सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह ॥ १ ॥
सत्यं किं लक्षणं राजन् कथं वा तदवाप्यते ।
सत्यं प्राप्य भवेत् किञ्च कथं चैव तदुच्यताम् ॥ २ ॥
भीष्म उ० । चातुर्वर्ण्यस्य धर्माणां सङ्करो न प्रशस्यते ।
अविकारितमं सत्यं सर्ववर्णेषु भारत ॥ ३ ॥
सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ ४ ॥
सत्यं धर्म्मस्तपो योगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥ ५ ॥
आकारानिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणञ्च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥ ६ ॥
प्राप्यते च यथा सत्यं तच्च श्रोतुमिहार्हसि ।
सत्यं त्रयोदश विधं सर्वलोकेषु भारत ॥ ७ ॥
सत्यञ्च समता चैव दमश्चैव न संशयः ।
अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥ ८ ॥
त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ९ ॥
सत्यं नामाव्ययं नित्यमविकारि तथैव च ।
सर्वधर्माविरुद्धेन योगेनैतदवाप्यते ॥ १० ॥
आत्मनीष्टे तथानिष्टे रिपौ च समता तथा ।
इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा ॥ ११ ॥
दमो नान्यस्पृहा नित्यं गाम्भीर्य्यं धैर्य्यमेव च ।
अभयं रोगशमनं ज्ञानेनैतदवाप्यते ॥ १२ ॥
अमात्सर्यं बुधाः प्राहु र्दानधर्मे च संयमः ।
अवस्थिते च नित्यञ्च सत्येनामत्सरी भवेत् ॥ १३ ॥
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते सम्मतः साधुः साध्वाप्नोति च सत्यवाक् ॥ १४ ॥

कल्याणं कुरुते बाढं धीमान् न ग्लायते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तुधर्मादवाप्यते ॥ १५ ॥
धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते ।
लोकसंग्रहणार्थं वै सा तु धैर्य्येण लभ्यते ॥ १६ ॥
त्यागः स्नेहस्य यस्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ १७ ॥
आर्य्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतराग स्तथैव च ॥ १८ ॥
धृतिर्नाम सुखे दुःखे यया नाप्नोति विक्रियाम् ।
तां भजेत सदा प्राज्ञो य इच्छेद्धृतिमात्मनः ॥ १९ ॥
सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ २० ॥
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥ २१ ॥
एते त्रयोदशाकाराः पृथक् सत्यैकलक्षणाः ।
भजन्ते सत्य मेवेह बृंहयन्ते च भारत ॥ २२ ॥
नान्तः शक्यो गुणानाञ्च वक्तुं सत्यस्य पार्थिव ।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥ २३ ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
स्थिति र्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥ २४ ॥
उपैति सत्याद् दानं हि तथा यज्ञाः सदक्षिणाः ।
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ २५ ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २६ ॥



शां॰ मो॰ १९९। न यज्ञफलदानानि नियमास्तारयन्ति हि ।
यथा सत्यं परे लोके तथेह पुरुषर्षभ ॥ ६१ ॥
तपांसि यानि चीर्णानि चरिष्यन्ति च यत्तपः ।
शतैः शतसहस्रैश्च तैः सत्यान्न विशिष्यते ॥ ६२ ॥

सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः।
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ॥ ६३ ॥
सत्यं वेदेषु जागर्त्ति फलं सत्ये परं स्मृतम्।
सत्याद् धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ ६४ ॥
सत्यं वेदा स्तथाङ्गानि सत्यं विद्या स्तथा विधिः।
व्रतचर्य्या तथा सत्यमोङ्कारः सत्य मेव च ॥ ६५ ॥
प्राणिनां जननं सत्यं सत्यं सन्ततिरेव च।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥ ६६ ॥
सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः।
सत्यं यज्ञस्तपोवेदा स्तोभा मंत्राः सरस्वती ॥ ६७ ॥
तुलामारोपितोधर्मः सत्यं चैवेति नः श्रुतम्।
समकक्षां तुलयतो यतः सत्यं ततो ऽधिकम्।
यतो धर्म स्ततः सत्यं सर्वं सत्येन वर्द्धते ॥ ६८ ॥

वनपर्व॰ ७२। अश्वमेध सहस्रं च सत्यं च तुलया धृतम्।
नाभिजानामि यद्यस्य सत्यस्यार्धमवाप्नुयात् ॥१४ ॥

वनपर्व॰ ६३। चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः।
स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः ॥ १५ ॥

---

११.

समय प्रति पालनम्

भाग॰ ३॰ १८॰ १२ य: स्वां प्रतिज्ञां नातिपिपर्त्त्यसभ्यः ॥

आदि प॰। १३३ सत्यधर्मच्युतात् पुंसः क्रुद्धादाशीविषादिव।
अनास्तिको ऽप्युद्विजते जनः किं पुनरास्तिकः ॥ ९५ ॥
वरं कूपशताद् वापी वरं वापीशतात् क्रतुः।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद्वरम् ॥ १०१ ॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेध सहस्राद्धि सत्यमेव विशिष्यते ॥ १०२ ॥
सर्व वेदाधिगमनं सर्वतीर्थावगाहनम्।
सत्यं च वचनं राजन् समं वा स्यान्न वा समम् ॥ १०३ ॥

नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥ १०४ ॥
राजन् सत्यं परं ब्रह्म सत्यञ्च समयः परः ।
मा त्याक्षीः समयं राजन् सत्यं सङ्गतमस्तु ते ॥ १०५ ॥

---

१२.

हरिश्चन्द्रस्य सत्यपालनम्

अनु॰ अ॰ ९९८ सत्यं वदत माऽसत्यं सत्यं धर्मः सनातनः ।
हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥ १ ॥
मार्क॰ पु॰ अ॰ ७ हरिश्चन्द्रेति राजर्षिरासीत् त्रेतायुगे पुरा ।
धर्मात्मा पृथिवीपालः प्रोल्लसत्कीर्तिरुत्तमः ॥ १ ॥
न दुर्भिक्षं न च व्याधि र्नाकाले मरणं नृणाम् ।
नाधर्मरुचयः पौरास्तस्मिन् शासति पार्थिवे ॥ २ ॥
बभूवु र्न तथोन्मत्ता धनवीर्यतपोमदैः ।
नाजायन्त स्त्रियश्चैव काश्चिदप्राप्तयौवनाः ॥ ३ ॥
स कदाचिन् महाबाहुररण्ये ऽनुसरन् मृगम् ।
शुश्राव शब्दमसकृत् त्रायस्वेति च योषिताम् ॥ ४ ॥
स विहाय मृगं राजा मा भैषी रित्यभाषत ।
मयि शासति दुर्मेधाः कोऽय मन्यायवृत्तिमान् ॥ ५ ॥
तत्क्रन्दितानुसारी च सर्वारम्भविघातकृत् ।
एतस्मिन्नन्तरे रौद्रो विघ्नराट् समचिन्तयत् ॥ ६ ॥
विश्वामित्रो ऽयमतुलं तप आस्थाय वीर्यवान् ।
प्रागसिद्धा भवादीनां विद्याः साधयति व्रती ॥ ७ ॥
साध्यमानाः क्षमामौनचित्तसंयमिना ऽमुना ।
ता वै भयार्ताः क्रन्दन्ति कथं कार्यमिदं मया ॥ ८ ॥
तेजस्वी कौशिकश्रेष्ठो वयमस्य सुदुर्बलाः ।
क्रोशन्त्येतास्तथा भीताः दुष्पारं प्रतिभाति मे ॥ ९ ॥
अथवायं नृपः प्राप्तो माभैरितिवदन्मुहुः ।
इममेव प्रविश्याशु साधयिष्ये यथेप्सितम् ॥ १० ॥

इति संचिन्त्य रौद्रेण विघ्नराजेन वै ततः ।
तेनाविष्टो नृपः कोपादिदं वचनमब्रवीत् ॥ ११ ॥
कोऽयं बध्नाति वस्त्रान्ते पावकं पापकृन्नरः ।
बलोष्ण तेजसादीप्ते मयि पत्यावुपस्थिते ॥ १२ ॥
सोऽद्य मत्कार्मुकाक्षेपविदीपितदिगन्तरैः ।
शरैर्निर्भिन्नसर्वांगो दीर्घनिद्रां प्रवेक्ष्यति ॥ १३ ॥
विश्वामित्र स्ततः क्रुद्धः श्रुत्वा तन्नृपते र्वचः ।
क्रुद्धे चर्षिवरे तस्मिन् नेशुर्विद्याः क्षणेन ताः ॥ १४ ॥
स चापि राजा तं दृष्ट्वा विश्वामित्रं तपोनिधिम् ।
भीतः प्रावेपतात्यर्थं सहसाश्वत्थपर्णवत् ॥ १५ ॥
सुदुरात्मन्निति यदा मुनि स्तिष्ठेति चाब्रवीत् ।
ततः स राजा विनयात् प्रणिपत्याभ्यभाषत ॥ १६ ॥
भगवन्नेष धर्मो मे नापराधो मम प्रभो ।
न क्रोद्धुमर्हसि मुने निजधर्मरतस्य मे ॥ १७
दातव्यं रक्षितव्यं च धर्मज्ञेन महीक्षिता ।
चापश्चोद्यम्य योद्धव्यं धर्मशास्त्रानुसारतः ॥ १८ ॥
विश्वा० उ० दातव्यं कस्य के रक्ष्याः कै र्योद्धव्यञ्च ते नृप ।
क्षिप्रमेतत् समाचक्ष्व यद्यधर्मभयं तव ॥ १९ ॥
हरि० उ० दातव्यं विप्रमुख्येभ्यो ये चान्ये कृशवृत्तयः ।
रक्ष्या भीताः सदा युद्धं कर्तव्यं परिपन्थिभिः ॥ २० ॥
विश्वा० उ० यदि राजा भवान् सम्यग् राजधर्ममवेक्षते ।
निवेष्टुकामो विप्रोऽहं दीयतामिष्टदक्षिणा ॥ २१ ॥
एतद्राजा वचः श्रुत्वा प्रहृष्टेनान्तरात्मना ।
पुनर्जातमिवात्मानं मेने प्राह च कौशिकम् ॥ २२ ॥
उच्यतां भगवन् यत् ते दातव्यमविशंकितम् ।
दत्त मित्येव तद्विद्धि यद्यपि स्यात् सुदुर्लभम् ॥ २३ ॥
हिरण्यं वा सुवर्णं वा पुत्रः पत्नी कलेवरम् ।
भार्या राज्यं पुरं लक्ष्मी र्यदभिप्रेतमात्मनः ॥ २४ ॥
विश्वा० उ० राजन् प्रतिगृहीतोऽयं यस्तेदत्तः प्रतिग्रहः ।
प्रयच्छ प्रथमं ताव दक्षिणां राजसूयिकीम् ॥ २५ ॥

राजोवाच। अश्रमेणामपि दास्यामि दक्षिणां भवतो ह्यहम् ।
विपर्तां द्विजशार्दूल यस्तवेप्तः प्रतिग्रहः ॥ २६ ॥
विश्वा० उ० ससागरां धरामेतां सभूभृद्ग्रामपत्तनाम् ।
राज्यं च सकलं वीर रथाश्वगजसंकुलम् ॥ २७ ॥
कोष्ठागारञ्च कोशं च यच्चान्यद्विद्यते तव ।
विना भार्य्याञ्च पुत्रं च शरीरञ्च तवानघ ॥ २८ ॥
धर्मञ्च सर्वधर्मज्ञ यो यान्तमनुगच्छति ।
बहुना वा किमुक्तेन सर्वमेतत् प्रदीयताम् ॥ २९ ॥
प्रहृष्टेनैव मनसा सोऽविकारमुखो नृपः ।
तस्यर्षेर्वचनं श्रुत्वा तथेत्याह कृताञ्जलिः ॥ ३० ॥
तथेति चोक्त्वा कृत्वा च राजा गन्तुं प्रचक्रमे ।
स्वपत्न्या शैब्यया सार्द्धं बालकेनात्मजेन च ॥ ३५ ॥
व्रजतः ततो रुद्ध्वा पन्थानं प्राह तं नृपम् ।
क यास्यसीत्यदत्वा मे दक्षिणां राजसूयिकीम् ॥ ॥३६॥
हरिश्चन्द्र- मासेन तव विप्रर्षे प्रदास्ये दक्षिणाधनम् ।
सांप्रतं नास्ति मे वित्तमनुज्ञां दातुमर्हसि ॥ ४३ ॥
विश्वा० उ० गच्छ गच्छ नृपश्रेष्ठ स्वधर्ममनुपालय ।
शिवश्च तेऽध्वा भवतु मा सन्तु परिपन्थिनः ॥ ४४ ॥
अनुज्ञातः स गच्छेति जगाम वसुधाधिपः ।
पद्भ्यामनुचितागन्तुमन्वगच्छत तं प्रिया ॥ ४५ ॥
तं सभार्यं नृपश्रेष्ठं निर्यातं ससुतं पुरात् ।
दृष्ट्वा प्रचुक्रुशुः पौरा राज्ञश्चैवानुयायिनः ॥ ४६ ॥
हा नाथ किं जहास्यस्मान् नित्यार्त्तिपरिपीडितान् ।
त्वं धर्मतत्परो राजन् पौरानुग्रहकृत् तथा ॥ ४७ ॥
नयास्मानपि राजर्षे यदि धर्ममवेक्षसे ॥
यत्र त्वं तत्र हि वयं तत्सुखं यत्र वै भवान् ।
नगरं तद्भवान् यत्र स स्वर्गो यत्र नो नृपः ॥ ५५ ॥
इति पौरवचः श्रुत्वा राजा शोकपरिप्लुतः ।
अतिष्ठत् स तदा मार्गे तेषामेवानुकम्पया ॥ ५६ ॥

विश्वामित्रोऽपि तं दृष्ट्वा पौरवाक्याकुलीकृतम् ।
रोषामर्षविवृत्ताक्षः समागत्य वचोऽब्रवीत् ॥ ५७ ॥
धिक् त्वां दुष्टसमाचारमनृतं जिह्मभाषिणम् ।
मम राज्यं च दत्त्वा यः पुनः प्राकृष्टुमिच्छसि ॥ ५८ ॥
इत्युक्तः परुषं तेन गच्छामीति सवेपथुः ।
ब्रुवन्नेवं ययौ शीघ्रमाकर्षन् दयितां करे ॥ ५९ ॥

---

१३.

मार्कं० पु० ८ स गत्वा वसुधापालो दिव्यां वाराणसीं पुरीम् ।
नैषा मनुष्यभोग्येति शूलपाणेः परिग्रहः ॥ ४ ॥
जगाम पद्भ्यां दुःखार्त्तः सह पत्न्याऽनुकूलया ।
पुरीप्रवेशे ददृशे विश्वामित्रमुपस्थितम् ॥ ५ ॥
तं दृष्ट्वा समनुप्राप्तं विनयावनतोऽभवत् ।
प्राह चैवाञ्जलिं कृत्वा हरिश्चन्द्रो महामुनिम् ॥ ६ ॥
इमे प्राणाः सुतश्चायमियं पत्नी मुने मम ।
येन ते कृत्यमस्त्याशु तद् गृहाणार्घ्यमुत्तमम् ॥ ७ ॥
यद्वान्यत् कार्यमस्माभिस्तदनुज्ञातुमर्हसि ॥ ८ ॥
विश्वा० उ० । पूर्णः स मासो राजर्षे दीयतां मम दक्षिणा ।
राजसूयनिमित्तं हि स्मर्यते स्ववचो यदि ॥ ९ ॥
हरिश्चंद्र । ब्रह्मन्नद्यैव संपूर्णो मासोऽम्लानतपोधन ।
तिष्ठत्येतद्दिनार्धं यत्तत्प्रतीक्षस्व मा चिरम् ॥ १० ॥
विश्वा० उ० एवमस्तु महाराज आगमिष्याम्यहं पुनः ।
शापं तव प्रदास्यामि न चेदद्य प्रदास्यसि ॥ ११ ॥
इत्युक्त्वा प्रययौ विप्रो राजा चाचिन्तयत् तदा ।
कथमस्मै प्रदास्यामि दक्षिणा या प्रतिश्रुता ॥ १२ ॥
कुतः पुष्टानि मित्राणि कुतोऽर्थः सांप्रतं मम ।
प्रतिग्रहः प्रदुष्टो मे नाहं यायामधः कथम् ॥ १३ ॥
किंनु प्राणान् विमुञ्चामि कां दिशं याम्यकिञ्चनः ।
यदि नाशं गमिष्यामि ह्यप्रदाय प्रतिश्रुतम् ॥ १४ ॥

ब्रह्मस्वहृत् कृमिः पापो भविष्याम्यधमाधमः ।
अथवा प्रेष्यतां यास्ये वरमेवात्मविक्रयः ॥ १५ ॥
राजानं व्याकुलं दीनं चिन्तयानमधोमुखम् ।
प्रत्युवाच तदा पत्नी बाष्पगद्गदया गिरा ॥ १६ ॥
पत्नी उ० । त्यज चिन्तां महाराज स्वसत्यमनुपालय ।
श्मशानवद् वर्जनीयो नरः सत्यबहिष्कृतः ॥ १७ ॥
नातः परतरं धर्मं वदंति पुरुषस्य तु ।
यादृशं पुरुषव्याघ्र स्वसत्यपरिपालनम् ॥ १८ ॥
अग्निहोत्रमधीतं वा दानाद्याश्चाखिलाः क्रियाः ।
भजन्ते तस्य वैफल्यं यस्य वाक्यमकारणम् ॥ १९ ॥
सत्यमत्यंतमुदितं धर्मशास्त्रेषु धीमताम् ।
तारणायानृतंतद्वत्पातनाया ऽकृतात्मनाम् ॥ २० ॥
सप्ताश्वमेधानाहृत्य राजसूयं च पार्थिवः ।
कृति र्नाम च्युतः स्वर्गादसत्यवचनात् सकृत् ॥ २१ ॥
राजन् जातमपत्यं मे इत्युक्त्वा प्ररुरोद ह ।
बाष्पांबुप्लुतनेत्रान्ता मुवाचेदं महीपतिः ॥ २२ ॥
हरिश्चंद्र उ० विमुञ्चभद्रे सन्ताप मयं तिष्ठति बालकः ।
उच्यतां वक्तुकामासि यद्वाक्यं गजगामिनि ॥ २३ ॥
पत्न्युवाच । राजन् जातमपत्यं मे सतां पुत्रफलाः स्त्रियः ।
स मां प्रदाय वित्तेन देहि विप्राय दक्षिणाम् ॥ २४ ॥
एतत् वाक्यमुपश्रुत्य ययौ मोहं महीपतिः ।
प्रतिलभ्य च सञ्ज्ञां स विललापातिदुःखितः ॥ २५ ॥
हा हा कथं त्वया शक्यं वक्तुमेतत् शुचिस्मिते ।
दुर्वाच्यमेतद्वचनं कर्त्तुं शक्नोम्यहं कथम् ॥ २७ ॥
इत्युक्त्वा स नरश्रेष्ठो धिग्धिगित्यसकृद् ब्रुवन् ।
निपपात महीपृष्ठे मूर्छयाभिपरिप्लुतः ॥ २८ ॥
शयानं भुवि तं दृष्ट्वा हरिश्चन्द्रं महीपतिम् ।
उवाचेदं सकरुणं राजपत्नी सुदुःखिता ॥ २९ ॥
पत्न्युवाच । हा महाराज कस्येद मपध्यानमुपस्थितम् ।
यत्त्वं निपतितो भूमौ राङ्कवास्तरणोचितः ॥ ३० ॥

इत्युक्त्वा सापि सुश्रोणी मूर्छिता निपपात ह ।
भर्त्तृदुःख महाभारेणासह्येन निपीडिता ॥ ३३ ॥
एतस्मिन्नन्तरे प्राप्तो विश्वामित्रो महातपाः ।
दृष्ट्वा तु तं हरिश्चन्द्रं पतितं भुवि मूर्छितम् ॥
स वारिणा समभ्युक्ष्य राजानमिदमब्रवीत् ॥ ३६ ॥
उत्तिष्ठोत्तिष्ठ राजेन्द्र तां ददस्वेष्टदक्षिणाम् ॥
ऋणं धारयतो दुःखमहन्यहनि वर्द्धते ॥ ३७ ॥
आप्यायमानः स तदा हिमशीतेन वारिणा ।
अवाप्य चेतनां राजा विश्वामित्रमवेक्ष्य च ।
पुनर्मोहं समापेदे स च क्रोधं ययौ मुनिः ॥ ३९ ॥
स समाश्वास्यराजानं वाक्यमाह द्विजोत्तमः ।
दीयतां दक्षिणा सा मे यदिधर्म मवेक्षसे ॥ ४० ॥
सत्येनार्कः प्रतपति सत्ये तिष्ठति मेदिनी ।
सत्यञ्चोक्तं परो धर्मः स्वर्गः सत्ये प्रतिष्ठितः ॥ ४१ ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ४२ ॥
अथवा किं ममैतेन साम्ना प्रोक्तेन कारणम् ।
अनार्य्ये पापसंकल्पे क्रूरे चानृतवादिनि ॥ ४३ ॥
त्वयि राज्ञि प्रभवति सद्भावः श्रूयतामयम् ।
अद्य मे दक्षिणां राजन्नदास्यति भवान् यदि ॥ ४४ ॥
अस्ताचलं प्रयातेऽर्के शप्स्यामि त्वां ततो ध्रुवम् ।
इत्युक्त्वा स ययौ विप्रो राजाचासीद्भयातुरः ॥ ४५ ॥
कान्दिग्भूतोऽधनो निःस्वो नृशंसधनिनार्दितः ।
भार्य्यास्य भूयः प्राहेदं क्रियतां वचनं मम ॥
मा शापानल निर्दग्धः पञ्चत्वमुपयास्यसि ॥ ४६ ॥
स तथा चोद्यमानस्तु राजा पत्न्या पुनः पुनः ॥
प्राह भद्रे करोम्येष विक्रयं तव निर्घृणः । ४७ ॥
नृशंसैरपि यत्कर्त्तुं नशक्यं तत्करोम्यहम् ॥
यदि मे शक्यते वाणी वक्तुमीदृक् सुदुर्वचः ॥ ४८ ॥

एवमुक्त्वा ततो भार्य्यां गत्वा नगर मातुरः ।
बाष्पापिहितकण्ठाक्ष स्ततोवचन मब्रवीत् ॥ ४९ ॥
राजोवाच। भो भो नागरिकाः सर्वे शृणुध्वं वचनं मम ।
किं मां पृच्छथ कस्त्वं भो नृशंसोऽहममानुषः ॥ ५० ॥
राक्षसो वाति कठिन स्ततः पापतरोऽपिवा ।
विक्रेतुं दयितां प्राप्तो यो न प्राणां स्त्यजाम्यहम् ॥५१॥
यदि-वः कस्यचित् कार्य्यं दास्या प्राणेष्टया मम ।
स ब्रवीतु त्वरायुक्तो यावत्सन्धारयाम्यहम् ॥ ५२ ॥
अथ वृद्धो द्विजः कश्चिदागत्याह नराधिपम् ।
समर्पयस्व मे दासीमहं क्रेता धनप्रदः ॥ ५३ ॥
अस्ति मे वित्तमस्तोकं सुकुमारी च मे प्रिया ।
गृहकर्म न शक्नोति कर्त्तुमस्मात् प्रयच्छ मे ॥ ५४ ॥
कर्म्मण्यतावयोरूपशीलानां तव योषितः ।
अनुरूपमिदं वित्तं गृहाणार्पय मे ऽबलाम् ॥ ५५ ॥
एवमुक्तस्य विप्रेण हरिश्चन्द्रस्य भूपतेः ॥
व्यदीर्यत मनो दुःखान्न चैनं किञ्चिदब्रवीत् ॥ ५६ ॥
ततः स विप्रो नृपते र्वल्कलान्ते दृढं धनम् ।
बध्वाकेशेष्वथादाय नृपपत्नीमकर्षयत् ॥ ५७ ॥
रुरोद रोहिताश्वोऽपि दृष्ट्वा कृष्टान्तु मातरम् ।
हस्तेन वस्त्रमाकर्षन् काकपक्षधरः शिशुः ॥ ५८ ॥
पत्न्युवाच। मुञ्चार्य मुञ्च तावन्मां यावत् पश्याम्यहं शिशुम् ।
दुर्लभं दर्शनं तात पुनरस्य भविष्यति ॥ ५९ ॥
पश्यैहि वत्स मामेवं मातरं दास्यतां गताम् ।
मां मा स्प्राक्षी राजपुत्र अस्पृश्याहं तवाधुना ॥ ६० ॥
ततः स बालः सहसा दृष्ट्वा कृष्टान्तु मातरम् ।
समभ्यधावदम्बेति रुदन् सास्राविलेक्षणः ॥ ६१ ॥
तमागतं द्विजः क्रेता बालमभ्याहनत् पदा ।
वदंस्तथापि सोऽम्बेति नैवामुञ्चत मातरम् ॥ ६२ ॥

राजपत्नी-उ०। प्रसादं कुरु मे नाथ क्रीणीष्वेमञ्च बालकम्।
क्रीतापि नाहं भवतो विनैनं कार्यसाधिका ॥ ६३ ॥
इत्थं ममाल्पभाग्यायाः प्रसादसुमुखो भव।
मां संयोजय बालेन वत्सेनेव पयस्विनीम् ॥ ६४ ॥
ब्राह्मण उ०। गृह्यतां वित्तमेतत्ते दीयतां बालको मम।
स्त्री पुंसोर्धर्मशास्त्रज्ञैः कृतमेव हि वेतनम्।
शतं सहस्रं लक्षञ्च कोटि मूल्यं तथापरैः ॥ ६५ ॥
तथैव तस्य तद्वित्तं बद्ध्वोत्तरपटे ततः।
प्रगृह्य बालकं मात्रा सहैकस्थमबन्धयत् ॥ ६६ ॥
नीयमानौ तु तौ दृष्ट्वा भार्य्यां पुत्रौ स पार्थिवः।
विललाप सुदुःखार्त्तो निःश्वस्योष्णं पुनः पुनः ॥ ६७ ॥
यां न वायुर्नचादित्यो नेन्दुर्न च पृथग्जनः।
दृष्टवन्तः पुरा पत्नी सेयं दासीत्वमागता ॥ ६८ ॥
सूर्यवंशप्रसूतोऽयं सुकुमारकराङ्गुलिः।
संप्राप्तो विक्रयं बालो धिङ्मामस्तु सुदुर्मतिम् ॥ ६९ ॥
हा प्रिये हा शिशो वत्स ममानार्य्यस्य दुर्नयैः।
दैवाधीनां दशां प्राप्तो न मृतोऽस्मि तथापि धिक् ॥ ७० ॥
एवं विलपतो राज्ञः स विप्रो ऽन्तरधीयत।
वृक्षगेहादिभिस्तुङ्गैस्तावादाय त्वरान्वितः ॥ ७१ ॥
विश्वामित्रस्ततः प्राप्तो नृपं वित्तमयाचत।
तस्मै समर्पयामास हरिश्चन्द्रोऽपि तद्धनम् ॥ ७२ ॥
तद्वित्तं स्तोकमालोक्य दारविक्रयसम्भवम्।
शोकाभिभूतं राजानं कुपितः कौशिकोऽब्रवीत् ॥ ७३ ॥
क्षत्रबन्धो ममेमां त्वं सदृशीं यज्ञदक्षिणाम्।
मन्यसे यदि तत्क्षिप्रं पश्य त्वं मे बलं परम् ॥ ७४ ॥
तपसोऽत्र सुतप्तस्य ब्राह्मण्यस्यामलस्य च।
मत्प्रभावस्य चोग्रस्य शुद्धस्याध्ययनस्य च ॥ ७५ ॥
हरि० उ० अन्यां दास्यामि भगवन् कालः कश्चित् प्रतीक्ष्यताम्।
सांप्रतं नास्ति विक्रीता पत्नी पुत्रश्च बालकः ॥ ७६ ॥

विश्वा० उ० चतुर्भागः स्थितो योऽयं दिवसस्य नराधिप ।
एष एव प्रतीक्ष्यो मे वक्तव्यं नोत्तरं त्वया ॥ ७७ ॥
तमेव मुक्त्वा राजेन्द्रं निष्ठुरं निर्घृणं वचः ।
तदादाय धनं तूर्णं कुपितः कौशिको ययौ ॥ ७८ ॥
विश्वामित्रे गते राजा भयशोकाब्धिमध्यगः ।
सर्वाकारं विनिश्चित्य प्रोवाचोच्चैरधोमुखः ॥ ७९ ॥
वित्तक्रीतेन यो ह्यर्थी मया प्रेष्येण मानवः ।
स ब्रवीतु त्वरायुक्तो यावत्तपति भास्करः ॥ ८० ॥
अथा जगाम त्वरितो धर्मश्चाण्डाल रूपधृक् ।
दुर्गन्धो विकृतो रूक्षः श्मश्रुलो दन्तुरो घृणी ॥ ८१ ॥
कृष्णो लम्बोदरः पिङ्गः रूक्षाक्षः परुषाक्षरः ।
गृहीतपक्षिपुञ्जश्च शवमाल्यै रलङ्कृतः ॥ ८२ ॥
कपालहस्तो दीर्घास्यो भैरवोऽति वदन् मुहुः ।
श्वगणाभिवृतो घोरो यष्टि हस्तो निराकृतिः ॥ ८३ ॥
चाण्डा० उ० अहमर्थी त्वया शीघ्रं कथयस्वाऽऽत्मवेतनम् ।
स्तोकेन बहुना वापि येन वै लभ्यते भवान् ॥ ८४ ॥
तं तादृश मथालक्ष्य क्रूरदृष्टिं सुनिष्ठुरम् ।
वदन्त मति दुःशीलं कस्त्वमित्याह पार्थिवः ॥ ८५ ॥
चाण्डा० उ० चण्डालोऽहमिहाख्यातः प्रवीरेति पुरोत्तमे ।
विख्यातो वध्य वधको मृतकम्बलहारकः ॥ ८६ ॥
हरि० उ० नाहं चाण्डालदासत्वमिच्छेयं सुविगर्हितम् ।
वरं शापाग्निना दग्धो न चाण्डालवशं गतः ॥ ८७ ॥
तस्यैवं वदतः प्राप्तो विश्वामित्रस्तपोनिधिः ।
कोपामर्षविवृत्ताक्षः प्राह चेदं नराधिपम् ॥ ८८ ॥
विश्वा० उ० चाण्डालोऽयमनल्पं ते दातुं वित्तमुपस्थितः ।
कस्मान्न दीयते मह्यमशेषा यज्ञदक्षिणा ॥ ८९ ॥
हरिश्चन्द्र उ० भगवन् सूर्यवंशोत्थमात्मनं वेद्मि कौशिक ।
कथं चण्डालदासत्वं गमिष्ये वित्तकामुकः ॥ ९० ॥
विश्वा० उ० यदि चण्डालवित्तं त्वमात्मविक्रयजं मम ।
न प्रदास्यसि कालेन शप्स्यामि त्वा मसंशयम् ॥ ९१ ॥

हरिश्चन्द्रस्ततो राजा चिन्तावस्थितजीवितः ।
प्रसीदेति वदन् पादौ नृपेर्जग्राह विह्वलः ॥ ९२ ॥
दासोऽस्म्यार्त्तोऽस्मिभीतोऽस्मि त्वद्भक्तश्च विशेषतः ।
कुरु प्रसादं विप्रर्षे कष्टश्चण्डालसङ्करः ॥ ९३ ॥
भवेयं वित्तशेषेण सर्वकर्मकरो वशः ।
तवैव मुनिशार्दूल प्रेष्यश्चित्तानुवर्त्तकः ॥ ९४ ॥
विश्वा० उ० यदि प्रेष्यो मम भवान् चण्डालाय ततो मया ।
दासभाव मनुप्राप्तो दत्तो वित्तार्बुदेन वै ॥ ९५ ॥
एवमुक्ते तदा तेन श्वपाको हृष्टमानसः ।
विश्वामित्राय तद्द्रव्यं दत्त्वा बध्वा नरेश्वरम् ॥ ९६ ॥
दण्डप्रभावसंभ्रान्तमतीव व्याकुलेन्द्रियम् ।
इष्टबन्धुवियोगार्त्तमनयन्निजपत्तनम् ॥ ९७ ॥
हरिश्चन्द्रस्ततोराजा वसंश्चाण्डालपत्तने ।
प्रातर्मध्यान्हसमये सायञ्चैत दगायत ॥ ९८ ॥
बाला दीनमुखी दृष्ट्वा बालं दीनमुखं पुरः ।
मां स्मरत्यसुखाविष्टा मोचयिष्यति नौ नृपः ॥ ९९ ॥
उपात्तवित्तो विप्राय दत्वा वित्तमतोऽधिकम् ।
न सा मां मृगशावाक्षी वेत्ति पापतरं कृतम् ॥ १०० ॥
राज्यनाशः सुहृत्त्यागो भार्यातनयविक्रयः ।
प्राप्ता चाण्डालता चेयं महो दुःख परम्परा ॥ १०१ ॥
एवं स निवसन्नित्यं सस्मार दयितं सुतम् ।
भार्य्यां चात्मसमाविष्टां हृतसर्वस्व आतुरः ॥ १०२ ॥
कस्यचित्त्वथकालस्य मृतचेला पहारकः ।
हरिश्चन्द्रो ऽभवद्राजा श्मशाने तद्वशानुगः ॥ १०३ ॥
चाण्डालेनानुशिष्टश्च मृतचैलापहारिणा ।
शवागमनमन्विच्छन्निह तिष्ठद् दिवानिशम् ॥ १०४ ॥
इदं राज्ञोऽपि देयञ्च षड् भागन्तु शवं प्रति ।
त्रयस्तु मम भागा स्यु र्द्वौ भागौ तव वेतनम् ॥ १०५ ॥
इति प्रति समादिष्टो जगाम शवमन्दिरम् ।
शवमौलिसमाकीर्णं दुर्गन्धं बहुधूमकम् ॥ १०६ ॥

स राजा तत्र संप्राप्तो दुःखितः शोचनोद्यतः ।
हा भृत्या मन्त्रिणो विप्राः क तद्राज्यं विधे गतम् ॥ ११९ ॥
हा शैब्ये पुत्रहा बाल मां त्यक्त्वा मन्दभाग्यकम् ।
विश्वामित्रस्य दोषेण गताः कुत्रापि ते मम ॥ १२० ॥
इत्येवं चिन्तयंस्तत्र चाण्डालोक्तं पुनः पुनः ।
मलिनो रूक्षसर्वाङ्गः केशवान् गन्धवान् ध्वजी ॥ १२१ ॥
लकुटी कालकल्पश्च धावंश्चापि ततस्ततः ।
अस्मिन् शव इदं मूल्यं प्राप्ते प्राप्स्यामि चाप्युत ॥ १२२ ॥
इदं मम इदं राज्ञे मुख्यचण्डालके त्विदम् ।
इति धावन् दिशो राजा जीवन् योन्यन्तरं गतः ॥१२३॥
जीर्णकर्पटसुग्रन्थिकृतकन्थापरिग्रहः ।
चिताभस्मरजोलिप्तमुखबाहूदराङ्घ्रिकः ॥ १२४ ॥
तदीयमाल्य संश्लेपकृतमस्तकमण्डनः ।
न रात्रौ न दिवा शेते हा हेति प्रवदन् मुहुः ।
एवं द्वादश मासास्तु नीताः शतसमोपमाः ॥ १२६ ॥
स कदाचिन्नृपश्रेष्ठः श्रान्तो बन्धुवियोगवान् ।
निद्राभिभूतो रूक्षाङ्गो निश्चेष्टः सुप्त एव च ।
तत्रापि शयनीये स दृष्टवानद्भुतं महत् ॥ १२८ ॥
स्वप्ने दुःखं महद्दृष्टं यस्यान्तो नोपलभ्यते ।
स्वप्ने दृष्टं मया यत्तु किन्तु मे द्वादशोः समाः ॥ १६४ ॥
गतेत्यपृच्छत्तत्रस्थान् पुक्कसांस्तु ससंभ्रमात् ।
नेत्यूचुः केऽपि तत्रस्था एवमेवापरेऽब्रुवन् ॥ १६५ ॥
श्रुत्वा दुःखी तदा राजा देवान् शरणमीयिवान् ।
स्वस्ति कुर्वन्तु मे देवाः शैब्याया बालकस्य च ॥ १६६ ॥
नमो धर्माय महते नमः कृष्णाय वेधसे ।
परापराय शुद्धाय पुराणायाव्ययाय च ॥ १६७ ॥
नमो बृहस्पते तुभ्यं नमस्ते वासवाय च ।
एवमुक्त्वा स राजा तु युक्तः पुक्कसकर्मणि ॥ १६८ ॥
शवानां मूल्यकरणे पुनर्नष्टस्मृतिर्यथा ।
मलिनो जटिलः कृष्णो लकुटी विह्वलो नृपः ॥ १६९ ॥

नैव पुत्रो न भार्या तु तस्य वै स्मृतिगोचरे ।
नष्टोत्साहो राज्यनाशात् श्मशाने निवसंस्तदा ॥ १७० ॥
अथाजगाम स्वसुतं मृतमादाय लापिनी ।
भार्य्या तस्य नरेन्द्रस्य सर्पदष्टं हि बालकम् ॥ १७१ ॥
हा वत्स हा पुत्र शिशो इत्येवं वदती मुहुः ।
कृशा विवर्णा विमना पांशुध्वस्तशिरोरुहा ॥ १७२ ॥
राज॰ प । हा राजन्नाथ बालं त्वं पश्यस्वीमं महीतले ।
रममाणं पुरादष्टं दृष्टं दुष्टाहिना मृतम् ॥ १७३ ॥
तस्या विलापशब्दन्तमाकर्ण्य स नराधिपः ।
जगाम त्वरितोऽत्रेति भविता मृतकम्बलः ॥ १७४ ॥
सतां रोरुदतीं भार्य्यां नाभ्यजानात्तु पार्थिवः ।
चिरप्रवाससन्तप्तां पुनर्जातामिवाबलाम् ॥ १७५ ॥
सापि तं चारुकेशान्तं पुरो दृष्ट्वा जटालकम् ।
नाभ्यजानन् नृपसुता शुष्कवृक्षोपमं नृपम् ॥ १७६ ॥
सोऽपि कृष्णपटे बालं दृष्ट्वाशीविषपीडितम् ।
नरेन्द्रलक्षणोपेतं चिन्तामाप नरेश्वरः ॥ १७७ ॥
अहो कष्टं नरेन्द्रस्य कस्याप्येष कुले शिशुः ।
जातो नीतः कृतान्तेन कामप्यांशां दुरात्मना ॥ १७८ ॥
एवं दृष्ट्वा हि मे बालं मातुरुत्सङ्गशायिनम् ।
स्मृतिमभ्यागतो बालो रोहिताश्वोऽब्जलोचनः ॥ १७९ ।
सोऽप्येतामेव मे वत्सो वयोवस्थामुपागतः ।
नीतो यदि न घोरेण कृतान्तेनात्मनो वशम् ॥ १८० ॥
राज. प. । हा वत्स कस्य पापस्य अपध्यानादिदं महत् ।
दुःखमापतितं घोरं यस्यान्तो नोपलभ्यते ॥ १८१ ॥
हा नाथ राजन् भवता मामनाश्वास्य दुःखिताम् ।
क्वापि सन्तिष्ठता स्थाने विश्रब्धं स्थीयते कथम् ॥ १८२ ॥
राज्यनाशः सुहृत्त्यागो भार्य्यातनयविक्रयः ।
हरिश्चन्द्रस्य राजर्षेः किं विधे न कृतं त्वया ॥ १८३ ॥
इति तस्यावचः श्रुत्वा राजा स्वस्थानतश्च्युतः ।
प्रत्यभिज्ञाय दयितां पुत्रञ्च निधनं गतम् ॥ १८४ ॥

कष्टं शैव्येय मेषा हि स बालोऽयमितीरयन् ।
करोद् दुःखसंतप्तो मूर्च्छामभिजगाम च ॥ १८५ ॥
सा च तं प्रत्यभिज्ञाय तामवस्थामुपागतम् ।
मूर्छिता निपपातार्त्ता निश्चेष्टा धरणीतले ॥ १८६ ॥
चेतः संप्राप्य राजेन्द्रो राजपत्नी च तौ समम् ।
विलेपतुः सुसन्तप्तौ शोकभारावपीडितौ ॥ १८७ ॥
राजोवाच । हा वत्स सुकुमारं ते स्वच्छिभ्रूनासिकालकम् ।
पश्यतो मे मुखं दीनं हृदयं किं न दीर्य्यते ॥ १८८ ॥
तात तातेति मधुरं ब्रुवाणं स्वयमागतम् ।
उपगुह्य वदिष्ये कं वत्स वत्सेति सौहृदात् ॥ १८९ ॥
कस्य जानुप्रणीतेन पिङ्गेन क्षितिरेणुना ।
ममोत्तरीयमुत्सङ्गं तथाङ्गं मलमेष्यति ॥ १९० ॥
अङ्गप्रत्यङ्गसम्भूतो मनोहृदयनन्दनः ।
मया कुपित्रा हा वत्स विक्रीतो येन वस्तुवत् ॥ १९१ ॥
हृत्वा राज्यमशेषं मे सामात्यं सधनं महत् ।
दैवाहिना नृशंसेन दष्टो मे तनयस्ततः ॥ १९२ ॥
अहं दैवाहिदष्टस्य पुत्रस्याननपङ्कजम् ।
निरीक्षन्नपिघोरेण विषेणान्धं कृतोऽधुना ॥ १९३ ॥
एवमुक्त्वातमादाय बालकं बाष्पगद्गदः ।
परिष्वज्य च निश्चेष्टो मूर्च्छया निपपात ह ॥ १९४ ॥
राज० प० । अय स पुरुषव्याघ्रः स्वरेणैवोपलक्ष्यते ।
विद्वज्जनमनश्चन्द्रो हरिश्चन्द्रो न संशयः ॥ १९५ ॥
तथास्य नासिका तुङ्गा अग्रतोऽधो मुखं गता ।
दन्ताश्च मुकुल प्रख्याः ख्यात कीर्त्तेर्महात्मनः ॥ १९६ ॥
श्मशान म गतः कस्मा दयैष स नरेश्वरः ।
अपहाय पुत्रशोकं सा पश्यत् पतितं पतिम् ॥ १९७ ॥
प्रहृष्टा विस्मिता दीना भर्त्तृपुत्राधिपीड़िता ।
वीक्षन्ती सा ततोऽपश्यत् भर्त्तृदण्डं जुगुप्सितम् ॥ १९८ ॥
श्वपाकार्हं मतो मोहं जगामायतलोचना ।
प्राप्य चेतश्च शनकैः सगद्गदमभाषत ॥ १९९ ॥

धिकृत्वा दैवातिकरुणं निर्मर्य्यादं जुगुप्सितम्।
येनाय ममर प्रख्यो नीतो राजा श्वपाकताम्॥ २००॥
राज्यनाशं सुहृत्त्यागं भार्य्यातनयविक्रयम्।
प्रापयित्वापि नो मुक्त श्चण्डालोऽयं कृतो नृपः॥ २०१॥
हा राजन् जात सन्तापा मित्थं मां धरणीतलात्।
उत्थाप्य नाद्य पर्य्यङ्क मारोहेति किमुच्यते॥ २०२॥
नाद्यपश्यामि ते छत्रं भृङ्गारमथवा पुनः।
चामरं व्यजनञ्चापि कोऽयं विधिविपर्य्ययः॥ २०३॥
यस्याग्रे व्रजतः पूर्वं राजानो भृत्यतां गताः।
स्वोत्तरीयैरकुर्वन्त नीरजस्कमहीतलम्॥ २०४॥
सोऽयं कपाल संलग्न घटीघटनिरन्तरे।
चरत्यमेध्ये राजेन्द्रः श्मशाने दुःखपीडितः॥ २०८॥
एवमुक्त्वा समाश्लिष्य कण्ठं राज्ञो नृपात्मजा।
कष्टशोक शताधारा विललापार्त्तया गिरा॥ २०९॥
राजपत्न्युउ॰ राजन् स्वप्नोऽथ तथ्यं वा यदेतन्मन्यते भवान्।
तत् कथ्यतां महाभाग मनो वै मुह्यते मम॥ २१०॥
यद्येतदेवं धर्मज्ञ नास्ति धर्मे सहायता।
तथैव विप्र देवादि पूजने पालने भुवः॥ २११॥
नास्ति धर्मः कुतः सत्यमार्जवं चानृशंसता।
यत्र त्वं धर्मपरमः स्वराज्यादवरोपितः॥ २१२॥
इति तस्या वचः श्रुत्वा निःश्वस्योष्णं सगद्गदम्।
कथयामास तन्वङ्ग्या यथा प्राप्ता श्वपाकता॥ २१३॥
रुदित्वा सापि सुचिरं निःश्वस्योष्णं च दुःखिता।
स्वपुत्रमरणं भीरु यथावृत्तं न्यवेदयत्॥ २१४॥
राजोवाच। प्रिये न रोचते दीर्घं कालं क्लेशमुपासितम्।
नात्मायत्तश्च तन्वङ्गि पश्य मे मन्दभाग्यताम्॥ २१५॥
चाण्डाले नाननुज्ञातः प्रवेक्ष्ये ज्वलनं यदि।
चाण्डालदासतां यास्ये पुनरप्यन्यजन्मनि॥ २१६॥
मग्नस्य दुःखजलधौ तरिः प्राणवियोजनम्।
एकोऽपि बालको योऽस्य मासीद्वंशकरः सुतः॥ २१९॥

मम दैवाम्बुवेगेन मग्नः सोऽपि बलीयसा ।
कथं प्राणान् विमुञ्चामि परायत्तोऽस्मि दुर्गतः ॥ २२० ॥
अथवा नार्तिना क्लिष्टो नरः पापमेवाप्नुते ।
तिर्यक्त्वे नास्ति तद्दुःखं नासिपत्रवने तथा ।
वैतरण्यां कुतस्तादृग् यादृशं पुत्रविप्लवे ॥ २२१ ॥
सोऽहं सुतशरीरेण दीप्यमाने हुताशने ।
निपतिष्यामि तन्वङ्गि क्षन्तव्यं कुकृतं मम ॥ २२२ ॥
अनुज्ञाता च गच्छ त्वं विप्रवेश्म शुचिस्मिते ।
मम वाक्यञ्च तन्वङ्गि निबोधादृतमानसा ॥ २२३ ॥
यदि दत्तं यदि हुतं गुरवो यदि तोषिताः ।
परत्र सङ्गमो भूयात् पुत्रेण सह च त्वया ॥ २२४ ॥
इह लोके कुतस्त्वेतद्भविष्यति ममेङ्गितम् ।
त्वया सह मम श्रेयो गमनं पुत्र मार्गणे ॥ २२५ ॥
यन्मया हसता किञ्चिद्रहस्ये वा शुचिस्मिते ।
अश्लील मुक्तं तत्सर्वं क्षन्तव्यं मम याचतः ॥ २२६ ॥
राजपत्नीति गर्वेण नावज्ञेयः स ते द्विजः ।
सर्वयत्नेन ते तोष्यः स्वामिदैवतवच्छुभे ॥ २२७ ॥
राजपत्न्युवाच· अहमप्यत्र राजर्षे दीप्यमाने हुताशने ।
दुःखभारा सहात्रैव सहयास्यामि वै त्वया ॥ २२८ ॥
ततः कृत्वा चितां राजा आरोप्य तनयं स्वकम् ।
भार्यया सहितश्चासौ बद्धाञ्जलिपुटस्तदा ॥ २२९ ॥
चिन्तयन् परमात्मान मीशं नारायणं हरिम् ।
हृत्कोटरगुहासीनं वासुदेवं सुरेश्वरम् ।
अनादि निधनं ब्रह्म कृष्णं पीताम्बरं शुभम् ॥ २३० ॥
तस्य चिन्तय मानस्य सर्वे देवाः सवासवाः ।
धर्मं प्रमुखतः कृत्वा समाजग्मुस्त्वरान्विताः ॥ २३१ ॥
धर्मउवाच। मा राजन् साहसं कार्षीः धर्मोऽहं त्वामुपागतः ।
तितिक्षादमसत्याद्यैः स्वगुणैः परितोषितः ॥ २३६ ॥
इन्द्रउवाच· हरिश्चन्द्र महाभाग प्राप्तः शक्रोऽस्मितेऽन्तिकम् ।
त्वया सभार्यपुत्रेण जितालोकाः सनातनाः ॥ २३७ ॥

आरोह त्रिदिवं राजन् भार्य्यापुत्रसमन्वितः ।
सुदुष्प्रापं नरै रन्यै र्जितमात्मीयकर्म्मभिः ॥ २३८ ॥
ततोऽमृतमयं वर्ष मपमृत्यु विनाशनम् ।
इन्द्रः प्रासृजदाकाशाच्चिताख्यानगतः प्रभुः ॥ २३९ ॥
पुष्पवर्षं च सुमह द्देवदुन्दुभिनिस्वनम् ।
तत स्ततो वर्त्तमाने समाजे देवसंकुले ॥ २४० ॥
समुत्तस्थौ ततः पुत्रो राज्ञ स्तस्य महात्मनः ।
सुकुमारतनुः सुस्थः प्रसन्नेन्द्रियमानसः ॥ २४१ ॥
ततो राजा हरिश्चन्द्रः परिष्वज्य सुतं क्षणात् ।
सभार्य्यः स्वश्रिया युक्तो दिव्यमाल्याम्बरान्वितः ॥ २४२ ॥
सुस्थ सम्पूर्ण हृदयो मुदा परमया युतः ।
बभूव तत् क्षणादिन्द्रो भूय श्चैन मभाषत ॥ २४३ ॥
सभार्य्य स्त्वं सपुत्र श्च प्राप्स्यसे सद्गतिं पराम् ।
समारोह महाभाग निजानां कर्म्मणां फलैः ॥ २४४ ॥
हरिश्चन्द्र॰ देवराजाननुज्ञातः स्वामिना श्वपचेन वै ।
अगत्वा निष्कृतिं तस्य नारोक्ष्ये ऽहं सुरालयम् ॥ २४५ ॥
धर्म्मउवाच। तवैनं भाविनं क्लेश मवगम्यात्ममायया ।
आत्मा श्वपाकतां नीतो दर्शितं तच्च चापलम् ॥ २४६ ॥
इन्द्रउवाच। प्रार्थ्यते यत्परं स्थानं समस्तै र्मनुजै र्भुवि ।
तदारोह हरिश्चन्द्र स्थानं पुण्यकृतां नृणाम् ॥ २४७ ॥
हरिश्चन्द्र॰ देवराज ! नमस्तुभ्यं वाक्य ञ्चैतन्निबोध मे ।
प्रसाद सुमुखं यत् त्वां ब्रवीमि प्रश्रयान्वितः ॥ २४८ ॥
मच्छोकमग्नमनसः कोशलानगरे जनाः ।
तिष्ठन्ति तानपोवाह्य कथं यास्याम्यहं दिवम् ॥ २४९ ॥
ब्रह्महत्या गुरो र्घातो गोवधःस्त्रीवध स्तथा ।
तुल्य मेभि र्महापापं भक्तत्यागे ऽप्युदाहृतम् ॥ २५० ॥
भजन्तं भक्त मत्याज्य मदुष्टं त्यजतः सुखम् ।
नेह नामुत्र पश्यामि तस्मा च्छक्र दिवं व्रज ॥ २५१ ॥
यदि ते सहिताः स्वर्गं मया यान्ति सुरेश्वर ।
ततोऽ हमपि यास्यामि नरकं वापि तैः सह ॥ २५२ ॥

इन्द्रउवाच। बहूनि पुण्यपापानि तेषां भिन्नानि वै पृथक् ।
कथं संघात भोग्यं त्वं भूयः स्वर्गमवाप्स्यसि ॥ २५३ ॥
हरिश्चन्द्रउ॰ शक्र भुङ्क्ते नृपो राज्यं प्रभावेण कुटुम्बिनाम् ।
यजते च महायज्ञैः कर्म्म पौर्त्तं करोति च ॥ २५४ ॥
तच्च तेषां प्रभावेण मया सर्वं मनुष्ठितम् ।
उपकर्त्तॄन्न सन्त्यक्षे तानहं स्वर्ग लिप्सया ॥ २५५ ॥
तस्माद्यन् मम देवेश किञ्चिदस्ति सुचेष्टितम् ।
दत्त मिष्ट मथो जप्तं सामान्यं तैस्तदस्तु नः ॥ २५६ ॥
बहुकालोपभोग्यं हि फलं यन्मम कर्म्मणः ।
तदस्तु दिन मप्येकं तैः समं त्वत्प्रसादत ॥ २५७ ॥
एवं भविष्यतीत्युक्त्वा शक्रस्त्रिभुवनेश्वरः ।
प्रसन्नचेता धर्म्म श्च विश्वामित्र श्च गाधिजः ॥ २५८ ॥
विमानकोटिसम्बद्धं स्वर्गलोकान् महीतलम् ।
गत्वायोध्याजनं प्राह दिव मारुह्यता मिति ॥ २५९ ॥
तदिन्द्रस्य वचः श्रुत्वा प्रीत्या तस्य च भूपतेः ।
आनीय रोहितास्वञ्च विश्वामित्रो महातपाः ॥ २६० ॥
अयोध्याख्ये पुरे रम्ये सोऽभ्यषिञ्चन् नृपात्मजम् ।
देवै श्च मुनिभिः सिद्धै रभिषिच्य नराधिपम् ॥ २६१ ॥
राज्ञा सह तदा सर्वे हृष्टपुष्टसुहृज्जनाः ।
सपुत्रभृत्यदारा स्ते दिव मारुरुहु र्जनाः ॥ २६२ ॥
पदे पदे विमानात्ते विमान मगम न्नराः ।
तदा सम्भूतहर्षोऽसौ हरिश्चन्द्र श्च पार्थिवः ॥ २६३ ॥
सम्प्राप्य भूति मतुलां विमानैः स महीपतिः ।
आसाञ्चक्रे पुराकारे वप्रप्राकारसंवृते ॥ २६४ ॥
तत स्तस्यर्द्धि मालोक्य श्लोकं तत्रोशना जगौ ।
दैत्याचार्यो महाभागः सर्वशास्त्रार्थ तत्त्ववित् ॥ २६५ ॥
शुक्रउवाच हरिश्चन्द्रसमो राजा न भूतो न भविष्यति ।
यः शृणोति स्वदुःखार्त्तः स सुखं महदाप्नुयात् ॥ २६६ ॥
अहो तितिक्षा माहात्म्य महादानफलं महत् ।
यदागतो हरिश्चन्द्रः पुरी ञ्चेन्द्रत्व माप्तवान् ॥ २६८ ॥

## दशरथस्य सत्याभिसंधिः ॥

वाल्मीक॰ ५॰ सर्वापूर्वमियं येषामासीत्कृत्स्ना वसुंधरा ।
बा॰ ५॰ प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १ ॥
येषां स सगरो नाम सागरो येन खानितः ।
षष्टिपुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २ ॥
इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ।
महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३ ॥
तदिदं वर्तयिष्यावः सर्वं निखिलमादितः ।
धर्मकामार्थसहितं श्रोतव्यमनसूयता ॥
कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥
अयोध्या नाम नगरी तत्रासीं ल्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥
राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवि देवपतिर्यथा ॥ ९ ॥
बाल स॰ ६॰ तस्यां पुर्यामयोध्यायां वेदवित् सर्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥
बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः ।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥
यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा लोकस्य परिरक्षिता ॥ ४ ॥

तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥
तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥
नाल्पसन्निचयः कश्चिदासीत् तस्मिन् पुरोत्तमे ।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७ ॥
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८ ॥
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ।
मुदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९ ॥
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् ।
नामृष्टो न नलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १० ॥
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ।
नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥ ११ ॥
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ।
कश्चिदासीदयोध्यायां न चावृत्तो न संकरः ॥ १२ ॥
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३ ॥
नास्तिको नानृती वापि न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान्विद्यते क्वचित् ॥ १४ ॥
नाषडङ्गविदत्रास्ति नाव्रतो नाबहुश्रुतः ।
न दीनः क्षुद्रचित्तो वा व्यथितो वापि कश्चन ॥ १५ ॥
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ १६ ॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७ ॥
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८ ॥

क्षत्रं ब्रह्ममुखं चासीद् वैश्याः क्षत्र मनुव्रताः ।
शूद्राः स्वकर्म निरता स्त्रीन् वर्णानुपचारिणः ॥ १९ ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २० ॥
योधाना मग्निकल्पानां पेशलाना ममर्षिणाम् ।
संपूर्णा कृतविद्यानां गुहा केसरिणा मिव ॥ २१ ॥

---

वाल॰ ८॰ तस्यामात्या गुणै रासन्निक्ष्वाकोः सुमहात्मनः ।
मन्त्रज्ञा श्चेङ्गितज्ञा श्च नित्यं प्रियहिते रताः ॥ १ ॥
अष्टौ बभूवु र्वीरस्य तस्यामात्या यशस्विनः ।
शुचय श्चानुरक्ता श्च राजकृत्येषु नित्यशः २ ॥
एते ब्रह्मर्षिभि र्नित्यमृत्विज स्तस्य पौर्वकाः ।
विद्या विनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ॥ ६ ॥
श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ।
कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ॥ ७ ॥
तेजः क्षमा यशः प्राप्ताः स्मितपूर्वाभिभाषिणः ।
क्रोधात्कामार्थहेतो र्वा न ब्रूयु रनृतं वचः ॥ ८ ॥
तेषा मविदितं किञ्चित् स्वेषु नास्ति परेषु वा ।
क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ९ ॥
कुशला व्यवहारेषु सौहृदेषु परीक्षिताः ।
प्राप्तकालं यथादण्डं धारयेयुः सुतेष्वपि ॥ १० ॥
कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ।
अहितं चापि पुरुषं न हिंस्यु रविदूषकम् ॥ ११ ॥
वीराश्च नियतोत्साहा राजशास्त्र मनुष्ठिताः ।
शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ १२ ॥
ब्रह्मक्षत्र महिं सन्तस्तेकोशं समपूरयन् ।
सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ १३ ॥
शुचीना मेकबुद्धीनां सर्वेषां संप्रजानताम् ।
नासीत् पुरे वा राष्ट्रे वा मृषावादी नरः कश्चित् ॥ १४ ॥

कश्चिन्न दुष्टस्तत्रासीत् परदाररतिर्नरः ।
प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ॥ १५ ॥
सुवाससः सुवेषाश्च ते च सर्वे शुचिव्रताः ।
हितार्थाश्च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १६ ॥
गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे ।
विदेशेष्वपि विज्ञाताः सर्वतो बुद्धिनिश्चयाः ॥ १७ ॥
अभितो गुणवन्तश्च न चासन्गुणवर्जिताः ।
संधिविग्रहतत्त्वज्ञाः प्रकृत्या संपदान्विताः ॥ १८ ॥
मंत्रसंवरणे शक्ताः श्लक्ष्णाः सूक्ष्मासु बुद्धिषु ।
नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ॥ १९ ॥
ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः ।
उपपन्नो गुणोपेतैरन्वशासद्वसुन्धराम् ॥ २० ॥
अवेक्ष्यमाणश्चारेण प्रजाधर्मेण रक्षयन् ।
प्रजानां पालनं कुर्वन्न धर्मं परिवर्जयन् ॥ २१ ॥
विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसंगरः ।
स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ २२ ॥
नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ।
मित्रवान्नतसामन्तः प्रतापहतकण्टकः ।
स शशास जगद्राजा दिवि देवपतिर्यथा ॥ २३ ॥

---

## श्रीरामगुणवर्णनम् ॥

अयो० १. सर्वएव तु तस्येष्टा श्चत्वारः पुरुषर्षभाः ।
स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५ ॥
तेषामपि महातेजा रामो रतिकरः पितुः ।
स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ ६ ॥
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७ ॥
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा वरेण देवाना मदितिर्वज्रपाणिना ॥ ८ ॥

स हि रूपोपपन्नश्च वीर्यवाननसूयकः ।
भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९ ॥
स च नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १० ॥
कदाचिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः ।
कथयन्नास्त वै नित्यं मस्त्रयोग्यान्तरेष्वपि ॥ १२ ॥
बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियंवदः ।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ १३ ॥
न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते ॥ १४ ॥
सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवाञ्छुचिः ॥ १५ ॥
कुलोचितमतिः क्षात्रं स्वधर्मं बहुमन्यते ।
मन्यते परया प्रीत्या महत्स्वर्गफलं ततः ॥ १६ ॥
नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा ॥ १७ ॥
अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८ ॥
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥ १९ ॥
सर्वविद्याव्रतस्नातो यथावत् साङ्गवेदवित् ।
इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २० ॥
कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ।
वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१ ॥
धर्मकामार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।
लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२ ॥
निभृतः संवृताकारो गुप्तमंत्रः सहायवान् ।
अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३ ॥

दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचः ।
निस्तन्द्री रप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४ ॥
शास्त्रज्ञ श्च कृतज्ञ श्च पुरुषान्तर कोविदः ।
यः प्रग्रहानुग्रहयो र्यथान्यायं विचक्षणः ॥ २५ ॥
सत्संग्रहानुग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ॥ २६ ॥
श्रैष्ठ्यं चास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ।
अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७ ॥
वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् ।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८ ॥
धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसम्मतः ।
अभियाता प्रहर्ता च सेनानयविशारदः ॥ २९ ॥
अप्रधृष्य श्च संग्रामे क्रुद्धै रपि सुरासुरैः ।
अनसूयु र्जितक्रोधो न दृप्तो न च मत्सरी ॥ ३० ॥
नावज्ञेय श्च भूतानां न च कालवशानुगः ।
एवं श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥३१ ॥
संमत स्त्रिषु लोके षु वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पते स्तुल्यो वीर्ये चापि शचीपतेः ॥ ३२ ॥
तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः ।
गुणै र्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥ ३३ ॥
एतै स्तु बहुभि र्युक्तं गुणै रनुपमैः सुतम् ।
दृष्ट्वा दशरथो राजा चक्रे चिन्तां परंतप ॥ ३५ ॥
वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पकः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३८ ॥
यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ ।
महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३९ ॥
मही मह मिमां कृत्स्ना मधितिष्ठन्त मात्मजम् ।
अनेन वयसा दृष्ट्वा यथा स्वर्ग मवाप्नुयाम् ॥ ४० ॥
इत्येवं विविधै स्तै स्तै रन्यपार्थिवदुर्लभैः ।
शिष्टै रपरिमेयैश्च लोके लोकोत्तमै र्गुणैः ॥ ४१ ॥

तं समीक्ष्य तदा राजा युक्तं समुदितैर्गुणैः ।
निश्चित्य सचिवैः सार्द्धं यौवराज्य ममन्यत ॥ ४२ ॥

---

अयो० २· ततः परिषदं सर्वा मामन्त्र्य वसुधाधिपः ।
हित मुद्दर्षणं चैव मुवाच प्रथितं वचः ॥ १ ॥
विदितं भवता मेतद्यथा मे राज्य मुत्तमम् ।
पूर्वकै र्मम राजेन्द्रैः सुतवत् परिपालितम् ॥ ४ ॥
सो ऽह मिक्ष्वाकुभिः सर्वै र्नरेन्द्रैः प्रतिपालितम् ।
श्रेयसा योक्तु मिच्छामि सुखार्ह मखिलं जगत् ॥ ५ ॥
मया प्याचरितं पूर्वैः पन्थान मनुगच्छता ।
प्रजा नित्य मनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥
इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य च्छायायां जरितं मया ॥ ७ ॥
राजप्रभावजुष्टां च दुर्वहा मजितेन्द्रियैः ।
परिश्रान्तो ऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ८ ॥
सो ऽहं विश्राम मिच्छामि पुत्रं कृत्वा प्रजा हिते ।।
संनिकृष्टा निमान् सर्वा ननुमान्य द्विजर्षभान् ॥ १० ॥
अनुजातो हि मां सर्वै र्गुणैः श्रेष्ठो ममात्मजः ।
पुरंदरसमो वीर्ये रामः परपुरंजयः ॥ ११ ॥
तं चन्द्रमिव पुष्येण युक्तं धर्म भृतांवरम् ।
यौवराज्ये नियोक्तास्मि प्रातः पुरुषपुङ्गवम् ॥ १२ ॥
अनुरूपः स वो नाथो लक्ष्मीवां ल्लक्ष्मणाग्रजः ।
त्रैलोक्य मपि नाथेन येन स्या न्नाथवत्तरम् ॥ १३ ॥
अनेन श्रेयसा सद्यः संयोज्यैऽह मिमां महीम् ।
गतक्लेशो भविष्यामि सुते तस्मि न्निवेश्य वै ॥ १४ ॥
यदिदं मे ऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मे ऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५ ॥
यद्यप्येषा मम प्रीति र्हित मन्यद्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया ॥ १६ ॥

इति ब्रुवन्तं मुदिताः प्रत्यनन्द नृपा नृपम् ।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७ ॥
स्निग्धो ऽनुनादः संजज्ञे ततो हर्षसमीरितः ।
जनौघोद्घुष्टसन्नादो मेदिनीं कम्पयन्निव ॥ १८ ॥
तस्य धर्मार्थविदुषो भाव माज्ञाय सर्वशः ।
ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह ॥ १९ ॥
समेत्य ते मन्त्रयितुं समतागतबुद्धयः ।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २० ॥
अनेकवर्षसाहस्रो वृद्ध स्त्व मसि पार्थिव ।
स रामं युवराजान मभिषिञ्चस्व पार्थिवम् ॥ २१ ॥
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥ २२ ॥
इति तद्वचनं श्रुत्वा राजा तेषां मनः प्रियम् ।
अजानन्निव जिज्ञासु रिदं वचन मब्रवीत् ॥ २३ ॥
श्रुत्वैतद्वचनं यन्मे राघवं पति मिच्छथ ।
राजानः संशयो ऽयं मे तदिदं ब्रूत तत्त्वतः ॥ २४ ॥
कथं नु मयि धर्मेण पृथिवी मनुशासति ।
भवन्तो द्रष्टु मिच्छन्ति युवराजं महाबलम् ॥ २५ ॥
ते तमूचु र्महात्मानः पौरजानपदैः सह ।
बहवो नृपकल्याणगुणाः सन्ति सुतस्य ते ॥ २६ ॥
गुणान् गुणवतो देव देवकल्पस्य धीमतः ।
प्रिया नानन्दनान् कृत्स्नान् प्रवक्ष्यामोऽद्य ताञ्छृणु ॥ २७ ॥
दिव्यै र्गुणैः शक्रसमो रामः सत्यपराक्रमः ।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ॥ २८ ॥
रामः सत्पुरुषो लोके सत्यः सत्यपरायणः ।
साक्षाद्रामा द्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९ ॥
प्रजा सुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पते स्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ ३० ॥
धर्मज्ञः सत्यसन्धश्च शीलवाननसूयकः ।
क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः॥३१॥

मृदु श्च स्थिरचित्त श्च सदाभव्यो ऽनसूयकः ।
प्रियवादी च भूतानां सत्यवादी च राघवः ॥ ३२ ॥
बहुश्रुतानां वृद्धानां ब्राह्मणाना मुपासिता ।
तेनास्येहातुलकीर्ति र्यश स्तेज श्च वर्धते ॥ ३३ ॥
देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ।
सम्यग्विद्याव्रतस्नातो यथावत् साङ्गवेदवित् ॥ ३४ ॥
गान्धर्वे च भुविश्रेष्ठो बभूव भरताग्रजः ।
कल्याणाभिजनः साधु रदीनात्मा महामतिः ॥
द्विजै रभिविनीत श्च श्रेष्ठै धर्मार्थनैपुणैः ॥ ३५ ॥
यदा व्रजति संग्रामं ग्रामार्थे नरस्य वा ।
गत्वा सौमित्रसहितो नाविजित्य निवर्तते ॥ ३६ ॥
सङ्ग्रामात् पुन रागत्य कुञ्जरेण रथेन वा ।
पौरान् स्वजन वन्नित्यं कुशलं परिपृच्छति ॥ ३७ ॥
पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ।
निखिलेनानुपूर्व्या च पिता पुत्रा निवारसान् ॥ ३८ ॥
शुश्रूषन्ते च वः शिष्याः कच्चिद्वर्मसु दंशिताः ।
इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते ॥ ३९ ॥
व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ।
उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ४० ॥
सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ।
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ॥ ४१ ॥
सम्यग्योक्ता श्रेयसां च न विगृह्य कथारुचिः ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पति र्यथा ॥ ४२ ॥
सुभ्रू रायतताम्राक्षः साक्षा द्विष्णुरिव स्वयम् ।
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ॥ ४३ ॥
प्रजापालनसंयुक्तो न रागो पहितेन्द्रियः ।
शक्त स्त्रैलोक्य मप्येष भोक्तुं किं नु महीमिमाम् ॥ ४४ ॥
नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ।
हन्त्येष नियमाद्वध्या नवध्येषु न कुप्यति ।
युनक्त्यर्थैः प्रहृष्ट श्च तमसौ यत्र तुष्यति ॥ ४५ ॥

दान्तैः सर्वप्रजाकान्तैः प्रीतिसंजननै र्नृणाम् ।
गुणै र्विरोचते रामो दीप्तः सूर्यइवांशुभिः ॥ ४७ ॥
वत्सः श्रेयसि जात स्ते दिष्ट्यासौ तव राघवः ।
दिष्ट्या पुत्रगुणै र्युक्तो मारीच इव कश्यपः ॥ ४६ ॥
बल मारोग्य मायुश्च रामस्य विदितात्मनः ।
देवासुरमनुष्येषु सगन्धर्वोरगेषु च ॥ ५० ॥
आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा ।
आभ्यन्तर श्च बाह्य श्च पौरजानपदो जनः ॥ ५१ ॥
स्त्रियो वृद्धा स्तरुण्य श्च सायं प्रातः समाहिताः ।
सर्वा देवा न्नमस्यन्ति रामस्यार्थे मनस्विनः ॥
तेषां तद्याचितं देव त्वत्प्रसादात् समृद्ध्यताम् ॥ ५२ ॥
राम मिन्दीवरश्यामं सर्वशत्रुनिवर्हणम् ।
पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥ ५३ ॥

---

अयो. ३. तेषा मञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १ ॥
अहोऽस्मि परमप्रीतः प्रभाव श्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थ मिच्छथ ॥ २ ॥
इति प्रत्यर्चितान् राजा ब्राह्मणानिद मब्रवीत् ।
वसिष्ठं वामदेवं च तेषा मेवोपशृण्वताम् ॥ ३ ॥
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४ ॥
राज्ञ स्तूपरते वाक्ये जनघोषो महानभूत् ।
शनै स्तस्मिन् प्रशांते च जनघोषेजनाधिपः ॥ ५ ॥
वसिष्ठं मुनिशार्दूलं राजा वचन मब्रवीत् ।
अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।
तदद्य भगवन् सर्व माज्ञापयितु मर्हति ॥ ६ ॥
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो मुनिसत्तमः ।
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥७॥

ततः सुमंत्रं द्युतिमान् राजा वचन मब्रवीत् ।
रामः कृतात्मा भवता शीघ्र मानीयता मिति ॥ २१ ॥
स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ।
रामं तत्राऽऽनयाञ्चक्रे रथेन रथिनां वरम् ॥ २२ ॥
स प्राञ्जलि रभिप्रेत्य प्रणतः पितु रन्तिके ।
नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ॥ ३२ ॥
तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ।
गृह्याञ्जलौ समाकृष्य सस्वजे प्रिय मात्मजम् ॥ ३३ ॥
तस्मै चाभ्युद्यतं सम्यङ् मणिकाञ्चनभूषितम् ।
दिदेश राजा रुचिरं रामाय परमासनम् ॥ ३४ ॥
तथासनवरं प्राप्य व्यदीपयत राघवः ।
स्वयैव प्रभया मेरु मुदये विमलो रविः ॥ ३५ ॥
स तं सुस्थित माभाष्य पुत्रं पुत्रवतां वरः ।
उवाचेदं वचो राजा देवेन्द्र मिव कश्यपः ॥ ३६ ॥
ज्येष्ठाया मसि मे पत्न्यां सदृश्यां सदृशः सुतः ।
उत्पन्न स्त्वं गुणज्येष्ठो मम रामात्मजः प्रियः ॥ ३७ ॥
त्वया यतः प्रजाश्चेमाः स्वगुणै रनुरञ्जिताः ।
तस्मात्त्वं पुष्ययोगेन यौवराज्य मवाप्नुहि ॥ ३८ ॥
कामतस्त्वं प्रकृत्यैव निर्णीतो गुणवानिति ।
गुणवत्यपि तु स्नेहात् पुत्र वक्ष्यामि ते हितम् ॥ ३९ ॥
भूयो विनय मास्थाय भव नित्यं जितेन्द्रियः ।
कामक्रोधसमुत्थानि त्यजस्व व्यसनानि च ॥ ४० ॥
परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा ।
अमात्यप्रभृतीः सर्वाः प्रजा श्चैवानुरञ्जय ॥ ४१ ॥
कोष्ठागारायुधागारैः कृत्वा संनिचया न्बहून् ।
इष्टानुरक्तप्रकृति र्यः पालयति मेदिनीम् ॥ ४२ ॥
तस्य नन्दन्ति मित्राणि लब्ध्वामृत मिवामराः ।
तस्मात् पुत्र त्व मात्मानं नियम्यैवं समाचर ॥ ४३ ॥
तच्छ्रुत्वा सुहृद स्तस्य रामस्य प्रियकारिणः ।
त्वरिताः शीघ्रमागत्य कौसल्यायै न्यवेदयन् ॥ ४४ ॥

सा हिरण्यं च गा श्चैव रत्नानि विविधानि च ।
व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥ ४५ ॥
अथाभिवाद्य राजानं रथ मारुह्य राघवः ।
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४६ ॥
ते चापि पौरा नृपते र्वचस्त च्छ्रुत्वा तदालाभ मिवेष्ट माशु ।
नरेन्द्र मामन्त्र्य गृहाणि गत्वा देवान् समानर्चु रभि प्रहृष्टाः ॥ ४७ ॥
अयो० ४ । गतेष्वथ नृपो भूयः पौरेषु सह मंत्रिभिः ।
मन्त्रयित्वा तत श्चक्रे निश्चयज्ञः स निश्चयम् ॥ १ ॥
श्व एव पुष्यो भविता श्वोऽभिषेच्य स्तु मे सुतः ।
रामो राजीवपत्राक्षो युवराज इति प्रभुः ॥ २ ॥
अथान्त र्गृह माविश्य राजा दशरथ स्तदा ।
सूत मामन्त्रयामास रामं पुन रिहानय ॥ ३ ॥
प्रतिगृह्य तु तद्वाक्यं सूतः पुन रुपाययौ ।
रामस्य भवनं शीघ्रं राम मानयितुं पुनः ॥ ४ ॥
द्वाःस्थै रावेदितं तस्य रामायागमनं पुनः ।
श्रुत्वैव चापि राम स्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५ ॥
प्रवेश्य चैनं त्वरितो रामो वचन मब्रवीत् ।
यदागमन कृत्यं ते भूय स्तद् ब्रूह्यशेषतः ॥ ६ ॥
त मुवाच ततः सूतो राजा त्वां द्रष्टु मिच्छति ।
श्रुत्वा प्रमाणं तत्र त्वं गमनायेतराय वा ॥ ७ ॥
इति सूतवचः श्रुत्वा रामोऽपि त्वरयान्वितः ।
प्रययौ राजभवनं पुन र्द्रष्टुं नरेश्वरम् ॥ ८ ॥
तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
प्रवेशयामास गृहं विवक्षुः प्रिय मुत्तमम् ॥ ९ ॥
प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥ १० ॥
प्रणमन्तं त मुत्थाप्य संपरिष्वज्य भूमिपः ।
प्रदिश्य चासनं चास्मै रामं च पुन रब्रवीत् ॥ ११ ॥
राम वृद्धो ऽस्मि दीर्घायु र्भुक्ता भोगा यथेप्सिताः ।
अन्नवद्भिः क्रतुशतै र्यथेष्टं भूरिदक्षिणैः ॥ १२ ॥

जात मिष्ट मपत्यं मे त्व मद्यानुपमं भुवि ।
दत्त मिष्ट मधीतं च मया पुरुषसत्तम ॥ १३ ॥
अनुभूतानि चेष्टानि मया वीर सुखान्यपि ।
देवर्षिपितृविप्राणा मनृणो ऽस्मि तथात्मनः ॥ १४ ॥
न किंचिन् मम कर्तव्यं तवान्यत्राभिषेचनात् ।
अतो यत् त्वा महं ब्रूयां तन्मे त्वं कर्तु मर्हसि ॥ १५ ॥
अद्य प्रकृतयः सर्वा स्त्वा मिच्छन्ति नराधिपम् ।
अत स्त्वां युवराजान मभिषेक्ष्यामि पुत्रक ॥ १६
अपि चाद्याशुभान् राम स्वप्नान् पश्यामि राघव ।
सनिर्घाता दिवोल्काश्च पतन्ति हि महास्वनाः ॥ १७ ॥
अवष्टब्धं च मे राम नक्षत्रं दारुणग्रहैः ।
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८ ॥
प्रायेण च निमित्ताना मीदृशानां समुद्भवे ।
राजा हि मृत्यु माप्नोति घोरां चापद मृच्छति ॥ १९ ॥
तद्याव देव मे चेतो न विमुह्यति राघव ।
ताव देवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २० ॥
अद्य चन्द्रो ऽभ्युपगमत् पुष्यात् पूर्वं पुनर्वसुम् ।
श्वः पुष्य योगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥२१ ॥
तत्र पुष्ये ऽभिषिञ्चस्व मन स्त्वरयतीव माम् ।
श्व स्त्वाह मभिषेक्ष्यामि यौवराज्ये परंतप ॥ २२ ॥
तस्मा त्त्वयाद्य प्रभृति निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३ ॥
सुहृद श्चाप्रमत्ता स्त्वां रक्षन्त्वद्य समन्ततः ।
भवन्ति बहु विघ्नानि कार्याण्येवं विधानि हि ॥ २४ ॥
विप्रोषित श्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेक स्ते प्राप्तकालो मतो मम ॥ २५ ॥
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः ।
ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६ ॥
किं नु चित्तं मनुष्याणा मनित्य मिति मे मतम् ।
सतां च धर्मनित्यानां कृतशोभि च राघव ॥ २७ ॥

इत्युक्तः सो ऽभ्यनुज्ञातः श्वो भाविन्यभिषेचने ।
व्रजेति रामः पितर मभिभाष्याभ्ययाद् गृहम् ॥ २८ ॥
प्रविश्य चात्मनो वेश्म राज्ञा दिष्टे ऽभिषेचने ।
तत क्षणा देव निष्क्रम्य मातु रन्तःपुरं ययौ ॥ २९ ॥
तत्र तां प्रवणा मेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३० ॥
प्रागेव चागता तत्र सुमित्रा लक्ष्मण स्तथा ।
सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१ ॥
तस्मिन् काले हि कौसल्या तस्था वामीलितेक्षणा ।
सुमित्रयान्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२ ॥
श्रुत्वा पुष्ये च पुत्रस्य यौवराज्येऽ भिषेचनम् ।
प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३ ॥
तथा सनियमा मेव सोऽभिगम्या भिवाद्य च ।
उवाच वचनं रामो हर्षयंस्तामिदं वरम् ॥ ३४ ॥
अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि ।
भविताश्वोऽभिषेको मे यथा मे शासनं पितुः ॥ ३५ ॥
सीतया प्युपवस्तव्या रजनीयं मया सह ।
एव मुक्त मुपाध्यायैः स हि मा मुक्तवान् पिता ॥ ३६ ॥
यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने ।
तानि मे मङ्गलान्यद्य वैदेह्या श्चैव कारय ॥ ३७ ॥
एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकाङ्क्षितम् ।
हर्षबाष्पाकुलं वाक्य मिदं राम मभाषत ॥ ३८ ॥
वत्स राम चिरं जीव हता स्ते परिपन्थिनः ।
ज्ञातीन् मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९ ॥
कल्याणे बत नक्षत्रे मया जातोऽसि पुत्रक ।
येन त्वया दशरथो गुणै राराधितः पिता ॥ ४० ॥
अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे ।
येय मिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥ ४१ ॥
इत्येव मुक्तो मात्रा तु रामो भ्रातर मब्रवीत् ।
प्राञ्जलिं प्रह्व मासीन मभिवीक्ष्य स्मयन्निव ॥ ४२ ॥

तं दृष्ट्वा भरतः श्रीमान् मुमोद सह बान्धवः ।
अत्र राम इति ज्ञात्वा गतः पारमिवाम्भसः ॥ १५ ॥

---

अयो० ९९ निविष्टायां तु सेनायामुत्सुको भरतस्ततः ।
जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥
ऋषिं वशिष्ठं संदिश्य मातर्मे शीघ्रमानय ।
इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥
गच्छन्नेवाथ भरतस्तापसालयसंस्थिताम् ।
भ्रातुः पर्णकुटीं श्रीमानुटजं च ददर्श ह ॥ ४ ॥
गच्छन्नेव महाबाहुर्द्युतिमान् भरतस्तदा ।
शत्रुघ्नं चाब्रवीद्धृष्टस्तानमात्यांश्च सर्वशः ॥ ८ ॥
मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ।
नातिदूरे हि मन्येऽहं नदीं मन्दाकिनीमितः ॥ ९ ॥
अत्राहं पुरुषव्याघ्रं गुरुसत्कारकारिणम् ।
आर्यं द्रक्ष्यामि संहृष्टो महर्षिमिव राघवम् ॥ १३ ॥
अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः ।
मन्दाकिनीमनुप्राप्तस्तं जनं चेदमब्रवीत् ॥ १४ ॥
जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः ।
जनेन्द्रो निर्जनं प्राप्य धिङ् मे जन्म सजीवितम् ॥ १५ ॥
मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः ।
सर्वान् कामान् परित्यज्य वने वसति राघवः ॥ १६ ॥
इति लोकसमाक्रुष्टः पादेष्वद्य प्रसादयन् ।
रामं तस्य पतिष्यामि सीताया लक्ष्मणस्य च ॥ १७ ॥
एवं स विलपंस्तस्मिन् वने दशरथात्मजः ।
ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १८ ॥
प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम् ।
ददर्श भरतस्तत्र पुण्यां रामनिवेशने ॥ २४ ॥
निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटामण्डलधारिणम् ॥ २५ ॥

कृष्णाजिनधरं तं तु चीरवल्कलवाससम् ।
ददर्श राममासीनमभितः पावकोपमम् ॥ २६ ॥
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम् ।
पृथिव्याः सागरान्तायाः भर्तारं धर्मचारिणम् ॥ २७ ॥
उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम् ।
स्थण्डिले दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥ २८ ॥
तं दृष्ट्वा भरतः श्रीमान् दुःखमोहपरिप्लुतः ।
अभ्यधावत धर्मात्मा भरतः कैकयीसुतः ॥ २९ ॥
दृष्ट्वैव विललापार्तो बाष्पसंदिग्धया गिरा ।
अशक्नुवन् वारयितुं धैर्याद् वचनमब्रुवन् ॥ ३० ॥
यः संसदि प्रकृतिभिर्भवेद् युक्त उपासितुम् ।
वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ ३१ ॥
वासोभिर्बहुसाहस्रैर्यो महात्मा पुरोचितः ।
मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३२ ॥
अधारयद्यो विविधाश्चित्राः सुमनसः सदा ।
सोऽयं जटाभारमिमं सहते राघवः कथम् ॥ ३३ ॥
यस्य यज्ञैर्यथादिष्टैर्युक्तो धर्मस्य संचयः ।
शरीरक्लेशसंभूतं स धर्मं परिमार्गते ॥ ३४ ॥
मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः ।
धिग्जीवितं नृशंसस्य मम लोकविगर्हितम् ॥ ३६ ॥
इत्येवं विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३७ ॥
दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वार्येति सकृद्दीनं पुनर्नोवाच किंचन ॥ ३८ ॥
बाष्पैः पिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम् ।
आर्येत्येवाभिसंक्रुश्य व्याहर्तुं नाशकत्ततः ॥ ३९ ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ च समालिङ्ग्य रामोऽप्यश्रूण्यवर्तयत् ॥ ४

अयो० १०१ जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि।
दद्दर्श रामो दुर्दर्शं युगान्ते भास्करं यथा॥ १॥
कथंचिदभिविज्ञाय विवर्णवदनं कृशम्।
भ्रातरं भरतं रामः परिजग्राह पाणिना॥ २॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवम्।
अङ्के भरतमारोप्य पर्यपृच्छत सादरम्॥ ३॥
क नु ते ऽभूत्पिता तात यदरण्यं त्वमागतः।
न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि॥ ४॥
चिरस्य बत पश्यामि दूराद् भरत मागतम्।
दुष्प्रतीकमरण्ये ऽस्मिन् किं तात वनमागतः॥ ५॥
कच्चिन्नु धरते तात राजा यस्त्वमिहागतः।
कच्चिन्न दीनः सहसा राजा लोकान्तरं गतः॥ ६॥
कच्चित् सौम्य न ते राज्यं भ्रष्टं बालस्य शाश्वतम्।
कच्चिच्छुश्रूषसे तात पितुः सत्यपराक्रम॥ ७॥
कच्चिद्दशरथो राजा कुशली सत्यसंगरः।
राजसूयाश्वमेधानामाहर्ता धर्मनिश्चितः॥ ८॥
स कच्चिद् ब्राह्मणो विद्वान् धर्मनित्यो महाद्युतिः।
इक्ष्वाकूणामुपाध्यायो यथावत्तात पूज्यते॥ ९॥
तात कच्चिच्च कौसल्या सुमित्रा च प्रजावती।
सुखिनी कच्चिदार्या च देवी नन्दति कैकयी॥ १०॥
कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः।
अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः॥ ११॥
कच्चिदर्थं च कामं च धर्मं च जयतांवर।
विभज्य काले कालज्ञ सर्वान् वरद सेवसे॥ १२॥

---

अयो० १११ इत्युक्तः कैकयी पुत्रः काकुत्स्थेन महात्मना।
गृह्य बलाद् भूयः प्राञ्जलिर्वाक्यमब्रवीत्॥ ४॥
आर्य तातः परित्यज्य कृत्वा कर्म सुदुष्करम्।
गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः॥ ५॥

त्वया नियुक्तः कैकेय्या मम मात्रा परन्तप ।
चकार सा महत् पाप मिदम स्म यशोहरम् ॥ ६ ॥
सा राज्य फल मप्राप्य विधवा शोक कर्शिता ।
पतिष्यति महाघोरे नरके जननी मम ॥ ७ ॥
तस्य मे दासभूतस्य प्रसादं कर्तुं महर्सि ।
अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ॥ ८ ॥
इमाः प्रकृतयः सर्वा विधवा मातरश्च याः ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥ ९ ॥
तथानुपूर्व्या युक्तश्च युक्तं चात्मनि मानद ।
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥ १० ॥
भवत्व विधवा भूमिः समग्रा पतिना त्वया ।
शशिना विमलेनेव शारदी रजनी यथा ॥ ११ ॥
एभिश्च सचिवैः सार्धं शिरसा याचितो मया ।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥ १२ ॥
तदिदं शाश्वतं पित्र्यं सर्वं सचिव मण्डलम् ।
पूजितं पुरुषव्याघ्र नातिक्रमितु मर्हसि ॥ १३ ॥
एवमुक्त्वा महाबाहुः सबाष्पः कैकयी सुतः ।
रामस्य शिरसा पादौ जग्राह भरतः पुनः ॥ १४ ॥
तं मत्तमिव मातङ्गं निःश्वसन्तं पुनः पुनः ।
भ्रातरं भरतं रामः परिष्वज्येद मब्रवीत् ॥ १५ ॥
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं पाप माचरेन् मद्विधो जनः ॥ १६ ॥
न दोषं त्वयि पश्यामि सूक्ष्म मप्यरिसूदन ।
न चापि जननीं बाल्यात् त्वं विगर्हितु मर्हसि ॥ १७ ॥
कामकारो महाप्राज्ञ गुरूणां सर्वदानघ ।
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १८ ॥
वयमस्य यथा लोके संख्याताः सौम्य साधुभिः ।
भार्याः पुत्राश्च शिष्याश्च त्वमपि ज्ञातुमर्हसि ॥ १९ ॥
वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरम् ।
राज्ये वापि महाराजो मां वासयितु मीश्वरः ॥ २० ॥

यावत् पितरि धर्मज्ञ गौरवं लोकसत्कृते ।
तावद्धर्मकृतां श्रेष्ठ जनन्यामपि गौरवम् ॥ २२ ॥
एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ।
मातापितृभ्यामुक्तोऽहं कथमन्यत् समाचरे ॥ २२ ॥
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २३ ॥
एवमुक्त्वा महाराजो विभागं लोकसंनिधौ ।
व्यादिश्य च महातेजा दिवं दशरथो गतः ॥ २४ ॥
स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ।
पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २५ ॥
यदब्रवीन्मां नरलोकसत्कृतः
पिता महात्मा विबुधाधिपोपमः ।
तदेव मन्ये परमात्मनो हितं
न सर्वलोकेश्वरभावमव्ययम् ॥ २६ ॥

अयो १०२ रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ २ ॥
शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु नरर्षभ ।
ज्येष्ठपुत्रे स्थिते राजा न कनीयान् भवेन्नृपः ॥ ३ ॥
स समृद्धां मया सार्धमयोध्यां गच्छ राघव ।
अभिषेचय चात्मानं कुलस्यास्य भवाय नः ॥ ३ ॥
राजानं मानुषं प्राहुर्देवत्वे संमतो मम ।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥ ४ ॥
केकयस्थे च मयि तु त्वयि चारण्यमाश्रिते ।
धीमान् स्वर्गं गतो राजा यायजूकः सतां मतः ॥ ५ ॥
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे ।
दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ॥ ६ ॥
वसिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥

प्रियेण किल दत्तं हि पितृशोकेषु राघव ।
अक्षयं भवतीत्याहु र्भवांश्चैव पितुः प्रियः ॥ ८ ॥
त्वामेव शोचंस्तव दर्शनेप्सु स्त्वय्येव सक्तामनिवर्त्य बुद्धिम्।
त्वया विहीनस्तव शोकरुग्ण स्त्वां संस्मरन्नेव गतः पिता ते९



अयो० १०३० तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम् ।
राघवो भरतेनोक्तां बभूव गतचेतनः ॥ १ ॥
तं तु वज्रमिवोत्सृष्ट माहवे दानवारिणा ।
वाग्वज्रं भरतेनोक्त ममनोज्ञं परंतपः ॥ २ ॥
प्रगृह्य रामो बाहू वै पुष्पिताङ्ग इव द्रुमः ।
वने परशुना कृत्त स्तथा भुवि पपात ह ॥ ३ ॥
तथा हि पतितं रामं जगत्यां जगतीपतिम् ।
कूलघातपरिश्रान्तं प्रसुप्तमिव कुञ्जरम् ॥ ४ ॥
भ्रातरस्ते महेष्वासं सर्वतः शोककर्षितम् ।
रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥
स तु संज्ञां पुन र्लब्ध्वा नेत्राभ्या मश्रु मुत्सृजन् ।
उपाक्रामत काकुत्स्थः कृपणं बहुभाषितुम् ॥ ६ ॥
स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम् ।
उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ॥ ७ ॥
किं करिष्याम्ययोध्यायां ताते दिष्टां गतिं गते ।
कस्तां राजवराद्धीना मयोध्यां पालयिष्यति ॥ ८ ॥
किं नु तस्य मया कार्यं दुर्जातेन महात्मनः ।
यो मृतो मम शोकेन स मया न च संस्कृतः ॥ ९ ॥
अहो भरत सिद्धार्थो येन राजा त्वयानघ ।
शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु सत्कृतः ॥ १० ॥
निष्प्रधाना मनेकाग्रां नरेन्द्रेण विना कृताम् ।
निवृत्त वनवासो ऽपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥
समाप्तवनवासं मा मयोध्यायां परंतप ।
को ऽनुशासिष्यति पुनस्ताते लोकान्तरं गते ॥ १२ ॥

पुरा प्रेक्ष्य सुवृत्तं मां पिता यान्याह सान्त्वयन् ।
वाक्यानि तानि श्रोष्यामि कुतः कर्णसुखान्यहम् ॥ १३ ॥
एवमुक्त्वाथ भरतं भार्यामभ्येत्य राघवः ।
उवाच शोकसंतप्तः पूर्णचन्द्रनिभाननम् ॥ १४ ॥
सीते मृतस्ते श्वशुरः पितृहीनोऽसि लक्ष्मण ।
भरतो दुःखमाचष्टे स्वर्गतिं पृथिवीपतेः ॥ ॥
ततो बहुगुणं तेषां बाष्पं नेत्रेष्वजायत ।
तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ॥ १६ ॥
ततस्ते भ्रातरः सर्वे भृशमाश्वास्य दुःखितम् ।
अब्रुवञ्जगतीभर्तुः क्रियतामुदकं पितुः ॥ १७ ॥
ततो मन्दाकिनीतीरं प्रत्युत्तीर्य स राघवः ।
पितुश्चकार तेजस्वी निवापं भ्रातृभिः सह ॥ १८ ॥
ऐङ्गुदं बदरैर्मिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्तो रुदन् वचनमब्रवीत् ॥ २९ ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥
ततस्तेनैव मार्गेण प्रत्युत्तीर्य सरित्तटात् ।
आरुरोह नरव्याघ्रो रम्यसानुं महीधरम् ॥ ३१ ॥
ततः पर्णकुटीद्वारमासाद्य जगतीपतिः
परिजग्राह पाणिभ्यामुभौ भरतलक्ष्मणौ ॥ ३२ ॥
तेषां तु रुदतां शब्दात् प्रतिशब्दोऽभवद्गिरौ ।
भ्रातॄणां सह वैदेह्या सिंहानां नर्दतामिव ॥ ३३ ॥
महाबलानां रुदतां कुर्वतामुदकं पितुः ।
विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥
अब्रुवंश्चापि रामेण भरतः सङ्गतो ध्रुवम् ।
तेषामेव महाञ्छब्दः शोचतां पितरं मृतम् ॥ ३५ ॥
अथ वाहान् परित्यज्य तं सर्वेऽभिमुखाः स्वनम् ।
अप्येकमनसो जग्मुर्यथास्थानं प्रधाविताः ३६
अचिरप्रोषितं रामं चिरविप्रोषितं यथा ।
द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमम् ३८

ततस्तं पुरुषव्याघ्रं यशस्विनमकल्मषम् ।
आसीनं स्थण्डिले राम ददर्श सहसा जनः ॥ ४५ ॥
तान्नरान् बाष्पपूर्णाक्षान् समीक्ष्याथ सुदुःखितान् ।
पर्यष्वजतु धर्मज्ञः पितृवन्मातृवच्च सः ॥ ४७
स तांस्तत्र कांश्चित् परिषस्वजे नरान्
नराश्च केचित्तु तमभ्यवादयन् ।
चकार सर्वान् सवयस्यबान्धवान्
यथार्हमासाद्य तदा नृपात्मजः ॥ ४८ ।

---

अयो० १०४ वशिष्ठः पुरतः कृत्वा दारान् दशरथस्य च ।
अभिचक्राम तं देशं रामदर्शनतर्षितः ॥ १ ॥
राजपत्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति ।
ददृशुस्तत्र तत्तीर्थं रामलक्ष्मणसेवितम् ॥ २ ॥
कौशल्या बाष्पपूर्णेन मुखेन परिशुष्यता ।
सुमित्रामब्रवीद्दीना याश्चान्या राजयोषितः ॥ ॥
इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणाम् ।
वने प्राक्कालनं तीर्थं ये ते निर्विषयीकृताः ॥ ४ ॥
इतः सुमित्रे पुत्रस्ते सदा जलमतन्द्रितः ।
स्वयं हरति सौमित्रिर्मम पुत्रस्य कारणात् ॥ ५ ॥
जघन्यमपि ते पुत्रः कृतवान्न तु गर्हितः ।
भ्रातुर्यदर्थरहितं सर्वं तद्गर्हितं गुणैः ॥ ६ ॥
एवमार्त्ताः सपत्न्यस्ता जग्मुराश्वास्यता तदा ।
ददृशुश्चाश्रमे रामं स्वर्गच्युतमिवामरम् ॥ १६ ॥
तं भोगैः सम्परित्यक्तं रामं सम्प्रेक्ष्य मातरः ।
आर्ता मुमुचुरश्रूणि सस्वरं शोककर्शिताः ॥ १७ ॥
तासां रामः समुत्थाय जग्राह चरणाम्बुजान् ।
मातॄणां मनुजव्याघ्रः सर्वासां सत्यसंगरः ॥ १८ ॥
ताः पाणिभिः सुखस्पर्शैर्मृद्वङ्गुलितलैः शुभैः ।
प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः । १९ ॥

सौमित्रिरपि ताः सर्वा मातॄः सम्प्रेक्ष्य दुःखितः
अभ्यवादयदासक्तः शनै रामादनन्तरम् ॥ २० ॥
यथा रामे तथा तस्मिन् सर्वा ववृतिरे स्त्रियः ।
वृत्ता दशरथाज्जे ते लक्ष्मणे शुभलक्षणे ॥ २१ ॥
सीतापि चरणांस्तासा मुपसंगृह्य दुःखिता ।
श्वश्रूणा मश्रुपूर्णाक्षी सा बभूवाग्रतः स्थिता ॥ २२ ॥
तां परिष्वज्य दुःखार्तां माता दुहितरं यथा ।
वनवासकृशां दीनां कौशल्या वाक्य मब्रवीत् ॥ २३ ॥
वैदेहराजन्यसुता स्नुषा दशरथस्य च ।
रामपत्नी कथं दुःखं संप्राप्ता विजने वने ॥ २४ ॥
पद्ममातपसंतप्तं परिक्लिष्ट मिवोत्पलम् ।
काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः ॥ २५ ॥
मुखं ते प्रेक्ष्य मां शोको दहत्यग्नि रिवाश्रयम् ।
भृशं मनसि वैदेहि व्यसनारणिसंभवः ॥ २६ ॥
ब्रुवन्त्या मेव मातायां जनन्यां भरताग्रजः ।
पादावासाद्य जग्राह वशिष्ठस्य च राघवः ॥ २७ ॥

---

अयो० १०५ ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ।
शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥ १ ॥
रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ।
मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥ २ ॥
तूष्णीं ते समुपासीना न कश्चित् किञ्चि दब्रवीत् ।
भरतस्तु सुहृन्मध्ये रामं वचन मब्रवीत् ॥ ३ ॥
सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ ४ ॥
गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः ।
अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥ ६ ॥
सुजीवं नित्यशस्तस्य यः परै रुपजीव्यते ।
राम तेन तु दुर्जीवं यः परानुपजीवति ॥ ७ ॥

यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः ।
ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥ ८ ॥
स यदा पुष्पितो भूत्वा फलानि च विदर्शयेत् ।
स तां नानुभवेत् प्रीतिं यस्य हेतोः प्ररोपितः ॥ ९ ॥
एषोपमा महाबाहो तदर्थं वेत्तुमर्हसि ।
यत्र त्वमस्मान् वृषभो भर्ता भृत्यान्न शाधि हि ॥ १० ॥
श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्त मिवादित्यं राजस्थित मरिंदमम् ॥ ११ ॥
तथानु याने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः ।
अन्तः पुरगता नार्यो नन्दन्तु सुसमाहिताः ॥ १२ ॥
तस्य साध्वनु मन्यन्त नागरा विविधा जनाः ।
भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥ १३ ॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् ।
रामः कृतात्मा भरतं समाश्वासय दात्मवान् ॥ १४ ॥
धर्मात्मा सुशुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ।
न स शोच्यः पिता तात स्वर्गतः सत्कृतः सताम् ॥ ३२ ।
स जीर्णमानुषं देहं परित्यज्य पिता हि नः ।
दैवीमृद्धि मनुप्राप्तो ब्रह्मलोक विहारिणीम् ॥ ३३ ॥
तं तु नैवंविधः कश्चित् प्राज्ञः शोचितु मर्हति ।
त्वद्विधो मद्विधश्चापि श्रुतवान् बुद्धिमत्तरः ॥ ३४ ॥
एते बहुविधाः शोका विलापरुदिते तदा ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३५ ॥
स स्वस्थो भव मा शोको यात्वा चावस तां पुरीम् ।
तथा पित्रा नियुक्तोऽस्मि वशिना वदतां वर ॥ ३६ ॥
यत्राह मपि तेनैव नियुक्तः पुण्यकर्मणा ।
तत्रैवाहं करिष्यामि पितुरार्यस्य शासनम् ॥ ३७ ॥
न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम ।
स त्वयापि सदा मान्यः स वै बन्धुः स नः पिता ॥ ३८ ॥
तद्वचः पितुरेवाहं संमतं धर्मचारिणाम् ।
कर्मणा पालयिष्यामि वनवासेन राघव ॥ ३९

धार्मिकेणानृशंसेन नरेण गुरुवर्तिना ।
भवितव्यं नरव्याघ्र परलोकं जिगीषता ॥ ४० ॥
आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ ।
निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः ॥ ४१ ॥



अयो॰१०६॰ एवमुक्त्वा तु विरते रामे वचनमर्थवत् ।
ततो मन्दाकिनीतीरे रामं प्रकृतिवत्सलम् ॥ १ ॥
उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः ।
को हि स्यादीदृशो लोके यादृशस्त्वमरिंदम ॥ २ ॥
न त्वां प्रव्यथयेद्दुःखं प्रीतिर्वा न प्रहर्षयेत् ।
संमतश्चापि वृद्धानां तांश्च पृच्छसि संशयान् ॥ ३ ॥
यथा मृतस्तथा जीवन् यथासति तथा सति ।
यस्यैष बुद्धिलाभः स्यात् परितप्येत केन सः ॥ ४ ॥
परावरज्ञो यश्च स्याद्यथा त्वं मनुजाधिप ।
स एव व्यसनं प्राप्य न विषीदितुमर्हति ॥ ५ ॥
अमरोपमसत्त्वस्त्वं महात्मा सत्यसंगरः ।
सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चासि राघव ॥ ६ ॥
न त्वामेवं गुणैर्युक्तं प्रभवाभवकोविदम् ।
अविषह्यतमं दुःखमासादयितुमर्हति ॥ ७ ॥
प्रोषिते मयि यत्पापं मात्रा मत्कारणात् कृतम् ।
क्षुद्रया तदनिष्टं मे प्रसीदतु भवान्मम ॥ ८ ॥
धर्मबन्धेन बद्धोऽस्मि तेनेमां नेह मातरम् ।
हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥ ९ ॥
कथं दशरथाज्जातः शुभाभिजनकर्मणः ।
जानन् धर्ममधर्मं च कुर्यां कर्म जुगुप्सितम् ॥ १० ॥
गुरुः क्रियावान् वृद्धश्च राजा प्रेतः पितेति च ।
तातं न परिगर्हेऽहं दैवतं चेति संसदि ॥ ११ ॥
साध्वर्थमभिसंधाय क्रोधान् मोहाच्च साहसात् ।
तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥ १२ ॥

पितुर्हि समति कान्तं पुत्रो यः साधु मन्यते ।
तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १५ ॥
तदपत्यं भवानस्तु मा भवान्दुष्कृतं पितुः ।
अति यत्तत्कृतं कर्म लोके धीर विगर्हितम् ॥ १६ ॥
कैकेयीं मां च तातं च सुहृदो बान्धवांश्च नः ।
पौरजानपदान्सर्वांस्त्रातु सर्वमिदं भवान् ॥ १७ ॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम् ।
ईदृशं व्याहतं कर्म न भवान्कर्तुमर्हति ॥ १८ ॥
एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम् ।
येन शक्यं महाप्राज्ञ प्रजानां परिपालनम् ॥ १९ ॥
कश्च प्रत्यक्षमुत्सृज्य संशयस्थमलक्षणम् ।
आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितम् ॥ २० ॥
अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि ।
धर्मेण चतुरो वर्णान् पालयन् क्लेशमाप्नुहि ॥ २१ ॥
चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमुत्तमम् ।
आहुर्धर्मज्ञ धर्मज्ञास्तं कथं त्यक्तुमिच्छसि ॥ २२ ॥
श्रुतेन बालः स्थानेन जन्मना भवतो ह्यहम् ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥ २३ ॥
हीनबुद्धिगुणो बालो हीनस्थानेन चाप्यहम् ।
भवता च विना भूतो न वर्त्तयितुमुत्सहे ॥ २४ ॥
इदं निखिलमप्यर्थ्यं राज्यं पित्र्यमकण्टकम् ।
अनुशाधि स्वधर्मेण धर्मज्ञः सह बान्धवैः ॥ २५ ॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयः सह ।
ऋत्विजः सवसिष्ठाश्च मन्त्रविन्मन्त्रकोविदाः ॥ २६ ॥
अभिषिक्तस्त्वमस्माभिरयोध्यां पालने व्रज ।
विजित्य तरसा लोकान् मरुद्भिरिव वासवः ॥ २७ ॥
ऋणानि त्रीण्यपाकुर्वन्दुर्हृदः साधु निर्दहन् ।
सुहृदस्तर्पयन् कामैस्त्वमेवात्रानुशाधि माम् ॥ २८ ॥
अद्यार्य मुदिताः सन्तु सुहृदस्तेऽभिषेचने ।
अद्य भीताः पलायन्तु दुष्प्रदास्ते दिशोदश ॥ २९ ॥

आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ ।
अद्य तत्र भवन्तं च पितरं रक्ष किल्बिषात् ॥ ३० ॥
शिरसा त्वाभियाचेऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ ३१ ॥
अथवा पृष्ठतः कृत्वा वनमेव भवानितः ।
गमिष्यति गमिष्यामि भवता सार्धमप्यहम् ॥ ३२ ॥
तथाभिरामो भरतेन ताम्यता प्रसाद्यमानः शिरसा महीपतिः ।
न चैव चक्रे गमनाय सत्ववान् मतिं पितुस्तद्वचने प्रतिष्ठितः ।३३।
तदद्भुतं स्थैर्यमवेक्ष्य राघवे समं जनो हर्षमवाप दुःखितः ।
नयात्ययोध्यामितिदुःखितो ऽभवत्स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः
तमृत्विजो नैगमयूथवल्लभाः स्तथाविसंज्ञाश्रुकलाश्च मातरः ।
तथा ब्रुवाणं भरतं प्रतुष्टुवुः प्रणम्य रामं च ययाचिरे सह ॥३५॥

---

अयो· १०७ पुनरेव ब्रुवाणं तं भरतं लक्ष्मणाग्रजः ।
प्रत्युवाच ततः श्रीमाञ्ज्ञातिमध्ये सुसत्कृतः ॥ १ ॥
उपपन्नमिदं वाक्यं यस्त्वमेव ममापथाः ।
जातः पुत्रो दशरथात् कैकेय्यां राजसत्तमात् ॥ २ ॥
पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् ।
मातामहे समाश्रौषी द्राज्य शुल्क मनुत्तमम् ॥ ३ ॥
देवासुरे च संग्रामे जनन्यै तव पार्थिवः ।
संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥
ततः सा संप्रतिश्राव्य तव माता यशस्विनी ।
अयाचत नरश्रेष्ठं द्वौ वरौ वरवर्णिनी ॥ ५ ॥
तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा ।
तच राजा तथा तस्यै नियुक्तः प्रददौ वरम् ॥ ६ ॥
तेन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ ।
चतुर्दश वने वासं वर्षाणि वरदानिकम् ॥ ७ ॥
सो ऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः ।
सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः ॥ ८ ॥

आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ ।
अद्य तत्र भवन्तं च पितरं रक्ष किल्बिषात् ॥ ३० ॥
शिरसा त्वाभियाचेऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ ३१ ॥
अथवा पृष्ठतः कृत्वा वनमेव भवानितः ।
गमिष्यति गमिष्यामि भवता सार्धमप्यहम् ॥ ३२ ॥

तथाभिरामो भरतेन ताम्यता प्रसाद्यमानः शिरसा महीपतिः ।
न चैव चक्रे गमनाय सत्ववान् मतिं पितुस्तद्वचने प्रतिष्ठितः ।३३।
तदद्भुतं स्थैर्यमवेक्ष्य राघवे समं जनो हर्षमवाप दुःखितः ।
नयात्ययोध्यामितिदुःखितो ऽभवत्स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः
तमृत्विजो नैगमयूथवल्लभाः स्तथाविसंज्ञाश्रुकलाश्च मातरः ।
तथा ब्रुवाणं भरतं प्रतुष्टुवुः प्रणम्य रामं च ययाचिरे सह ॥३५॥

---

अयो॰ १०८ पुनरेव ब्रुवाणं तं भरतं लक्ष्मणाग्रजः ।
प्रत्युवाच ततः श्रीमाञ्ज्ञातिमध्ये सुसत्कृतः ॥ १७ ॥
उपपन्नमिदं वाक्यं च सर्वलोकनिदर्शिनीम् ।
जातः पुत्रोऽर्थ निगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥
पुरु॰ --

---

१. जाबालेस्तु वचः श्रुत्वा रामः सत्यपराक्रमः ।
उवाच परया सूक्तया बुद्ध्या विप्रतिपन्नया ॥ १ ॥
भवान्मे प्रियकामार्थं वचनं यदिहोक्तवान् ।
अकार्यं कार्यसंकाशं मपथ्यं पथ्यसंनिभम् ॥ २ ॥
निर्मर्याद स्तुपुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्र दर्शनः ॥ ३ ॥
कुलीन मकुलीनं वा वीरं पुरुषमानिनम् ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिम् ॥ ४ ॥
अनार्यं स्त्वार्य संस्थानः शौचाद्धीन स्तथा शुचिः ।
लक्षण्यवदलक्षण्यो दुःशीलः शीलवानिव ॥ ५ ॥

अधर्मं धर्मवेषेण यद्यहं लोकसंकरम् ।
अभिपत्स्ये शुभं हित्वा क्रियां विधिविवर्जिताम् ॥ ६ ॥
कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः ।
बहुमन्येत मां लोके दुर्वृत्तं लोक दूषणम् ॥ ७ ॥
कस्य यास्याम्यहं वृत्तं केन वा स्वर्गमाप्नुयाम् ।
अनया वर्तमानो ऽहं वृत्त्या हीन प्रतिज्ञया ॥ ८ ॥
कामवृत्तो ऽन्वयं लोकः कृत्स्नः समुपवर्तते ।
यद्वृत्ताः सन्ति राजान स्तद् वृत्ताः सन्ति हि प्रजाः ॥ ९ ॥
सत्यमेवा नृशंसं च राजवृत्तं सनातनम् ।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥
ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ।
सत्यवादी हि लोके ऽस्मिन् परं गच्छति चाक्षयम् ॥ ११ ॥
उद्विजन्ते यथा सर्पा न्नरादनृतवादिनः ।
धर्मः सत्यपरो लोके मूलं सर्वस्य चोच्यते ॥ १२ ॥
सत्य मेवेश्वरो लोके सत्ये धर्मः सदाश्रितः ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ १३ ॥
दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च ।
वेदाः सत्य प्रतिष्ठाना स्तस्मात्सत्यपरो भवेत् ॥ १४ ॥
एकः पालयते लोक मेकः पालयते कुलम् ।
मज्जत्येको हि निरय एकः स्वर्गे महीयते ॥ १५ ॥
सो ऽहं पितु र्निदेशं तु किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यं सत्येन समयी कृतम् ॥ १६ ॥
नैव लोभान्न मोहाद्वा न चाज्ञानात्तमोन्वितः ।
सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ १७ ॥
असत्य सन्धस्य सत श्चलस्या ऽस्थिरचेतसः ।
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥ १८ ॥
प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं ध्रुवम् ।
भारः सत्पुरुषैश्चीर्ण स्तदर्थमभिनन्द्यते ॥ १९ ॥
कायेन कुरुते पापं मनसा संप्रधार्य तत् ।
अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥ २१ ॥

भूमिः कीर्तिं यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ।
श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवान ऽवधार्य माम् ।
आह युक्ति करै वाक्यै रिदं भद्रं कुरुष्वह ॥ २३ ॥
कथं ह्यहं प्रतिज्ञाय वनवास मिमं गुरोः ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरु सन्निधौ ।
प्रहृष्ट मानसा देवी कैकेयी चाभवत्तदा ॥ २५ ॥
वनवासं वसन्नेव शुचि र्नियत भोजनः ।
मूल-पुष्प-फलैः पुण्यैः पितॄन् देवांश्च तर्पयन् ॥ २६ ।
सन्तुष्टपञ्चवर्गोऽहं लोकयात्रां प्रवाहये ।
अकुहः श्रद्दधानः सन् कार्याकार्यविचक्षणः ॥ २७ ॥
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ।
अग्नि र्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ २८ ॥
शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः ।
तपांस्युग्राणि चास्थाय दिवं प्राप्ता महर्षयः ॥ २९ ॥

सत्यं च धर्मं च पराक्रमं च भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥३१॥
तेनैवमाज्ञाय यथावदर्थ मेकोदयं संप्रतिपद्य विप्राः ।
धर्मं चरन्तः सकलं यथावत् काङ्क्षन्ति लोकागम मप्रमत्ताः ॥३२॥
धर्मेरताः सत्पुरुषैः समेता स्तेजस्विनो दानगुणप्रधानाः ।
अहिंसका वीतमलाश्च लोके भवन्ति पूज्या मुनयः प्रधानाः ॥३६॥

---

अयो॰ ११० क्रुद्धमाज्ञाय रामं तु वसिष्ठः प्रत्युवाच ह ।
जावालिरपि जानीते लोकस्यास्य गतागतिम् ॥ १ ॥
निवर्तयितु कामस्तु त्वामेतद्वाक्य मब्रवीत् ।
इमां लोक समुत्पत्तिं लोकनाथ निबोध मे ॥ २ ॥
इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
पूर्वजे नावरः पुत्रो ज्येष्ठो राजा ऽभिषिच्यते ॥ ३६ ॥

स राघवाणां कुलधर्ममात्मनः सनातनं नाथ विहन्तुमर्हसि ।
प्रभूतरत्ना मनुशाधि मेदिनीं प्रभूतराष्ट्रां पितृवन्महायशाः ॥३७॥

---

अयो॰ १११ वसिष्ठः स तदा राम मुक्त्वा राजपुरोहितः ।
अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥
पुरुषस्येह जातस्य भवन्ति गुरवः सदा ।
आचार्यश्चैव काकुत्स्थ पिता माता च राघव ॥ २ ॥
पिता ह्येनं जनयति पुरुषं पुरुषर्षभ ।
प्रज्ञां ददाति चाचार्य स्तस्मात्स गुरुरुच्यते ॥ ३ ॥
स तेऽहं पितुराचार्य स्तव चैव परंतप ।
मम त्वं वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥ ४ ॥
इमा हि ते परिषदो ज्ञातयश्च नृपास्तथा ।
एषु तात चरन् धर्मं नातिवर्तेः सतां गतिम् ॥ ५ ॥
वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्तितुम् ।
अस्या हि वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥ ६ ॥
भरतस्य वचः कुर्वन् याचमानस्य राघव ।
आत्मानं नातिवर्तेस्त्वं सत्यधर्मपराक्रम ॥ ७ ॥
एवं मधुरमुक्तः स गुरुणा राघवः स्वयम् ।
प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ॥ ८ ॥
यन्मातापितरौ वृत्तं तनये कुरुतः सदा ।
न सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम् ॥ ९ ॥
यथाशक्ति प्रदानेन स्वापनोच्छादनेन च ।
नित्यं च प्रियवादेन तथा संवर्धनेन च ॥ १० ॥
स हि राजा दशरथः पिता जनयिता मम ।
आज्ञापयन्मां यत्तस्य न तन्मिथ्या भविष्यति ॥ ११ ॥
एवमुक्तेन रामेण भरतः प्रत्यनन्तरम् ।
उवाच विपुलोरस्कः सूतं परमदुर्मनाः ॥ १२ ॥
इह तु स्थण्डिले शीघ्रं कुशानास्तर सारथे ।
आर्यं प्रत्युपवेक्ष्यामि यावन् मे संप्रसीदति ॥ १३ ॥

निराहारो निरालोको धनहीनो यथा द्विजः ।
शये पुरस्ताच्छालायां याव न्मां प्रतियास्यति ॥ १४ ॥
स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः ।
कुशोत्तरमुपस्थाप्य भूमावेवास्थितः स्वयम् ॥ १५ ॥
तमुवाच महातेजा रामो राजर्षिसत्तमः ।
किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसे ॥ १६ ॥
ब्राह्मणो ह्येकपार्श्वेन नरान् रोद्धु मिहार्हति ।
न तु मूर्द्धाभिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥
उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतम् ।
पुरवर्या मितः क्षिप्रमयोध्यां याहि राघव । १८ ॥
आसीन स्त्वेव भरतः पौरजानपदं जनम् ।
उवाच सर्वतः प्रेक्ष्य किमार्यं नानुशास्थ ॥ १९ ॥
ते तदोचु र्महात्मानं पौरजानपदाजनाः ।
काकुत्स्थमभिजानीमः सम्यग् वदति राघवः ॥ २० ॥
एषो ऽपि हि महाभागः पितुर्वचसि तिष्ठति ।
अतएव न शक्ताः स्म व्यावर्तयितु मञ्जसा ॥ २१ ॥
तेषामाज्ञाय वचनं रामो वचन मब्रवीत् ।
एवं निबोध वचनं सुहृदां धर्म चक्षुषाम् ॥ २२ ॥
एतच्चैवोभयं श्रुत्वा सम्यक् संपश्य राघव ।
उत्तिष्ठ त्वं महाबाहो मां च स्पृश तथोदकम् ॥ २३ ॥
अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्य मब्रवीत् ।
शृण्वन्तु मे परिषदो मन्त्रिणः शृणुयु स्तथा ॥ २४ ॥
न याचे पितरं राज्यं नानुशासामि मातरम्
एवं परमधर्मज्ञं नानुजानामि राघवम् ॥ २५ ॥
यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ।
अहमेव निवत्स्यामि चतुर्दश वने समाः ॥ २६ ॥
धर्मात्मा तस्य सत्येन भ्रातु र्वाक्येन विस्मितः ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥ २७ ॥
विक्रीत माहितं क्रीतं यत् पित्रा जीवता मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥

जानामि भरतं क्षान्तं गुरुसत्कारकारिणम् ।
सर्वमेवात्र कल्याणं सत्यसन्धे महात्मनि ॥ ३० ॥
अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ ३१ ॥
वृतो राजा हि कैकेय्या मया तद्वचनं कृतम् ।
अनृतान् मोचयानेन पितरं तं महीपतिम् ॥ ३२ ॥

---

अयो॰ ११२ तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् ।
विस्मिताः संगमं प्रेक्ष्य समुपेता महर्षयः ॥ १ ॥
अन्तर्हिता मुनिगणाः स्थिताश्च परमर्षयः ।
तौ भ्रातरौ महाभागौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
सदार्यौ राजपुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ ।
श्रुत्वा वयं हि संभाषा मुभयोः स्पृहयामहे ॥ ३ ॥
कुले जात महाप्राज्ञ महावृत्त महायशः ।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥
सदानृणमिमं रामं वय मिच्छामहे पितुः ।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६ ॥
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः ।
राजर्षयश्चैव तथा सर्वे स्वां स्वां गतिं गताः ॥ ७ ॥
ह्लादित स्तेन वाक्येन शुशुभे शुभदर्शनः ।
रामः संहृष्टवदन स्तानृषी नभ्यपूजयत् ॥ ८ ॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलि रिदं वाक्यं राघवं पुन रब्रवीत् ॥ ९ ॥
रामधर्ममिमं प्रेक्ष्य कुलधर्मानुसंततम् ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥ १० ॥
रक्षितुं सुमहद्राज्य महमेकस्तु नोत्सहे ।
पौरजानपदाँश्चापि रक्तान् रञ्जयितुं तदा ॥ ११ ॥
ज्ञातयश्चापि योधाश्च मित्राणि सुहृदश्च मः ।
त्वामेव हि प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ १२ ॥

इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि ।
शक्तिमान् स हि काकुत्स्थ लोकस्य परिपालने ॥ १३ ॥
एवमुक्त्वा पतद् भ्रातुः पादयोर्भरत स्तदा ।
भृशं संप्रार्थयामास राघवेति प्रियं वदन् ॥ १४ ॥
तमङ्के भ्रातरं कृत्वा रामो वचन मब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम् ॥ १५ ॥
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥ १६ ॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
सर्वकार्याणि संमन्त्र्य महान्त्यपि हि कारय ॥ १७ ॥
लक्ष्मी श्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् ।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८ ॥
कामाद्वा तात लोभाद्वा मात्रा तुभ्य मिदं कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥ १९ ॥
एवं ब्रुवाणं भरतः कौसल्यासुत मब्रवीत् ।
तेजसादित्यसंकाशं प्रतिपच्चन्द्र-दर्शनम् ॥ २० ॥
अधिरोहार्यपादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥
सो ऽधिरुह्य नरव्याघ्रः पादुके ह्यवमुच्य च ।
प्रायच्छन् सुमहातेजा भरताय महात्मने ॥ २६ ॥
स्वपादुके संप्रणम्य रामं वचन मब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ २७ ॥
फलमूलाशनो वीर भवेयं रघुनन्दन ।
तवागमनमाकाङ्क्षन् वसन् वै नगराद्बहिः ॥ २८ ॥
तव पादुकयोर्न्यस्य राज्यतन्त्रं परंतप ।
चतुर्दशे हि संपूर्णे वर्षे ऽहनि रघूत्तम ॥ २९ ॥
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ।
तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ॥ ३० ॥
शत्रुघ्नं च परिष्वज्य वचनं चेद मब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ ३१ ॥

मया च सीतया चैव शप्तो ऽसि रघुनन्दन ।
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ ३२ ॥
स पादुके ते भरतः स्वलंकृते महोज्वले संपरिगृह्य धर्मवित् ।
प्रदक्षिणं चैव चकार राघवं चकार चैवोत्तमनागमूर्द्धनि ३३
अथानुपूर्व्यात्प्रतिपूज्य तं जनं गुरूंश्च मन्त्रीन्प्रकृतींस्तथानुजौ ।
व्यसर्जयद्राघववंशवर्धनःस्थितःस्वधर्मे हिमवानिवाचलः ३४

---

यःकर्णाञ्जलि संपुटे रहरहः सम्यक् पिबत्या दरात् ।
वाल्मीके र्वदनारविन्द गलितं रामायणाख्यं मधु ॥
जन्मव्याधि जरा विपत्तिमरणै रत्यन्त सोपद्रवं ।
संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम्॥

---

सत्यम् ॥

भीष्मस्य सत्य प्रतिपालनम् ॥

सराजा शान्तनुर्धीमान्देवराजर्षिसत्कृतः ।
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः ॥ १ ॥
दमो दानं क्षमा बुद्धि र्ह्री र्धृ ति स्तेज उत्तमम् ।
नित्यान्यासन् महासत्वे शान्तनौ पुरुषर्षभे ॥ २ ॥
एवं स गुणसंपन्नो धर्मार्थकुशलो नृपः ।
आसीद्भरतवंशस्य गोप्ता सर्वजनस्य च ॥ ३ ॥
तस्य कीर्तिमतो वृत्तं अवेक्ष्य सततं नराः ।
धर्म एव परः कामादर्थाच्चेति व्यवस्थिताः ॥ ५ ॥
वर्तमानं हि धर्मेषु सर्वधर्मभृतां वरम् ।
तं महीपा महीपालं राजराज्ये ऽभ्यषेचयन् ॥ ७ ॥
वीतशोकभयाबाधा सुखस्वप्नविबोधनाः ।
पतिं भारतगोप्तारं समपद्यन्त भूमिपाः ॥ ८ ॥
शान्तनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा ।
नियमात् सर्ववर्णानां धर्मोत्तर मवर्धत ॥ १० ॥

स देवराजसदृशो धर्मज्ञः सत्यवागृजुः ।
दानधर्मतपोयोगात् श्रिया परमया युतः ॥ १३ ॥
अरागद्वेषसंयुक्तः सो ऽभवत् प्रियदर्शनः ।
तेजसा सूर्यकल्पो ऽभूद्वायुवेगसमो जवे ॥
अन्तकप्रतिमः कोपे क्षमया पृथिवी समः ॥ १४ ॥
वधः पशुवराहाणां तथैव मृगपक्षिणाम् ।
शान्तनौ पृथिवीपाले नावर्त्तत वृथा नृप ॥ १५ ॥
ब्रह्मधर्मोत्तरे राज्ये शान्तनुर्विनयात्मवान् ।
समं शशास भूतानि कामरागविवर्जितः ॥ १६ ॥
देवर्षिपितृयज्ञार्थ मारभ्यन्त तदा क्रियाः ।
न चाधर्मेण केषाञ्चित् प्राणिना मभवद्वधः ॥ १७ ॥
असुखानामनाथानां तिर्य्यग्योनिषु वर्त्तताम् ।
स एव राजा सर्वेषां भूतानामभवत् पिता ॥ १८ ॥
तस्मिन् कुरुपतिश्रेष्ठे राजराजेश्वरे सति ।
श्रिता वागभवत्सत्यं दानधर्मा श्रितं मनः ॥ १६ ॥
तथारूप स्तथाचार स्तथावृत्त स्तथाश्रुतः ।
गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः ॥ २१ ॥
सर्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च ।
महाबलो महासत्त्वो महावीर्यो महारथः ॥ २२ ॥
वेदानधिजगे साङ्गान् वसिष्ठादेव वीर्य्यवान् ।
कृतास्त्रः परमेष्वासो देवराजसमो युधि ॥ ३५ ॥
सुराणां सम्मतो नित्यमसुराणाञ्च भारत ।
उशना वेद यच्छास्त्रं अयं तद्वेद सर्वशः ॥ ३६ ॥
पौरवेषु ततः पुत्रं राज्यार्थमभयप्रदम् ।
गुणवन्तं महात्मानं यौवराज्येऽभ्यषेचयत् ॥ ४१ ॥
पौरवाञ्छान्तनोः पुत्रं पितरञ्च महायशाः ।
राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ॥ ४२ ॥
स तथा सह पुत्रेण रममाणो महीपतिः ।
वर्त्तयामास वर्षाणि चत्वार्य्यमितविक्रमः ॥ ४३ ॥

स कदाचिद्वने यातो यमुना मभितो नदीम् ।
महीपतिरनिर्देश्य माजिघ्रद्गन्धमुत्तमम् ॥ ४४ ॥
तस्य प्रभवमन्विच्छन् विचचार समन्ततः ।
स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ॥ ४५ ॥
तामपृच्छत् स दृष्ट्वैव कन्या मसितलोचनाम् ।
कस्य त्वमसि काचासि किञ्चभीरु चिकीर्षसि ॥ ४६ ॥
साब्रवीद्दाशकन्यास्मि धर्मार्थं वाहये तरिम् ।
पितुर्नियोगा द्भद्रं ते दाशराज्ञो महात्मनः ॥ ४७ ॥
रूपमाधुर्यगन्धै स्तां संयुक्तां देवरूपिणीम् ।
समीक्ष्य राजा दाशेयीं कामयामास शान्तनुः ॥ ४८ ॥
स गत्वा पितरं तस्या वरयामास तां तदा ।
पर्यपृच्छत्तत स्तस्याः पितरं चात्मकारणात् ॥ ४९ ॥
स च तं प्रत्युवाचेदं दाशराजो महीपतिम् ।
जातमात्रैव मे देया वराय वरवर्णिनी ॥
हृदिकामस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ५० ॥
यदीमां धर्मपत्नी त्वं मत्तः प्रार्थयसेऽनघ ।
सत्यवागसि सत्येन समयं कुरु मे ततः ॥ ५१ ॥
समयेन प्रदद्यां ते कन्यामह मिमां नृप ।
नहि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ॥ ५२ ॥
अस्यां जायेत यः पुत्रः स राजा पृथिवीपते ।
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव ॥ ५४ ॥
वैश० उ० ना कामयत तं दातुं वरं दाशाय शान्तनुः ।
शरीरजेन तीव्रेण दह्यमानोऽपि भारत ॥ ५५ ॥
सचिन्तयन्नेव तदा दाशकन्यां महीपतिः ।
प्रत्ययाद्धास्तिन पुरं कामोपहतचेतनः ॥ ५६ ॥
ततः कदाचि च्छोचन्तं शान्तनुं ध्यान मास्थितम् ।
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्य मब्रवीत् ॥ ५७ ॥
सर्वतो भवतः क्षेमं विधेयाः सर्व पार्थिवाः ।
तत्किमर्थमिहाऽभीक्ष्णं परिशोचसि दुःखितः ॥ ५८ ॥

ध्यायन्निव च मां राजन्नाभिभाषसि किञ्चन ।
न चाश्वेन विनिर्यासि विवर्णो हरिणः कृशः ॥ ५९ ॥
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्य्यां हि तत्र वै ।
एव मुक्तः स पुत्रेण, शान्तनुः प्रत्यभाषत ॥ ६० ॥
असंशयो ध्यानपरो यथा वत्स तथा शृणु ।
अपत्यं नस्त्वमेवैकः कुले महति भारत ॥ ६१ ॥
शस्त्रनित्यश्च सततं पौरुषे पर्य्यवस्थितः ।
अनित्यताञ्च लोकानामनुशोचामि पुत्रक ॥ ६२ ॥
कथञ्चित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम् ।
असंशयं त्वमेवैकः शतादपि वरः सुतः ॥ ६३ ॥
न चाप्यहं वृथा भूयो दारान् कर्तुमिहोत्सहे ।
सन्तानस्याविनाशाय कामये भद्रमस्तु ते ॥ ६४ ॥
अनपत्यन्त्येकपुत्र मित्याहुर्धर्मवादिनः ।
अग्निहोत्रं त्रयी विद्या सन्तानमपि चाक्षयम् ॥ ६५ ॥
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ।
एव मेतन्मनुष्येषु तच्च सर्वं प्रजास्विति ॥ ६६ ॥
यदपत्यं महाप्राज्ञ तत्र मे नास्ति संशयः ।
एष त्रयी पुराणानां देवतानाञ्च शाश्वती ॥ ६७ ॥
त्वञ्च शूरः सदामर्षी शस्त्रनित्यश्च भारत ।
नान्यत्र युद्धात्तस्मात्ते निधनं विद्यते कचित् ॥ ६८ ॥
सोऽसि संशयमापन्न स्त्वयि शान्ते कथं भवेत् ।
इति ते कारणं तात दुःखस्योक्तमशेषतः ॥ ६९ ॥
घेगं॰ ३० तत स्तत्कारणं राज्ञो ज्ञात्वा सर्वमशेषतः ।
देवव्रतो महाबुद्धिः प्रज्ञया चान्वचिन्तयत् ॥ ७० ॥
अभ्यगच्छत्तदैवाशु वृद्धामात्यं पितुर्हितम् ।
तमपृच्छत्तदा ऽभ्येत्य पितुस्तच्छोककारणम् ॥ ७१ ॥
तस्मै स कुरुमुख्याय यथावत् परिपृच्छते ।
वरं शशंस कन्यां तामुद्दिश्य भरतर्षभ ॥ ७२ ॥

ततो देवव्रतो वृद्धैः क्षत्रियैः सहितस्तदा ।
अभिगम्य दाशराजं कन्यां वव्रे पितुः स्वयम् ॥ ७३ ॥
तं दाशः प्रतिजग्राह विधिवत् प्रतिपूज्य च ।
अब्रवीच्चैनमासीनं राजसंसदि भारत ॥ ७४ ॥
त्वमेव नाथः पर्याप्तः शान्तनोर्भरतर्षभ ।
पुत्रः शस्त्रभृतां श्रेष्ठः किन्तु वक्ष्यामि ते वचः ॥ ७५ ॥
को हि सम्बन्धकं श्लाघ्यमीप्सितं यौनमीदृशम् ।
अतिक्राम न तप्येत साक्षादपि शतक्रतुः ॥ ७६ ॥
अपत्यं चैतदार्यस्य यो युष्माकं समो गुणैः ।
यस्य शुक्रात् सत्यवती सम्भूता वरवर्णिनी ॥ ७७ ॥
तेन मे बहुश स्तात पिता ते परिकीर्तितः ।
अर्हः सत्यवतीं वोढुं धर्मज्ञः स नराधिपः ॥ ७८ ॥
असितो ह्यपि देवर्षिः प्रत्याख्यातः पुरा मया ।
सत्यवत्या भृशं चार्थी स आसी दृषिसत्तमः ॥ ७९ ॥
कन्या पितृत्वात् किञ्चित्तु वक्ष्यामि त्वां नराधिप ।
बलवत् सपत्नतामत्र दोषं पश्यामि केवलम् ॥ ८० ॥
यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा ।
न स जातु चिरं जीवेत्त्वयि क्रुद्धे परन्तप ॥ ८१ ॥
एतावानत्र दोषो हि नान्यः कश्चन पार्थिव ।
एतज्जानीहि भद्रं ते दानादाने परन्तप ॥ ८२ ॥
एव मुक्त स्तुगाङ्गेयस्तद्युक्तं प्रत्यभाषत ।
शृण्वतां भूमिपालानां पितुरर्थाय भारतः ॥ ८३ ॥
इदं मे व्रतमादत्स्व सत्यं सत्यवतां वर ।
नैव जातो न वा जात ईदृशं वक्तुमुत्सहेत् ॥ ८४ ॥
एवमेतत् करिष्यामि यथा त्वमनुभाषसे ।
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति ॥ ८५ ॥
इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत ।
चिकीर्षुर्दुष्करं कर्म राज्यार्थेभरतर्षभ ॥ ८६ ॥
त्वमेव नाथः संप्राप्तः शान्तनोरमितद्युतेः ।
कन्यायाश्चैव धर्मात्मन प्रभविनाय चेश्वरः ॥ ८७ ॥

इदं तु वचनं सौम्य कार्य्यं चैव निबोध मे।
कौमारिकाणां शीलेन वक्ष्याम्यहमरिन्दम ॥ ८८ ॥
यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण।
राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ॥ ८९ ॥
नान्यथा तन्महाबाहो संशयोऽत्र कथञ्चन।
तवापत्यं भवेद्यत्तु तत्र नः संशयो महान् ॥ ९० ॥
तस्यैतन्मतमाज्ञाय सत्यधर्मपरायणः।
प्रत्यजानात्तदा राजन् पितुः प्रियचिकीर्षया ॥ ९१ ॥
दाशराज निबोधेदं वचनं मे नृपोत्तम।
शृण्वतां भूमिपालानां यद् ब्रवीमि पितुः कृते ॥ ९२ ॥
राज्यं तावत् पूर्वमेव मया त्यक्तं नराधिपाः।
अपत्यहेतोरपि च करिष्येऽद्य विनिश्चयम् ॥ ९३ ॥
अद्य प्रभृति मे दाश ब्रह्मचर्य्यं भविष्यति।
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ॥ ९४ ॥
तस्य तद्वचनं श्रुत्वा सम्प्रहृष्टतनूरुहः।
ददानीत्येव तं दाशो धर्मात्मा प्रत्यभाषत ॥ ९५ ॥
ततोऽन्तरिक्षेऽप्सरसो देवाः सर्षिगणास्तदा।
अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन् ॥ ९६ ॥
ततः स पितुरर्थाय तामुवाच यशस्विनीम्।
अधिरोह रथं मातर्गच्छावः स्वगृहानिति ॥ ९७ ॥
एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भाविनीम्।
आगत्य हास्तिनपुरं शान्तनोः सन्यवेदयत् ॥ ९८ ॥
तस्य तद् दुष्करं कर्म प्रशशंसुर्नराधिपाः।
समेताश्च पृथक् चैव भीष्मोऽयमिति चाब्रुवन् ॥ ९९ ॥
तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शान्तनुः।
स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने ॥ १०० ॥

---

आदि १०१ ततो विवाहे निर्वृत्ते स राजा शान्तनुर्नृप।
तां कन्यां रूपसंपन्नां स्वगृहे सन्न्यवेशयत् ॥ १ ॥

ततः शान्तनवो धीमान् सत्यवत्यामजायत ।
वीरश्चित्राङ्गदो नाम वीर्य्यवान् पुरुषेश्वरः ॥ २ ॥
अथापरं महेष्वासं सत्यवत्यां सुतं प्रभुः ।
विचित्रवीर्य्यं राजानं जनयामास वीर्य्यवान् ॥ ३ ॥
अप्राप्तवति तस्मिंस्तु यौवनं पुरुषर्षभे ।
स राजा शान्तनु र्धीमान् कालधर्ममुपेयिवान् ॥ ४ ॥
स्वर्गते शान्तनौ भीष्मश्चित्राङ्गदमरिंदमम् ।
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ॥ ५ ॥
स तु चित्राङ्गदः शौर्य्यात् सर्वांश्चिक्षेप पार्थिवान् ।
मनुष्यं न हि मेने स कञ्चित् सदृशमात्मनः ॥ ६ ॥
तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरां स्तथा ।
गन्धर्वराजो बलवां स्तुल्यनामा ऽभ्ययात् तदा ॥ ७ ॥
स हत्वा तु नरश्रेष्ठं चित्राङ्गद मरिन्दमम् ।
अन्ताय कृत्वा गन्धर्वो दिवमाचक्रमे ततः ॥ १० ॥
तस्मिन् पुरुषशार्दूले निहते भूरितेजसि ।
भीष्मः शान्तनवो राजा प्रेतकार्य्याण्यकारयत् ॥ ११ ॥
विचित्रवीर्य्यञ्च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहु रभ्यषिञ्चद ऽनन्तरम् ॥ १२ ॥
विचित्रवीर्य्यः स तदा भीष्मस्य वचने स्थितः ।
अन्वशासन् महाराज पितृपैतामहं पदम् ॥ १३ ॥



आदि॰ १०२ सम्प्राप्तयौवनं दृष्ट्वा भ्रातरं धीमतां वरः ।
भीष्मो विचित्रवीर्य्यस्य विवाहाया ऽकरोन् मतिम् ॥ २ ॥
अथ काशिपते र्भीष्मः कन्या स्तिस्रो ऽप्सरोपमाः ।
शुश्राव सहिता राजन् वृण्वाना वै स्वयम्वरम् ॥ ३ ॥
ततः सरथिनां श्रेष्ठो रथेनैकेन शत्रुजित् ।
जगामानुमते मातुः पुरीं वाराणसीं प्रभुः ॥ ४ ॥
तत्र राज्ञः समुदितान् सर्वतः समुपागतान् ।
ददर्श कन्या स्ताश्चैव भीष्मः शान्तनुनन्दनः ॥ ५ ॥

कीर्त्यमानेषु राज्ञान्तु तदानामसु सर्वशः ।
भीष्म स्तदा स्वयं कन्या वरयामास ताः प्रभुः ॥ ६ ॥
उवाच च महीपालान् राजन् जलदनिस्वनः ।
ता इमाः पृथिवीपाला जिहीर्षामि बलादितः ।
स्थितोऽहं पृथिवीपाला युद्धाय कृतनिश्चयः ।
एव मुक्त्वा महीपालान् काशिराजञ्च वीर्य्यवान् ॥ १३ ॥
सर्वाः कन्या स कौरव्यो रथ मारोप्य च स्वकम् ।
आमन्त्र्य च स तान् प्रायाच्छीघ्रं कन्या प्रगृह्य ताः ॥१४॥
प्रयान्त मुपकौरव्य मनुसस्रुरुदायुधाः ।
ततः समभवद्युद्धं तेषां तस्य च भारत ॥ २० ॥
तान् विनिर्जित्य तु रणे सर्वशस्त्रभृतां वरः ।
कन्याभिः सहितः प्रायाद्भारतो भारतान् प्रति ॥ २१ ॥
एवं विजित्य ताः कन्या भीष्मः प्रहरतां वरः ।
प्रययौ हास्तिनपुरं यत्र राजा स कौरवः ॥ ४७ ॥
अच्युतः क्षपयित्वारीन् संख्येऽसंख्येयविक्रमः ।
आनयामास काश्यस्य सुताः सागरगासुतः ॥ ५० ॥
स्नुषा इव स धर्मात्मा भगिनीरिव चानुजाः ।
यथा दुहितरश्चैव परिगृह्य ययौ कुरून् ॥ ५१ ॥
आनिन्ये स महाबाहु र्भ्रातुः प्रियचिकीर्षया ।
ताः सर्वगुणसम्पन्ना भ्राता भ्रात्रे यवीयसे ॥
भीष्मो विचित्रवीर्य्याय प्रददौ विक्रमाहृताः ॥ ५२ ॥
एवं धर्मेण धर्मज्ञः कृत्वा कर्मातिमानुषम् ।
भ्रातुर्विचित्रवीर्य्यस्य विवाहायो पचक्रमे ॥ ५३ ॥
सत्यवत्या सह मिथः कृत्वा निश्चयमात्मवान् ।
विवाहं कारयिष्यन्तं भीष्मं काशिपतेः सुता ॥ ५४ ॥
ज्येष्ठा तासामिदं वाक्य मब्रवीद्धसती तदा ।
मया सौभपतिः पूर्वं मनसा हि वृतः पतिः ॥ ५५ ॥
तेन चास्मि वृता पूर्वं एष कामश्च मे पितुः ।
मया वरयितव्यो ऽभूच्छाल्व स्तस्मिन्स्वयंवरे ॥ ५६ ॥

एतद्विज्ञाय धर्मज्ञ धर्मतत्वं समाचर ।
एव मुक्तस्तया भीष्मः कन्यया विप्रसंसदि ॥ ५७ ॥
चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्मणः ।
विनिश्चित्य स धर्मज्ञो ब्राह्मणै र्वेदपारगैः ॥ ५८ ॥
अनुजज्ञे तदा ज्येष्ठा मम्बां काशीपतेः सुताम् ।
अम्बिका ऽम्बालिके भार्ये प्रादाद् भ्रात्रे यवीयसे ॥ ५९ ॥
भीष्मो विचित्र वीर्याय विधिदृष्टेन कर्मणा ॥ ६० ॥
तयोः पाणी गृहीत्वा तु रूपयौवनदर्पितः ।
विचित्र वीर्यो धर्मात्मा कामात्मा समपद्यत ॥ ६१ ॥
ताभ्यां सह समाः सप्त विहरन् पृथिवीपतिः ।
विचित्रवीर्य्य स्तरुणो यक्ष्मणा समगृह्यत ॥ ६५ ॥
सुहृदां यतमानाना माप्तैः सह चिकित्सकैः ।
जगामा ऽस्तमिवादित्यः कौरव्यो यमसादनम् ॥ ६६ ॥

---

आदि॰ १०३ ततः सत्यवती दीना कृपणा पुत्रगर्द्धिनी ।
पुत्रस्य कृत्वा कार्य्याणि स्नुषाभ्यां सह भारत ॥ १ ॥
समाश्वास्य स्नुषे ते च भीष्मं शस्त्रभृतां वरम् ।
धर्मञ्च पितृवंशाञ्च मातृवंशाञ्च भाविनी ।
प्रसमीक्ष्य महाभाग गाङ्गेयं वाक्य मब्रवीत् ॥ २ ॥
शान्तनो धर्म नित्यस्य कौरवस्य यशस्विनः ।
त्वयि पिण्डश्च कीर्तिश्च सन्तानञ्च प्रतिष्ठितम् ॥ ३ ॥
वेत्थ धर्मांश्च धर्मज्ञ समासेनेतरेण च ।
विविधास्त्वं श्रुती र्वेत्थ वेदाङ्गानि च सर्वशः ॥ ५ ॥
व्यवस्थानञ्च ते धर्मे कुलाचारञ्च लक्षये ।
प्रतिपत्तिञ्च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ॥ ६ ॥
तस्मात्सुभृशमाश्वस्य त्वयि धर्मभृतांवर ।
कार्य्ये त्वां विनियोक्ष्यामि तच्छ्रुत्वा कर्त्तुमर्हसि ॥ ७ ॥
राज्ये चैवाभिषिच्यस्व भारतानुशाधि च ।
दारांश्च कुरु धर्मेण मानिमज्जीः पितामहान् ॥ ११ ॥

बै. इ.। तथोच्यमानो मात्रा स सुहृद्भिश्च परन्तपः।
इत्युवाचाथ धर्मात्मा धर्म्यमेवोत्तरं वचः ॥ १२ ॥
असंशयं परो धर्मस्त्वया मात उदाहृतः।
त्वमपत्यं प्रति च मे प्रतिज्ञां वेत्थ वै पराम् ॥ १३ ॥
जानासि च यथावृत्तं शुल्कहेतो स्त्वदन्तरे।
स सत्यवति सत्यं ते प्रतिजानाम्यहं पुनः ॥ १४ ॥
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः।
यद्वाप्यधिक मेताभ्यां न तु सत्यं कथञ्चन ॥ १५ ॥
त्यजेच्च पृथिवी गन्धमापश्च रसमात्मनः।
ज्योतिस्तथा त्यजेद्रूपं वायुः स्पर्शगुणं त्यजेत् ॥ १६ ॥
प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्मताम्।
त्यजेच्छब्दं तथाकाशं सोमः शीतांशुतां त्यजेत् ॥ १७ ॥
विक्रमं वृत्रहा जह्याद्धर्मं जह्याच्च धर्मराट्।
नत्वहं सत्य मुत्स्रष्टुं व्यवस्येयं कथञ्चन ॥ १८ ॥
एव मुक्ता तु पुत्रेण भूरिद्रविणतेजसा।
माता सत्यवती भीष्ममुवाच तदनन्तरम् ॥ १९ ॥
जानामि ते स्थितिं सत्ये परां सत्यपराक्रम।
इच्छन् सृजेथा स्त्रींल्लोकानन्यांस्त्वं स्वेन तेजसा ॥ २० ॥
जानामि चैवं सत्यं तन्मदर्थे यच्च भाषितम्।
आपद्धर्मं त्वमावेद्य वह पैतामहीं धुरम् ॥ २१ ॥
यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत्।
सुहृदश्च प्रहृष्येरं स्तथा कुरु परन्तप! ॥ २२ ॥
लालप्यमानां तामेवं कृपणां पुत्रगर्द्धिनीम्।
धर्मादपेतं ब्रुवतीं भीष्मो भूयो ऽब्रवीदिदम् ॥ २३ ॥
राज्ञि धर्मानवेक्षस्व मा नः सर्वान् व्यनीनशः।
सत्याच्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते ॥ २४ ॥

---

अत एव भीष्म तर्पणाम् ॥
व्याघ्रपाद-सगोत्राय सांकृति प्रवराय च
अपुत्राय ददाम्येतत् सलिलं भीष्म वर्मणे ॥

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भि रवाप्नोतु पुत्रपौत्रोचिताः क्रियाः ॥

अनृतम् ॥

मनुः ४ । यो ऽन्यथा सन्तमात्मान मन्यथा सत्सु भाषते ।
स पापकृत्तमो लोके स्तेन आत्मा पहारकः ॥ २५५ ॥
वाच्यार्था नियताः सर्वे वाङ्मूला वाग्विनिः सृताः ॥ २५६ ॥

नानृतात् पातकं परम् ॥

भरद्वाजः ॥ समूलो वा एष परिशुष्यति यो ऽनृत मभिवदति
प्रश्नोपनिषत् तस्मा न्नार्हाम्यऽनृतं वक्तुम् ॥
भाग स्क ८ न ह्यऽसत्वात् परो धर्म इति होवाच भूरियम् ।
सर्वं सोढु मलं मन्ये ऋते ऽलीकपरं नरम् ॥ १ ॥
रामः । अनृतं नोक्त पूर्वं मे न च वक्ष्ये कदाचन ।
एतत्ते प्रति जानामि सत्ये नैव शपामि ते ॥ १ ॥
अनृतं नोक्त पूर्वं मे अतिकृच्छ्रे ऽपि तिष्ठता ।
धर्मलोभपरीतेन न च वक्ष्ये कदाचन ॥ २ ॥
दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम् ।
अपि जीवित हेतो र्हि रामः सत्यपराक्रमः ॥ ३ ॥
युधिष्ठिरः ॥ मम प्रतिज्ञां च निबोध सत्यां वृणे धर्म ममृताज्जीविताच्च
राज्यं च पुत्रांश्च यशो धनञ्च सर्वं न सत्यस्य कलामुपैति१

[सत्येनाभिमन्योः सुतस्य पुनरुज्जीवनम् ।]

कृष्णः न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति ।
एष संजीवयाम्येनं पश्यतां सर्वदेहिनाम् ॥ १ ॥
नोक्त पूर्वं मया मिथ्या स्वैरेष्वपि कदाचन ।
न च युद्धात् परावृत्त स्तथा संजीवतादयम् ॥ २ ॥
यथा मे दयितो धर्मो ब्राह्मणा श्च विशेषतः ।
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा ॥ ३ ॥
यथाहं नाभिजानामि विजयेन कदाचन ।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः ॥ ४ ॥
यथा सत्यञ्च धर्मश्च मयि नित्यं प्रतिष्ठितौ ।
तथा मृतः शिशु रयं जीवतादभिमन्युजः ॥ ५ ॥

यथा कंसश्च केशी च धर्म्मेण निहता मया ।
तेन सत्येन बालोऽद्य पुनः संजीवतादयम् ॥ ६ ॥
इत्युक्तो वासुदेवेन स बालो भरतर्षभ ।
शनैः शनै र्महाराज प्रास्पन्दत सचेतनः ॥ ७ ॥

## साक्ष्यम्

मनुः अ. ८· समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिद्धयति ।
तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते ॥ ७४ ॥
साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि ।
अवाङ् नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥ ७५ ॥
यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किंचन ।
दृष्ट स्तत्रापि तद् ब्रूयाद् यथादृष्टं यथाश्रुतम् ॥ ७६ ॥
सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्त्तिं वागेषा ब्रह्मपूजिता ॥ ८१ ॥
साक्ष्येऽनृतं वदन् पाशैर्बद्धयते वारुणै र्भृशम् ।
विवशः शतमाजातीस्तस्मात्साक्ष्ये वदेदृतम् ॥ ८२ ॥
सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते ।
तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ ८३ ॥
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥ ८४ ॥
मन्यन्ते वै पापकृतो न कश्चित् पश्यतीति नः ।
तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥ ८५ ॥
द्यौर्भू मिरापो हृदयं चन्द्रार्काग्नियमाऽनिलाः ।
रात्रिसन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥ ८६ ॥
ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नस्य ते ते स्यु र्ब्रुवतो मृषा ॥ ८९ ॥
जन्म प्रभृति यत्किञ्चित् पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥ ९० ॥
एकोऽहमस्मीत्यात्मानं यत्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृदये पुण्यपापेक्षिता मुनिः ॥ ९१ ॥

यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गंगां मा कुरून् गमः ॥ ९२ ॥
नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।
अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ ९३ ॥
अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्मनिश्चये ॥ ९४ ॥
अन्धो मत्स्यानिवाश्नाति स नरः कण्टकैः सह ।
यो भाषते ऽर्थवैकल्यं अप्रत्यक्षं सभां गतः ॥ ९५ ॥
यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशंकते ।
तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ॥ ९६ ॥
न वृथा शपथं कुर्यात् स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥ ॥ १११ ॥
साक्षी पृष्टश्च यः प्रश्नान् राजानमन्यथा वदेत् ।
लोभाद्द्वेषाद्भयाद् वापि तं विद्याद्ब्रह्मघातकम् ॥ १२ ॥

गौतमधर्मशास्त्र १३ । विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था ।
स्वर्गः सत्यवचने । विपर्यये नरकः । सर्वधर्मेभ्यो
गरीयः प्राड्विपाके सत्यवचनम्,

---

## धृतिः

विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते ।
नियन्तुम् अहितादर्थात् धृति र्हि नियमात्मिका ॥

वन १९२ युधिष्ठिर ! धृतिर्दाक्ष्यं देशकालपराक्रमाः ।
धनद उ० लोकतन्त्रविधानाना मेष पञ्चविधो विधिः ॥ १ ॥
धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ! ।
पराक्रम विधानज्ञा नराः कृतयुगे ऽभवन् ॥ २ ॥
धृतिमान् देशकालज्ञः सर्वधर्मविधानवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ प्रशास्ति पृथिवीं चिरम् ॥ ३ ॥
य एवं वर्तते पार्थ पुरुषः सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥ ४ ॥

गीता० १८. धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।
योगेना व्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥ ३
यया तु धर्मकामार्थान् धृत्या धारयते ऽर्जुन ।
प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥

---

स्फुटक श्लो चलन्ति गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रे ऽपि न चलत्येव धीराणां निश्चलं मनः ॥

---

शां० २२७ मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि ।
युधि० उ० बन्धुनाशे महीपाल राज्यनाशे ऽथवा पुनः ॥ १ ॥
त्वं हि नः परमो वक्ता लोके ऽस्मिन् भरतर्षभ ।
एतत् भवन्तं पृच्छामि तन्मे त्वं वक्तु मर्हसि ॥ २ ॥
भीष्म उ० पुत्रदारैः सुखैश्चैव वियुक्तस्य धनेन वा ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ।
धैर्येण युक्तं सततं शरीरं न विशीर्यते ॥ ३ ॥
विशोकता सुखं धत्ते धत्ते चारोग्य मुत्तमम् ।
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ४ ॥
यश्च प्राज्ञो नरस्तात सात्विकीं वृत्ति मास्थितः ।
तस्यैश्वर्यञ्च धैर्यं च व्यवसायश्च कर्मसु ॥ ५ ॥
अत्रैवो दाहरन्तीम मितिहासं पुरातनम् ।
बलि-वासव-सम्वादं पुनरेव युधिष्ठिर ! ॥ ६ ॥
वृत्ते देवासुरे युद्धे दैत्य दानव संक्षये ।
विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ ॥ ७ ॥
इज्यमानेषु देवेषु चातुवर्ण्ये व्यवस्थिते ।
समृद्ध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयम्भुवि ॥ ८ ॥
गन्धर्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः ।
आरुह्यैरावतं शक्र स्त्रैलोक्य मनुसंययौ ॥ ९ ॥
स कदाचित् समुद्रान्ते कस्मिंश्चिद् गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शापससर्प च ॥ १० ॥

तमैरावतमूर्धस्थं प्रेक्ष्य देवगणैर्वृतम् ।
सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे ॥ ११ ॥
दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् ।
अधिरूढो द्विपश्रेष्ठमित्युवाच शतक्रतुः ॥ १२ ॥
दैत्य न व्यथसे शौर्यादथवा वृद्धसेवया ।
तपसा भावितत्वाद्वा सर्वथैतत् सुदुष्करम् ॥ १३ ॥
शत्रुभिर्वशमानीतो हीनः स्थानादनुत्तमात् ।
वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥ १४ ॥
श्रैष्ठ्यं प्राप्य स्वजातीनां महाभोगाननुत्तमान् ।
हृतः स्वबलराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥ १५ ॥
ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।
तत् त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥ १६ ॥
बद्धश्च वारुणैः पाशैर्वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥ १७ ॥
नष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करम् ।
त्रैलोक्यराज्यनाशे हि को ऽन्यो जीवितुमुत्सहेत् ॥ १८ ॥
एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् ।
श्रुत्वा सुखमसम्भ्रान्तो बलिर्वैरोचनो ऽब्रवीत् ॥ १९ ॥
बलिरुवाच निगृहीते मयि भृशं शक्र किं कत्थितेन ते ।
वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरन्दर ॥ २० ॥
अशक्तः पूर्वमासीस्त्वं कथञ्चिच्छक्ततां गतः ।
कस्त्वदन्य इमां वाचं सुक्रूरां वक्तुमर्हति ॥ २१ ॥
यस्तु शत्रोर्वशस्थस्य शक्तो ऽपि कुरुते दयाम् ।
हस्तप्राप्तस्य वीरस्य तञ्चैव पुरुषं विदुः ॥ २२ ॥
अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः ।
एकः प्राप्नोति विजयमेकश्चैव पराजयम् ॥ २३ ॥
मा च ते भूत् स्वभावो ऽयमिति दैवतपुङ्गव ।
ईश्वरः सर्वभूतानां विक्रमेण जितो बलात् ॥ २४ ॥
नैतदस्मत्कृतं शक्र नैतच्छक्रकृतं त्वया ।
यत्त्वमेवं गतो वज्रिन् । यद्वाप्येवं गता वयम् ॥ २५ ॥

अहमासं यथाऽद्यत्वं भविता त्वं यथा वयम् ।
मावमंस्था मया कर्म्म दुष्कृतं कृत मित्युत ॥ २६ ॥
सुख दुःखे हि पुरुषः पर्य्यायेणाधि गच्छति ।
पर्य्यायेणासि शक्र त्वं प्राप्तः शक्र न कर्मणा ॥ २७ ॥
कालः काले नयति मां त्वाञ्च कालो नयत्ययम्
तेनाहं त्वं यथा नाद्य त्वञ्चापि न यथा वयम् ॥ २८ ॥
नागामिन मनर्थं हि प्रतिघात शतैरपि ।
शक्नुवन्ति प्रतिव्योढु मृते बुद्धि बलान्नराः ॥ ३१ ॥
कालेनत्वाहं मजयं कालेनाहं जितस्त्वया ।
गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥ ३४ ॥
इन्द्र प्राकृतया बुद्ध्या प्रलयं नावबुध्यसे ।
केचित्त्वां बहुमन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्म्मणा ॥ ३५ ॥
कथमस्मद्विधो नाम जानन् लोक प्रवृत्तयः ।
कालेनाभ्याहतः शोचेन् मुह्येद्वाप्यथ विभ्रमेत् ॥ ३६ ॥
नित्यं कालपरीतस्य मम वा मद्विधस्य वा ।
बुद्धि र्व्यसन मासाद्य भिन्ना नौरिव सीदति ॥ ३७ ॥
अहं च त्वं च ये चान्ये भविष्यन्ति सुराधिपाः ।
ते सर्वे शक्र यास्यन्ति मार्गमिन्द्र शतैर्गतम् ॥ ३८ ॥
त्वामप्येवं सुदुर्धर्षं ज्वलन्तं परया श्रिया ।
काले परिणते कालः कालयिष्यति मामिव ॥ ३९ ॥
बहूनीन्द्रसहस्राणि दैवतानां युगे युगे ।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥ ४० ॥
इदन्तु लब्ध्वा संस्थानमात्मानं बहुमन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ ४१ ॥
न चेदमचलं स्थानमनन्तं भावि कस्यचित् ।
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ ४२ ॥
अविश्वस्ते विश्वसिषि मन्यसे चाध्रुवे ध्रुवम् ।
नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर ! ॥ ४३ ॥
ममेयमिति मोहात् त्वं राजश्रियमभीप्ससि ।
नेयं तव न चास्माकं न चान्येषां स्थिरा सदा ॥ ४४ ॥

अतिक्रम्य बहूनन्यां स्त्वयि तावदियं गता ।
किंचित् कालमियं स्थित्वा त्वयि वासव चञ्चला ॥
गौर्निपान मिवोत्सृज्य पुनरन्यं गमिष्यति ॥ ४५ ॥
राजलोका ह्यतिक्रान्ता याञ्च संख्यातुमुत्सहे ।
त्वत्तो बहुतराश्चान्ये भविष्यन्ति सुरेश्वर ॥ ४६ ॥
सवृक्षौषधिरत्नेयं ससत्ववनाकरा ।
तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥ ४७ ॥
बहवः पूर्वं दैत्येन्द्राः सन्त्यज्य पृथिवीं गताः ।
कालेनाभ्याहताः सर्वे कालो हि बलवत्तरः ॥ ५४ ॥
सर्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः ।
सर्वे धर्मपराश्चासन् सर्वे सततसत्रिणः ॥ ५५ ॥
अन्तरिक्षचराः सर्वे सर्वे ऽभिमुखयोधिनः ।
सर्वे संहननोपेताः सर्वे परिघबाहवः ॥ ५६ ॥
सर्वे मायाशतधराः सर्वे ते कामरूपिणः ।
सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ ५७ ॥
सर्वे सत्यव्रतपराः सर्वे कामविहारिणः ।
सर्वे वेदव्रतपराः सर्वे चैव बहुश्रुताः ॥ ५८ ॥
सर्वे सम्मतमैश्वर्य्यमीश्वराः प्रतिपेदिरे ।
न चैश्वर्य्यमदस्तेषां भूतपूर्वो महात्मनाम् ॥ ५६ ॥
सर्वे यथार्हदातारः सर्वे विगतमत्सराः ।
सर्वे सर्वेषु भूतेषु यथावत् प्रतिपेदिरे ॥ ६० ॥
सर्वे दाक्षायणी पुत्राः प्राजापत्या महाबलाः ।
ज्वलन्तः प्रतपन्तश्च कालेन प्रतिसंहृताः ॥ ६१ ॥
त्वञ्चैवेमां यदा भुक्त्वा पृथिवीं त्यक्ष्यसे पुनः ।
न शक्यसि तदा शक्र ! नियन्तुं शोकमात्मनः ॥ ६२ ॥
मुञ्चेच्छां कामभोगेषु मुञ्चेमं श्रीभवं मदम् ।
एवं स्वराज्य काले त्वं शोकं संप्रसहिष्यसि ॥ ६३ ॥
शोककाले शुचो मा त्वं हर्षकाले च मा हृषः ।
अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्त्तय ॥ ६४ ॥
मां चेदभ्यागतः कालः सदा युक्तमतन्द्रितः ।
क्षमस्व न चिरादिन्द्र त्वामप्युपगमिष्यति ॥ ६५ ॥

त्रासयन्निव देवेन्द्र वाग्भि स्तक्षसि मा मिह ।
संयते मयि नूनं त्व मात्मानं वहुमन्यसे ॥ ६६ ॥
कालः प्रथममायन् मां पश्चात्त्वा मनुधावति ।
तेन गर्ज्जसि देवेन्द्र पूर्वं कालहते मयि ॥ ६७ ॥
को हि स्थातुमलं लोके मम क्रुद्धस्य संयुगे ।
कालस्तु बलवान् प्राप्त स्तेन तिष्ठसि वासव ॥ ६८ ॥
यत्तद्वर्षसहस्रान्तं पूर्णं भवितु मर्हति ।
यथा मे सर्वगात्राणि न सुस्थानि महौजसः ॥
अहमैन्द्राच्च्युत. स्थानात्त्वमिद्रः प्रकृतो दिवि ।
सुचित्रे जीवलोके ऽस्मि न्नुपास्यः कालपर्य्ययात् ॥ ६९ ॥
किं हि कृत्वा त्वमिन्द्रो ऽद्य किं वा कृत्वा वयं च्युताः ।
काल. कर्त्ता विकर्त्ता च सर्वमन्यद कारणम् ॥ ७० ॥
नाशं विनाश मैश्वर्य्यं सुखं दु खं भवाभवौ ।
विद्वान् प्राप्यैव मत्यर्थं न प्रहृष्येन्न च व्यथेत् ॥ ७१ ॥
त्वमेवहीन्द्र वेत्थास्मान् वेदाहं त्वां च वासव ।
किं कत्थसे मां किं च त्वं कालेन निरपत्रप ॥ ७२ ॥
त्वमेव हि पुरा वेत्थ यत्तदा पौरुषं मम ।
समरेषु च विक्रान्तं पर्य्याप्तं तन्निदर्शनम् ॥ ७३ ॥
आदित्याश्चैव रुद्राश्च साध्याश्च वसुभिः सह ।
मया विनिर्जिताः पूर्वं मरुतश्च शचीपते ॥ ७४ ॥
तमेव शक्र जानासि देवासुरसमागमे
समेता विबुधा भग्नास्तरसा समरे मया ॥ ७५ ॥
पर्वताश्चासकृत् क्षिप्ताः सवनाः सवनौकसः ।
सटङ्कशिखराभग्नाः समरे मूर्न्द्धि ते मया ॥ ७६ ॥
किन्तु शक्यं मया कर्त्तुं कालो हि दुरतिक्रमः ।
न हि त्वां नोत्सहे हन्तुं सवज्रमपि मुष्टिना ॥ ७७ ॥
न तु विक्रमकालो ऽयं क्षमाकालो ऽय मागतः ।
तेन त्वां मर्षये शक्र दुर्मर्षणतरस्त्वया ॥ ७८ ॥
त्वं मां परिणते काले परीतं कालवह्निना ।
नियतं कालपाशेन बद्धं शक्र विकत्थसे ॥ ७९ ॥

अयं सपुरुषः श्यामो लोकस्य दुरतिक्रमः ।
बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा ॥ ८० ॥
लाभालाभौ सुखं दुःखं कामक्रोधौ भवाभवौ ।
वधबन्धप्रमोक्षञ्च सर्वं कालेन लभ्यते ॥ ८१ ॥
नाहं कर्त्ता न कर्त्ता त्वं कर्त्ता यस्तु सदा प्रभुः ।
सोऽयं पचति कालो मां वृक्षे फलमिवागतम् ॥ ८२ ॥
यान्येव पुरुषः कुर्वन् सुखैः कालेन युज्यते ।
पुनस्तान्येव कुर्वाणो दुखैः कालेन योज्यते ॥ ८३ ॥
न च कालेन कालज्ञः स्पृष्टः शोचितुमर्हति ।
तेन शक्र न शोचामि नास्ति शोके सहायता ॥ ८४ ॥
यदापि शोचतः शोको व्यसनं नापकर्षति ।
सामर्थ्यं शोचतो नास्ति त्यतोऽहं नाद्य शोचिमि ॥ ८५ ॥
एवमुक्तः सहस्राक्षो भगवान् पाकशासनः ।
प्रतिसंहृत्य संरम्भमित्युवाच शतक्रतुः ॥ ८६ ॥
सवज्रमुद्यतं बाहुं दृष्ट्वा पाशांश्च वारुणान् ।
कस्येह न व्यथेद्बुद्धि र्मृत्योरपि जिघांसतः ॥ ८७ ॥
स ते न व्यथते बुद्धि रचला तत्त्व दर्शिनो ।
ध्रुवं न व्यथने ऽद्य त्वं धैर्य्यात् सत्यपराक्रम ॥ ८८ ॥
को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ।
कर्त्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत् ॥ ८९ ॥
अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम् ।
कालाग्नावाहितं घोरे गुह्ये सततगेऽक्षरे ॥ ९० ॥
न चात्र परिहारोऽस्ति कालस्पृष्टस्य कस्यचित् ।
सूक्ष्माणां महताञ्चैव भूतानां परिपच्यताम् ॥ ९१ ॥
अनीशस्याप्रमत्तस्य भूतानि पचतः सदा ।
अनिवृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ ९२ ॥
अप्रमत्तः प्रमत्तेषु कालो जागर्त्ति जन्तुषु ।
प्रयत्नेनाप्यपक्रान्तो दृष्टपूर्वो न केनचित् ॥ ९३ ॥
पुराणः शाश्वतो धर्मः सर्वप्राणभृतां समः ।
कालो न परिहार्य्यश्च न चास्यास्ति व्यतिक्रमः ॥ ९४ ॥

अहोरात्रांश्च मासांश्च क्षणान् काष्ठा लवान् कलाः।
संपीड़यति नः कालो वृद्धिं वार्धुषिको यथा ॥ ६५ ॥
इदमद्य करिष्यामि श्वः कर्त्तास्मीति वादिनम्।
कालो हरति सम्प्राप्ता नदीवेग इव द्रुमम् ॥ ९६ ॥
इदानीं तावदेवासौ मया दृष्टः कथं मृतः।
इति कालेन ह्रियतां प्रलापः श्रूयते नृणाम् ॥ ९७ ॥
नश्यन्त्यर्थास्तथा भोगाः स्थानमैश्वर्य्यमेव वा।
जीवितं जीवलोकस्य काले नागम्य नीयते ॥ ९८ ॥
उच्छ्रया विनिपातान्ना भावोऽभावः स एव च।
अनित्य मध्रुवं सर्वं व्यवसायो हि दुष्करः ॥ ९९ ॥
सा ते न व्यथते बुद्धि रचला तत्त्वदर्शिनी।
अहमासं पुरा चेति मनसा पि न बुध्यसे ॥ १०० ॥
कालेनाक्रम्य लोकेऽस्मिन् पच्यमाने बलीयसा।
अज्येष्ठमकनिष्ठं च क्षिप्यमाणो न बुध्यते ॥ १०१ ॥
ईर्षाभिमानलोभेषु कामक्रोधभयेषु च।
स्पृहामोहाभिमानेषु लोकः सक्तो विमुह्यति ॥ १०२ ॥
भवांस्तु भावतत्त्वज्ञो विद्वान् ज्ञानतपोऽन्वितः।
कालं पश्यति सुव्यक्तं पाणावामलकं यथा ॥ १०३ ॥
कालचारित्र तत्त्वज्ञः सर्व-शास्त्र-विशारदः।
वैरोचने कृतात्मासि स्पृहणीयो विजानताम् ॥ १०४ ॥
सर्वलोको ह्ययं मन्ये बुद्धया परिगतस्त्वया।
विहरन् सर्वतो मुक्तो न क्वचित् परिसज्जसे ॥ १०५ ॥
रजश्च हि तमश्च त्वां स्पृशतो न जितेन्द्रियम्।
निष्प्रीतिं नष्टसन्ताप मात्मानं त्व मुपाससे ॥ १०६ ॥
सुहृदं सर्वभूतानां निर्वैरं शांतमानसम्।
दृष्ट्वा त्वां मम सञ्जाता त्वय्यनुक्रोशिनी मतिः ॥ १०७ ॥
नाहमेतादृशं बुद्धं हन्तुमिच्छामि बन्धने।
आनृशंस्यं परो धर्मो ह्यनुक्रोशश्च मे त्वयि ॥ १०८ ॥
मोक्ष्यन्ते वारुणाः पाशास्तवे मे कालपर्य्ययात्।
प्रजानामपचारेण स्वस्ति ते ऽस्तु महासुर ॥ १०९ ॥

यदा श्वश्रूं स्नुषा वृद्धां परिचारेण योद्स्यते ।
पुत्रश्च पितरं मोहात् प्रेषयिष्यति कर्मसु ॥ ११० ॥
ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनम् ।
शूद्राश्च ब्रह्मणीं भार्य्यामुपयास्यन्ति निर्भयाः ॥ १११॥
चातुर्वर्ण्यं यदा कृत्स्नममर्यादं भविष्यति ।
एकैकस्ते तदा पाश क्रमशः परिमोक्ष्यते ॥ ११३ ॥
अस्मत्तस्ते भयं नास्ति समयं प्रतिपालय ।
सुखी भव निराबाधः स्वस्थचेता निरामयः ॥ ११४ ॥
तमेवमुक्त्वा भगवाञ्छतक्रतुः प्रतिप्रयातो गजराजवाहनः ।
विजित्य सर्वानसुरान् सुराधिपो ननन्द हर्षेण बभूव चैकराट् ११५
महर्षयस्तष्टुवुरञ्जसा च तं वृषाकपिं सर्वं चराचरेश्वरम् ॥
हिमापहो हव्यमुवाह चाध्वरे तथामृतं चार्पित मीश्वरेऽपि हि ११६
द्विजोत्तमैः सत्रगतैरभिष्टुतो विदोषतेजा गतमन्यु रीश्वरः ।
प्रशान्तचेता मुदितः स्वमालयं त्रिविष्टपं प्राप्य मुमोद वासवः ११७

---

## अथ क्षमा ।

भाग अ-१५ क्षमया रोचते लक्ष्मी र्ब्राह्मी सौरी यथा प्रभा ।
क्षमिणामाशु भगवां स्तुष्यत्याशु जनार्दनः ॥
वन-२९ क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने ।
क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ३२ ॥
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसः ।
यश्च नित्यं जितक्रोधो विद्वानुत्तम पुरुषः ॥ ३३ ॥
प्रभाववानपि नरस्तस्य लोकाः सनातनाः ।
क्रोधन स्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥ ३४ ॥
अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावतां कृष्णे काश्यपेन महात्मना ॥ ३५ ॥
क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
य एतदेवं जनाति स सर्वं क्षन्तु मर्हति ॥ ३६ ॥
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत् ॥ ३७ ॥

अतियज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति च ।
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ॥ ३८ ॥
क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः ।
तां क्षमां तादृशीं कृष्णे कथ मस्मद्विध स्त्यजेत् ॥ ४० ॥
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाः प्रतिष्ठिताः ॥ ४१ ॥
क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ४२ ॥
क्षमावता मयं लोकः परश्चैव क्षमावताम् ।
इह सन्मानमृच्छन्ति परत्र च शुभां गतिम् ॥ ४३ ॥
येषां मन्यु र्मनुष्याणां क्षमयाभिहतः सदा ।
तेषां परतरे लोका स्तस्मात्क्षान्तिः परा मता ॥ ४४ ॥

---

उद्य० ३३ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्त मशक्तं मन्यते जनः ॥ ४८ ॥
सो ऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ ४६ ॥
क्षमा वशीकृति र्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ ५० ॥
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान् परं दोषैरात्मानं चैव योजयेत् ॥ ५१ ॥
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५२ ॥
द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ५८ ॥

---

उद्यो ३९ नातः श्रीमत्तरं किञ्चि दन्यत् पथ्यतमं तथा ।
प्रभविष्णो र्यथा तात क्षमा सर्वत्र सर्वदा ॥ ५६ ॥
क्षमेद ऽशक्तः सर्वस्य शक्तिमान् धर्मकारणात् ।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ६० ॥
तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बल मसाधूनां क्षमा गुणवतां बलम् ॥ ७० ॥

## अथ दमः

बृहदा० ३.५२. तदेतदेवैषा दैवी वागनु वदति स्तनयित्नु
द द द इति दाम्यत दत्त दयध्वमिति
तस्मादेतत् त्रयं शिक्षेद् दमं दानदयेति च ॥ १ ॥

तैत्ति० १०. ६२. दम इति नियतं ब्रह्मचारिण स्तस्माद्दमे रमन्ते, ।
दमेन दान्ताः किल्बिषमवधु न्वन्ति दमेन
ब्रह्मचारिणः सुवरगच्छन् दमो भूतानां दुराधर्षम् ।
दमे सर्वं प्रतिष्ठितं तस्मा द्दमं परमं वदन्ति ॥

---

शां० १६० ८० उ० महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेवेह धर्माणा मनुष्ठेयतमं मतम् ॥ ३ ॥
धर्मस्य महतो राजन् बहुशाखस्य तत्त्वतः ।
यन्मूलं परमं तात तत्सर्वं ब्रूहि तत्त्वतः ॥ ४ ॥

भीष्म उ० हन्त ते कथयिष्यामि येन श्रेयो ह्यवाप्स्यसि ।
पीत्वामृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि ॥ ५ ॥
धर्मस्य विधयो नैके ये वै प्रोक्ता महर्षिभिः ।
स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ ६ ॥
दमं निश्रेयसे प्राहुर्वृद्धा निश्चयदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ७ ॥
दमात्तस्य क्रियासिद्धि र्यथावदुपलभ्यते ।
दमो दानं तथा यज्ञानधीतं चातिवर्त्तते ॥ ८ ॥
दम स्तेजो वर्द्धयति पवित्रञ्च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥ ९ ॥
दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो लोके प्रशस्तः सर्वकर्मणाम् ॥ १० ॥
प्रेत्य चात्र मनुष्येन्द्र परमं विन्दते सुखम् ।
दमेन हि समायुक्तो महान्तं धर्ममश्नुते ॥ ११ ॥
सुखं दान्तः प्रस्वपिति सुखञ्च प्रतिबुध्यते ।
सुखं पर्य्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १२ ॥

अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान् प्रसृजत्यात्म दोषजान् ॥ १३ ॥
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥ १४ ॥
क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवम् ।
इन्द्रियाभिजयो दाक्ष्यं मार्द्दवं ह्री रचापलम् ॥ १५ ॥
अकार्पण्य मसंरम्भः सन्तोषः प्रियवादिता ।
अविहिंसानसूया चा ऽप्येषां समुदयो दमः ॥ १६ ॥
गुरुपूजा च कौरव्य दया भूतेषु पैशुनम् ।
जनवादं मृषावादं स्तुतिनिन्दाविवर्ज्जनम् ॥ १७ ॥
कामं क्रोधं च लोभं च दर्पं स्तम्भं विकत्थनम् ।
रोषमीर्षावमानं च नैव दान्तो निषेवते ॥ १८ ॥
अनिन्दितो ह्यकामात्मा नाल्पेष्वर्थ्यनसूयकः ।
समुद्रकल्पः स नरो न कथञ्चन पूर्य्यते ॥ १६ ॥
अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम् ।
पूर्व-सम्बन्धि-संयोगान्नैव दान्तो निषेवते ॥ २० ॥
सर्वा ग्राम्यास्तथारण्या याश्च लोके प्रवृत्तयः ।
निन्दाञ्चैव प्रशंसाञ्च यो नाश्रयति मुच्यते ॥ २१ ॥
मैत्रो ऽथ शीलसंपन्नः प्रसन्नात्मात्मविच्च यः ।
मुक्तश्च विविधैः सङ्गै स्तस्य प्रेत्य फलं महत् ॥ २२ ॥
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद् बुधः ।
प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते ॥ २३ ॥
कर्म्म यत् शुभमेवेह सद्भिराचरितं च यत् ।
तदेव ज्ञानयुक्तस्य मुनेर्वर्त्म न हीयते ॥ २४ ॥
निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरत्येवं ब्रह्म भूयाय कल्पते ॥ २५ ॥
अभयं यस्य भूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ २६ ॥
दान्तस्य किमरण्येन तथा दान्तस्य भारत ।
यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रयः ॥ २६ ॥

## अर्जुनस्य दमः ।

वन. ४२. वै. उ. गतेषु लोकपालेषु पार्थः शत्रुनिबर्हणः ।
चिन्तयामास राजेन्द्र देवराजरथं प्रति ॥ १ ॥
ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ २ ॥
तमो वितिमिरं कुर्वन् जलदान् पाटयन्निव ।
दिशः संपूरयन् नादैर्महामेघरवोपमैः ॥ ३ ॥
मातलिरुवाच. भो भोः शक्रात्मज श्रीमान् शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवान् शीघ्रं रथमिन्द्रस्य संमतम् ॥ ११ ॥
एष शक्रः परिवृतो दैवतैर्ऋषिगणैस्तथा ।
गंधर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥ १३ ॥
अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
आरोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि ॥ १४ ॥
अर्जुन उवाच. मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम् ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् ॥ १५ ॥
नातप्ततपसा शक्य एष दिव्यो महारथः ।
द्रष्टुं वाप्यथवा स्प्रष्टुमारोढुं कुत एव च ॥ १७ ॥
त्वयि प्रतिष्ठिते साधो रथस्थे स्थिरवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ १८ ॥
वैश. उवाच. तस्य तद्वचनं श्रुत्वा मातलिः शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयान्येमे च रश्मिभिः ॥ १९ ॥
ततोऽर्जुनो हृष्टमना गंगायामाप्लुतः शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत् कुरुनन्दनः ॥ २० ॥
ततः पितॄन्यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजन्तमाप्रष्टुमुपचक्रमे ॥ २१ ॥
साधूनां पुण्यशीलानां मुनीनां पुण्यकर्मणाम् ।
त्वं सदा संश्रयः शैल स्वर्गमार्गाभि काङ्क्षिणाम् ॥ २२ ॥

अद्रिराज महाशैल मुनिसंश्रय तीर्थवन् ।
गच्छाम्यामन्त्रयित्वा त्वां सुखमस्म्युषितस्त्वयि ॥ २३ ॥
एवमुक्त्वार्जुनः शैलं आमन्त्र्य परवीरहा ।
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः ॥ २८ ॥
सोऽदर्शनपथं यातो मर्त्यानां धर्मचारिणाम् ।
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ॥ ३० ॥
न तत्र सूर्यः सोमो वा द्योतते न च पावकः ।
स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ॥ ३१ ॥
ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयार्चिषा ।
तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ॥ ३४ ॥
एवं स संक्रमंस्तत्र स्वर्गलोके महायशाः ॥ ४१ ॥

---

वैशं.उवा.वन.४३.स ददर्श पुरीं रम्यां सिद्धचारणसेविताम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ १ ॥
तत्र सौगन्धिकानाञ्च पुष्पाणां पुण्यगन्धिनाम् ।
उद्वीज्यमानो मिश्रेण वायुना पुण्यगन्धिनाम् ॥ २ ॥
नन्दनञ्च वनं दिव्य मप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमै राह्वयद्भि रिव द्रुमैः ॥ ३ ॥
नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना ।
सलोकः पुण्यकर्तॄणां नापि युद्धे पराङ्मुखैः ॥ ४ ॥
नायज्वभिर्नाव्रतिकैर्न वेदश्रुतिवर्जितैः ।
नानाप्लुतांगै स्तीर्थेषु यज्ञदानबहिष्कृतैः ॥ ५ ॥
नापि यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यं कथञ्चन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥ ६ ॥
स तद्दिव्यं वनं पश्यन् दिव्यगीतनिनादितम् ।
प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ॥ ७ ॥

वन४४।षेश२. ततो देवाः सगन्धर्वा समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ १ ॥
पाद्यमाचमनीयञ्च प्रतिग्राह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरन्दरनिवेशनम् ॥ २ ॥
एवं सम्पूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३ ॥
शक्रस्य हस्ताद्दयितं वज्रमस्त्रञ्च दुःसहम् ।
अशनींश्च महानादा मेघबर्हिण लक्षणाः ॥ ४ ॥
वन ४५· कदाचिदथ तं शक्र श्चित्रसेनं रहोऽब्रवीत् ।
उर्वशी पुरुषव्याघ्रं सोपतिष्ठतु फाल्गुनम् ॥ २ ॥
एव मुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात् ।
गन्धर्वराजोऽप्सरस मभ्यगा दुर्वशीं वराम् ॥ ४ ॥
तां दृष्ट्वा विदितो हृष्टः स्वागतेनार्चितस्तथा ।
सुखासीनः सुखासीनां स्मितपूर्वं वचोऽब्रवीत् ॥ ५ ॥
यस्तु देवमनुष्येषु प्रख्यातः सहजैर्गुणैः ।
श्रिया शीलेन रूपेण व्रतेन च दमेन च ॥ ७ ॥
प्रख्यातो बलवीर्य्येण सम्मतः प्रतिभानवान् ।
वर्चस्वी तेजसा युक्तः क्षमावान् वीतमत्सरः ॥ ८ ॥
साङ्गोपनिषदान् वेदान् चतुराख्यानपञ्चमान् ।
योऽधीते गुरुशुश्रूषां मेधाञ्चाष्टगुणाश्रयाम् ॥ ९ ॥
ब्रह्मचर्य्येण दाक्ष्येण प्रसवैर्वयसापि च ।
एको वै रक्षिता चैव त्रिदिवं मघवानिव ॥ १० ॥
अकत्थनो मानयिता स्थूललक्ष्यः प्रियम्वदः ।
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ॥ ११ ॥
सत्यवाक् पूजितो वक्ता रूपवाननहंकृतः ।
भक्तानुकम्पी कान्तश्च प्रियश्च स्थिरसङ्गरः ॥ १२ ॥
प्रार्थनीयैर्गुणगणै र्महेन्द्रवरुणोपमः ।
एवमुक्त्वा स्मितं कृत्वा सम्मानं बहु मन्य च ।
प्रत्युवाचोर्वशी प्रीत्या चित्रसेनमनिन्दिता ॥ १५ ॥

यस्त्वस्य कथितः सत्यो गुणोद्देशस्त्वया मम ।
तं श्रुत्वा व्यथयं पुंसो वृणुयां किमतोऽर्जुनम् ॥ १६ ॥
गच्छ त्वं हि यथाकाममागमिष्याम्यहं सुखम् ॥ १७ ॥

---

वैशम्पा. उ. ततो विसृज्य गन्धर्वं कृतकृत्यं शुचिस्मिता ।
वन० ४६ उर्वशी चाकरोत् स्नानं पार्थप्रार्थनलालसा ॥ १ ॥
स्नानालङ्करणैर्हृद्यैर्गन्धमाल्यैश्च सुप्रभैः ।
निर्गम्य चन्द्रोदयने विगाढ़े रजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ॥ ५ ॥
मृदुकुञ्चितदीर्घेण कुसुमोत्करधारिणा ।
केशहस्तेन ललना जगामाथ विराजती ॥ ६ ॥
भ्रूक्षेपालापमाधुर्य्यैः कान्त्या सौम्यतयापि च ।
शशिनं वक्त्रचन्द्रेण साह्वयन्तीव गच्छती ॥ ७ ॥
सिद्धचारणगन्धर्वैः सा प्रयाता विलासिनी ।
बह्वाश्चर्य्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ॥ १४ ॥
सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तन्वभ्राभ्रावृता व्योम्नि चन्द्रलेखेव गच्छती ॥ १५ ॥
ततः प्राप्ता क्षणेनैव मनःपवनगामिनी ।
भवनं पाण्डुपुत्रस्य फाल्गुनस्य शुचिस्मिता ॥ १६ ॥
तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता ।
अर्जुनस्य नरश्रेष्ठ उर्वशी शुभलोचना ॥ १७ ॥
उपातिष्ठत तद्वेश्म निर्मलं सुमनोहरम् ।
स शङ्कितमना राजन् प्रत्युद्गच्छत तां निशि ॥ १८ ॥
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः ।
तदाभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥ १९ ॥
अर्जुन उ० अभिवादे त्वां शिरसा प्रवराप्सरसां वरे ।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ॥ २० ॥
फाल्गुनस्य वचः श्रुत्वा गतसंज्ञा तदोर्वशी ।
गन्धर्ववचनं सर्वं श्रावयामास तं तदा ॥ २१ ॥

उर्व. उ. यथा मे चित्रसेनेन कथितं मनुजोत्तम ।
तत्तेऽहं संप्रवक्ष्यामि यथा चाहमिहागता ॥ ३२ ॥
शक्रतुल्यं रणे शूरं सदौदार्य्यगुणान्वितम् ।
पार्थं प्रार्थय सुश्राणि त्वमित्येवं तदाब्रवीत् ॥ ३३ ॥
ततोऽहं समनुज्ञाता चित्रसेनेन तेऽनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिन्दम ॥ ३४ ॥
त्वद्गुणाकृष्टचित्ताहमनङ्ग वशमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ॥ ३५ ॥
वैशम्पा०उ० तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतोऽर्जुनः ।
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये ॥ ३६ ॥
अर्जुनउवाच. दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भाविनि ।
गुरुदारैः समाना मे निश्चयेन वरानने ॥ ३७ ॥
यथा कुन्ती महाभागा यथेन्द्राणी शची मम ।
तथा त्वमपि कल्याणि नात्र कार्य्या विचारणा ॥ ३८ ॥
उर्वश्युवाच. अनावृताश्च सर्वाः स्म देवराजाभिनन्दन ।
गुरु स्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥ ४२ ॥
तत् प्रसीद न मामार्त्तां विसर्ज्जयितु मर्हसि ।
हृच्छयेन च सन्तप्तां भक्ताञ्च भज मानद ॥ ४४ ॥
अर्जुनउवाच. शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्य निन्दिते ।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः । ४५ ॥
यथा कुन्ती च माद्री च शची चेह ममानघे ।
तथा च वंशजननी त्वं हि मे ऽद्य गरीयसी ॥ ४६ ॥
गच्छ मूर्द्धना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि ।
त्वं हि मे मातृवत् पूज्या रक्ष्योऽहं पुत्रवत्त्वया ॥ ४७ ॥
वैशम्पा० उ० एवमुक्त्वा तु पार्थेन उर्वशी क्रोधमूर्च्छिता ।
वेपन्ती भ्रुकुटीवक्त्रा शशापाथ धनञ्जयम् ॥ ४८ ॥
उर्वश्युवाच. तव पित्राभ्यनुज्ञातां स्वयञ्च गृहमागताम् ।
यस्मान्मां नाभिनन्देथाः कामबाणवशङ्गताम् ॥ ४९ ॥
तस्मात्त्वं नर्त्तनः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुमानिति विख्यातः षण्डवद्विचरिष्यसि ॥ ५० ॥

ब्रह्मपा॰ उ॰ एवं दत्त्वार्जुने शापं स्फुरदोष्ठी श्वसन्त्यथ ।
पुनः प्रत्यागता क्षिप्रमुर्वशी गृहमात्मनः ॥ ५१ ॥
ततोऽर्जुन स्त्वरमाणश्चित्रसेन मरिन्दमः ।
संप्राप्य रजनीवृत्तं तदुर्वश्या यथा तथा ॥ ५२ ॥
निवेदयामास तदा चित्रसेनाय पाण्डवः ।
तत्र चैव यथावृत्तं शापञ्चैव पुनः पुनः ॥ ५३ ॥
न्यवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ।
तत आनाय्य तनयं विविक्ते हरिवाहनः ॥ ५४ ॥
सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानोऽभ्यभाषत ।
सुपुत्राद्य पृथा तात त्वया पुत्रेण सत्तम ।
ऋषयोऽपि हि धैर्य्येण जिता वै ते महाभुज ॥ ५५ ॥
यत्तु दत्तवती शापमुर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ॥ ५६ ॥
अज्ञातवासो वस्तव्यो भवद्भिर्भूतले ऽनघ ।
वर्षे त्रयोदशे वीर तं तत्र क्षपयिष्यसि ॥ ५७ ॥
तेन नर्त्तनवेशेन अपुंस्त्वेन तथैव च ।
वर्षमेकं विहृत्यैवं ततः पुंस्त्वमवाप्स्यसि ॥ ५८ ॥
एवमुक्तस्तु शक्रेण फाल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापं व्यचिन्तयत् ॥ ५९ ॥
चित्रसेनेन सहितो गन्धर्वेण यशस्विना ।
रेमे स स्वर्गभवने पाण्डुपुत्रो धनञ्जयः ॥ ६० ॥
य इदं शृणुयान्नित्यं वृत्तं पाण्डुसुतस्य वै ।
न तस्य कामः कामेषु पापकेषु प्रवर्त्तते ॥ ६१ ॥
इदममरवरात्मजस्य घोरं शुचिचरितं विनिशम्य फाल्गुनस्य ।
व्यपगतमददम्भरागदोषास्त्रिदिवगताभिरमन्ति मानवेन्द्राः ॥६२

## अथ ब्रह्मचर्य्यम् ।

अथर्व॰ ब्रह्मचारी ष्णंश्चरति रोदसी उभे तस्मिन् देवाः संमनसो भवन्ति । स दाधार पृथिवीं दिवं च स आचार्यं तपसा पिपर्त्ति ॥ १ ॥ ब्रह्मचारिणं पितरो देवजनाः पृथग्देवा

अनुसंयन्ति सर्वे । गन्धर्वा एन मन्वायन् त्रयस्त्रिंशत् त्रिशताः षट् सहस्राः सर्वान्त्स देवांस्तपसा पिपर्त्ति ॥२॥ आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः । तं रात्रो स्तिस्र उदरे बिभर्ति तं जातं द्रष्टु मभिसंयन्ति देवाः ॥ ३ ॥ इयं समित् पृथिवी द्यौर्द्वितीयो तान्तरिक्षं समिधा पृणाति । ब्रह्मचारी समिधा मेखलया श्रमेण लोकां स्तपसा पिपर्त्ति ॥ ४ ॥ पूर्वो जातो ब्रह्मणो ब्रह्मचारी घर्मं वसान स्तपसोदतिष्ठत् । तस्माज्जातं ब्राह्मणं ब्रह्मज्येष्ठं देवाश्च सर्वे अमृतेन साकम् ॥ ५ ॥ ब्रह्मचार्येति समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः ।,स सद्य एति पूर्वस्मादुत्तरं समुद्रं लोकान्त्सं गृभ्य मुहुराचरिक्रत् ॥ ६ ॥ ब्रह्मचारी जनयन् ब्रह्मापो लोकं प्रजापतिं परमेष्ठिनं विराजम् गर्भो भूत्वामृतस्य योनाविन्द्रो ह भूत्वा सुरां स्ततर्ह ॥ ७ ॥ आचार्यस्ततक्ष नभसी उभे इमे उर्वी गम्भीरे पृथिवीं दिवं च । ते रक्षति तपसा ब्रह्मचारी तस्मिन् देवाः संमनसो भवन्ति ॥ ८ ॥ इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षा माजभार प्रथमो दिवं च । ते कृत्वा समिधावुपास्ते तयो रार्पिता भुवनानि विश्वा ॥ ९ ॥ अर्वागन्यः परो अन्यो दिवस्पृष्ठाद् गुहानिधी निहितौ ब्राह्मणस्य । तौ रक्षति तपसा ब्रह्मचारी तत् केवलं कृणुते ब्रह्मविद्वान् १० अर्वागन्य इतो अन्यः पृथिव्या अग्नी समेतो नभसी अन्तरेमे । तयोः श्रयन्ते रश्मयोधि दृढास्ताना तिष्ठति तपसा ब्रह्मचारी ॥ ११ ॥ अभिक्रन्दन् स्तनयन्नरुणः शितिङ्गो बृहच्छेपोनु भूमौ जभार । ब्रह्मचारी सिञ्चति सानौ रेतो पृथिव्यां तेन जीवन्ति प्रदिशश्चतस्रः ॥ १२ ॥ अग्नौ सूर्ये चन्द्रमसि मातरिश्वन् ब्रह्मचार्य प्सु समिधमा दधाति । तासा मर्चीं पि पृथगभ्रे चरन्ति तासामाज्यं पुरुषो वर्ष मापः ॥ १३ ॥ आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः । जीमूता आसनत्सानस्तै रिदंस्व राभृतम् ॥ १४ ॥ अमा घृतं कृणुते केवल माचार्यो भूत्वा वरुणो यद्य दैच्छत्

प्रजापतौ । तद् ब्रह्मचारी प्रायच्छत् स्वान् मित्रो अध्या
त्मनः ॥ १५ ॥ आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।
प्रजापति र्वि राजति विराडिन्द्रो भवद् वशी ॥ १६ ॥
ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति । आचार्यो
ब्रह्मचर्येण ब्रह्मचारिण मिच्छते ॥ १७ ॥ ब्रह्मचर्येण कन्या
युवानं विन्दते पतिम् । अनड्वान् ब्रह्मचर्येणा श्वो घासं
जिगीर्षति ॥ १८ ॥ ब्रह्मचर्येण तपसा देवा मृत्यु मपाघ्नत
इन्द्रो ह ब्रह्म चर्येण देवेभ्यः स्व रा भरत् ॥ १९ ॥ ओषधयो
भूतभव्य महोरात्रे वनस्पतिः । संवत्सरः सहर्तुभिस्ते
जाता ब्रह्म चारिणः ॥ २० ॥ पार्थिवा दिव्याः पशव
आरण्या ग्राम्याश्च ये । अपक्षाः पक्षिणश्च ये ते जाता
ब्रह्मचारिणः । २१ । पृथक् सर्वे प्राजा पत्याः प्राणाना त्मसु
बिभ्रति । तान्त्सर्वान् ब्रह्मरक्षति ब्रह्मचारिण्याभृतम् । २२।
देवाना मेतत् परिपूत मनभ्यारूढं चरति रोचमानम् ।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश्च सर्वे अमृतेन
साकम् ॥ २३॥ ब्रह्मचारी ब्रह्म भ्राजद् बिभर्ति तस्मिन्
देवा अधिविश्वे समोताः । प्राणापानौ जनयन्नाद् व्यानं
वाच मनो हृदयं ब्रह्म मेधाम् ॥ २४ ॥ चक्षुः श्रोत्रं यशो
अस्मासु धेह्यन्नं रेतो लोहित मुदरम् ॥ २५ ॥ तानि कल्पद्
ब्रह्मचारी सलिलस्य पृष्ठे तपो तिष्ठत् तप्यमानः समुद्रे ।
स स्नातो बभ्रुः पिङ्गलः पृथिव्यां बहु रोचते ॥ २६ ॥

अनु. १९. अत्राप्युदाहरन्तीम मितिहासं पुरातनम् ।
भीष्म. र. अष्टावक्रस्य सम्वादं दिशाया सह भारत ॥ १० ॥
निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः ।
ऋषेरथ वदान्यस्य वव्रे कन्यां महात्मनः ॥ ११ ॥
सुप्रभां नाम वै नाम्ना रूपेणा प्रतिमां भुवि ।
गुणप्रभावशीलेन चारित्रेण च शोभनाम् ॥ १२ ॥
सा तस्य दृष्ट्वैव मनो जहार शुभलोचना ।
वनराजी यथा चित्रा वसन्ते कुसुमाचिता १३

ऋषिस्तमाह देया मे सुता तुभ्यं हि तत् शृणु ।
गच्छ तावद्दिशं पुण्या मुत्तरां द्रक्ष्यसे ततः ॥ १४ ॥
अष्टा·उवाच·किं द्रपृच्यं मया तत्र वक्तु मर्हति मे भवान् ।
तथेदानीं मया कार्य्यं यथा वक्ष्यति मां भवान् ॥ १५ ॥
वदान्यउवा.धनदं समतिक्रम्य हिमवन्तं च पर्वतम् ।
रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितम् ॥ १६ ॥
ततो नीलं वनोद्देशं द्रक्ष्यसे मेघसन्निभम् ।
रमणीयं मनोग्राहि तत्र वै द्रक्ष्यसे स्त्रियम् ॥ २३ ॥
तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठिताम् ।
द्रपृव्या सा त्वया तत्र सम्पूज्या चैव यत्नतः ॥ २४ ॥
तां दृष्ट्वा विनिवृत्तस्त्वं ततः पाणिं ग्रहीष्यसि ।
यद्येष समयः सर्वः साध्यतां तत्र गम्यताम् ॥ २५ ॥
अष्टा·उवाच·तथास्तु साधयिष्यामि तत्र यास्याम्य संशयम् ।
यत्र त्वं वदसे साधो भवान् भवतु सत्यवाक् ॥ २६ ॥
भीष्म·उवा·ततोऽगच्छत् स भगवानुत्तरामुत्तमां दिशम् ।
हिमवन्तं गिरिश्रेष्ठं सिद्धचारण सेवितम् ॥ २७ ॥
स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिम् ।
अभ्यगच्छन्नदीं पुण्यां बाहुदां धर्मशालिनीम् ॥ २८ ॥
अशोके विमले तीर्थे स्नात्वा वै तर्प्य देवताः ।
तत्र वासाय शयने कौश्ये सुखमुवास ह ॥ २६ ॥
ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः ।
स्नात्वा प्रादुश्चकाराग्निं स्तुत्वा चैनं प्रधानतः ॥ ३० ॥
रुद्राणीं रुद्रमासाद्य ह्रदे तत्र समाश्वयत् ।
विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ॥ ३१ ॥
सोऽपश्यत् काञ्चनं द्वारं दीप्यमानमिव श्रिया ।
मन्दाकिनीञ्च नलिनीं धनदस्य महात्मनः ॥ ३२ ॥
ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम् ।
विधिवत् कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ॥ ३७ ॥
सुखं प्राप्तो भवान् कच्चित् किं वा मत्ताश्चिकीर्षति ।
ब्रूहि सर्वं करिष्यामि यन्मां वदयसि वै द्विज ॥ ३८ ॥

अतिथिः पूजनीयस्त्वमिदञ्च भवतो गृहम् ।
सर्वमाज्ञाप्यतामाशु परवन्तो वयं त्वयि ॥ ५० ॥
अथ वैश्रवणं प्रीतो भगवान् प्रत्यभाषत ।
अर्चितोऽस्मि यथान्यायं गमिष्यामि धनेश्वर ॥ ५१ ॥
प्रीतोऽस्मि सदृशश्चैव तव सर्वं धनाधिप ।
तव प्रसादाद्भगवन् महर्षेश्च महात्मनः ॥ ५२ ॥
नियोगादद्य यास्यामि वृद्धिमानृद्धिमान् भव ।
अथ निष्क्रम्य भगवान् प्रययावुत्तरामुखः ॥ ५३ ॥
कैलासं मन्दरं हैमं सर्वाननुचचार ह ।
तानतीत्य महाशैलान् कैरातं स्थानमुत्तमम् ॥ ५४ ॥
प्रदक्षिणं तथा चक्रे प्रयतः शिरसा गतः ॥
स तत्र काञ्चनं दिव्यं सर्वरत्नमयं गृहम् ।
ददर्शाद्भुतसङ्काशं धनदस्य गृहाद्वरम् ॥ ६१ ॥
नानाविधैश्च भवनैर्विचित्रमणितोरणैः ।
मुक्ताजालविनिक्षिप्तैर्मणिरत्नविभूषितैः ॥ ६४ ॥
मनोदृष्टिहरै रम्यैः सर्वतः संवृतं शुभैः ।
ऋषिभिश्चावृतं तत्र आश्रमं तं मनोहरम् ॥ ६५ ॥
ततस्तस्य भवच्चिन्ता कुत्र वासो भवेदिति ।
अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ॥ ६६ ॥
अतिथिं समनुप्राप्तमभिजानन्तु येऽत्र वै ।
अथ कन्याः परिवृता गृहात्तस्माद्विनिर्गताः ॥
नानारूपाः सप्त विभो कन्याः सर्वा मनोहराः । ६७ ॥
यां यामपश्यत् कन्यां वै सा सा तस्य मनोऽहरत् ।
न च शक्तो वारयितुं मनोऽस्याथावसीदति ॥ ६८ ॥
ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः ।
अथ तं प्रमदाः प्राहुर्भगवान् प्रविशत्विति ॥ ६९ ॥
स च तासां सुरूपाणां तस्यैव भवनस्य हि ।
कौतूहलसमाविष्टः प्रविवेश गृहं द्विजः ॥ ७० ॥
तत्रापश्यज्जरायुक्तामरजोम्बरधारिणीम् ।
वृद्धां पर्यङ्कमासीनां सर्वाभरणभूषिताम् ॥ ७१ ॥

स्वस्तीति तेन चैवोक्ता सैव प्रत्यवदत्तदा ।
प्रत्युत्थाय च तं विप्रमास्यतामित्युवाच ह ॥ ७१ ॥
अष्टाव-उ· सर्वाः स्वानालयान् यान्तु एका मामुपतिष्ठतु ।
प्रज्ञाता या प्रशान्ता या शेषा गच्छन्तु छन्दतः ॥ ७३ ॥
ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा ।
निश्चक्रमुर्गृहात्तस्मात् सा वृद्धाथ व्यतिष्ठत ॥ ७४ ॥
अथ तां सम्विशन् प्राह शयने भास्वरे तदा ।
त्वयापि सुप्यतां भद्रे रजनी ह्यनिवर्त्तते ॥ ७५ ॥
संलापात्तेन विप्रेण तथा सा तत्र भाषिता ।
द्वितीये शयने दिव्ये संविवेश महाप्रभे ॥ ७६ ॥
अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा ।
व्यपदिश्य महर्षेर्वै शयनं व्यवरोहत ॥ ७७ ॥
निर्विकारमृषिञ्चापि काष्ठकुड्योपमं तदा ।
दुःखिता प्रेक्ष्य संजल्पमकार्षीदृषिणा सह ॥ ७६ ॥
अष्टा॰ उ· परदारानहं भद्रे न गच्छेयं कदाचन ।
दूषितं धर्मशास्त्रज्ञैः परदाराभिमर्षणम् ॥ ८८ ॥
भद्रे निवेष्टुकामं मां विद्धि सत्येन वै शपे ।
विषयेष्वनभिज्ञोऽहं धर्मार्थं किल सन्ततिः ॥ ८९ ॥
एवं लोकान् गमिष्यामि पुत्रैरिति न संशयः ।
भद्रे धर्मं विजानीहि ज्ञात्वा चोपरमस्व ह ॥ ९० ॥

---

अनु. २० अथ सा स्त्री भगवन्तं सुप्यतामित्यचोदयत् ।
तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ॥ १० ॥
पृथक् चैव तु सुप्तो ऽसौ सा च स्त्री स मुनिस्तदा ।
अथार्द्धरात्रे सा स्त्री तु शयनं तदुपागमत् ॥ ११ ॥
न भद्रे परदारेषु मनो मे सम्प्रसज्जति ।
उत्तिष्ठ भद्रे भद्रन्ते स्वयं वै विरमस्व च ॥ १२ ॥
सा तदा तेन विप्रेण तथा धृत्या निवर्त्तिता ।
स्वतन्त्रास्मीत्युवाचर्षिं न धर्मच्छलमस्ति ते ॥ १३ ॥
हरन्ति दोषजातानि नरं जातं यथेच्छकम् ।
प्रभवामि सदा धृत्या भद्रे स्वशयनं व्रज ॥ १६ ॥

शिरसा प्रणमे विप्र प्रसादं कर्त्तुमर्हसि।
भूमौ निपतमानायाः शरणं भव मे ऽनघ ॥ १७ ॥
यदि वा दोषजातं त्वं परदारेषु पश्यसि।
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ॥ १८ ॥
न दोषो भविता चैव सत्येनैतत् ब्रवीम्यहम्।
स्वतन्त्रां मां विजानीहि योऽधर्मः सोऽस्तु वै मयि ॥
त्वय्यावेशितचित्ता च स्वतन्त्रास्मि भजस्व माम् ॥ १९ ॥
अष्टावक्र उ॰ स्वतन्त्रा च कथं भद्रे ब्रूहि कारण मत्र वै।
नास्ति त्रिलोके स्त्री काचित् या वै स्वातन्त्र्यमर्हति ॥ २० ॥
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्राश्च स्थाविरे काले नास्ति स्त्रीणां स्वतन्त्रता ॥ २१ ॥
स्त्री उवाच॰ कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः।
पत्नीं कुरुष्व मां विप्र श्रद्धां विजहि मा मम ॥ २२ ॥
अष्टावक्र उ॰ यथा मम तथा तुभ्यं यथा तुभ्यं तथा मम।
जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं न किं भवेत् ॥ २३ ॥
आश्चर्य्यं परमं हीदं किन्नु श्रेयो हि मे भवेत्।
दिव्या भरणवस्त्रा हि कन्येयं मा मुपस्थिता ॥ २४ ॥
किन्त्वस्याः परमं रूपं जीर्णमासीत् कथं पुनः।
कन्या रूपमिहाद्यैवं किमिवात्रोत्तरं भवेत् ॥ २५ ॥
यथापरं शक्तिधृते न व्युत्थास्ये कथञ्चन।
न रोचते हि व्युत्थानं सत्येनासादयाम्यहम् ॥ २६ ॥

---

युधिष्ठिर उ॰ न बिभेति कथं सा स्त्री शापाच्च परमद्युतेः।
कथं निवृत्तो भगवांस्तद्भवान् प्रब्रवीतु मे ॥ १ ॥
भीष्म उवाच॰ अष्टावक्रो ऽन्वपृच्छत्तां रूपं विकुरुषे कथम्।
न चानृतं ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया ॥ २ ॥
स्त्री उवाच द्यावापृथिव्योर्यत्रैषा काम्या ब्राह्मणसत्तम।
शृणुष्वावहितः सर्वं यदिदं सत्यविक्रम ॥ ३ ॥
जिज्ञासेयं प्रयुक्ता मे स्थिरीकर्त्तुं तवानघ।
अव्युत्थानेन ते लोका जिताः सत्यपराक्रम ॥ ४ ॥

उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलञ्च ते ।
तुष्टः पितामहस्तेऽद्य तथा देवाः सवासवाः ॥ ६ ॥
स त्वं येन च कार्य्येण सम्प्राप्तो भगवानिह ॥
प्रेषित स्तेन विप्रेण कन्या पित्रा द्विजर्षभ ।
तवोपदेशं कर्त्तुं वै तच्च सर्वं मया कृतम् ॥ ७ ॥
क्षेमी गमिष्यसि गृहं श्रमश्च न भविष्यति ।
कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च भविष्यति ॥ ८ ॥
काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तमम् ।
अनतिक्रमणीया सा कृत्स्नै र्लोकैस्त्रिभिः सदा ॥ ६ ॥
गच्छस्व सुकृतं कृत्वा किं चान्यच्छ्रोतुमर्हसि ।
यावद् ब्रवीमि विप्रर्षे अष्टावक्र यथातथम् ॥ १० ॥
ऋषिणा प्रसादिता चास्मि तव हेतोर्द्विजर्षभ ।
तस्य सम्माननार्थं मे त्वयि वाक्यं प्रभाषितम् ॥ ११ ॥
भीष्मउवाच. श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलि स्थितः ।
अनुज्ञातस्तयाचापि स्वगृहं पुनराव्रजत् ॥ १२ ॥
गृहमागत्य विश्रान्तः स्वजनं परिपृच्छ्य च ।
अभ्यगच्छच्च तं विप्रं न्यायतः कुरुनन्दन ॥ १३ ॥
पृष्टश्च तेन विप्रेण दृष्टन्त्वेतन्निदर्शनम् ।
प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना ॥ १४ ॥
भवता समनुज्ञातः प्रस्थितो गन्धमादनम् ।
तस्य चोत्तरतो देशे दृष्टं मे दैवतं महत् ॥ १५ ॥
तया चाहमनुज्ञातो भवांश्चापि प्रकीर्त्तितः ।
श्रावितश्चापि तद्वाक्यं गृहं चाभ्यागतः प्रभो ॥ १६ ॥
तमुवाच तदा विप्रः सुतां प्रतिगृहाण मे ।
नक्षत्रविधियोगेन पात्रं हि परमं भवान् ॥ १७ ॥
भीष्मउवाच. अष्टावक्र स्तथेत्युक्त्वा प्रतिगृह्य च तां प्रभो ।
कन्यां परमधर्मात्मा प्रीतिमांश्चाभवत्तदा ॥ १८ ॥
कन्यां तां प्रतिगृह्यैव भार्य्यां परम शोभनाम् ।
उवाच मुदितस्तत्र स्वाश्रमे विगतज्वरः ॥ १६ ॥

---

अथास्तेयम् ।

शांति. २३. अत्राप्युदाहरन्तीम मितिहासं पुरातनम् ।
व्याप. ३. शंखश्च लिखित आस्तां भ्रातरौ संशितव्रतौ ॥ १७॥
तयौ रावसथावास्तां रमणीयौ पृथक् पृथक् ।
नित्य पुष्प फलै र्वृक्षै रुपेतौ बाहुदामनु ॥१८॥
ततः कदाचिल्लिखितः शंखस्याश्रममागतः ।
यदृच्छयाऽथ शंखोऽपि निष्क्रान्तोऽभव दाश्रमात् ॥ १९ ॥
सोऽभिगम्याश्रमं भ्रातुः शंखस्य लिखित स्तदा ।
फलानि पातयामास सम्यक् परिणतान्युत ॥ २० ॥
अभ्युपादाय विस्रब्धो भक्षयामास सद्विजः ।
अस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः ॥ २१ ॥
भक्षयन्तन्तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फला न्यवाप्तानि हेतुना केन खादसि ॥ २२ ॥
सोऽब्रवीत् भ्रातरं ज्येष्ठमुपस्पृत्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥ २३ ॥
तमब्रवीत्तथा शंखस्तीव्ररोषसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥ २४ ॥
गच्छ राजानमासाद्य स्वकर्म कथयस्व वै ।
अदत्तादान मेवं हि कृतं पार्थिवसत्तम ॥ २५ ॥
स्तेनं मां त्वं विदित्वा च स्वधर्म मनुपालयन् ।
शीघ्रं धारय चौरस्य मम दण्डं नराधिप ॥ २६ ॥
इत्युक्त स्तस्य वचनात् सुद्युम्नं स नराधिपम् ।
अभ्यगच्छन्महाभागो लिखितः संशितव्रतः ॥ २७ ॥
सुद्युम्न स्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत् सहामात्यः पद्भ्यामेव जनेश्वरः ॥ २८ ॥
तमब्रवीत्समागम्य सराजा धर्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन् कृतमेव तत् ॥ २९ ॥
एव मुक्तः सविप्रर्षिः सुद्युम्न मिद मब्रवीत् ।
प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ ३० ॥

अनिसृष्टानि गुरुणा फलानि मनुजर्षभ ।
भक्षितानि महाराज तत्र मां शाधि माचिरम् ॥ ३१ ॥

सुद्युम्न उ. प्रमाणञ्चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद् ब्राह्मणर्षभ ॥ ३२ ॥

स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतो ऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ ३३ ॥

व्यासउवाच· स छन्द्यमानो विप्रर्षिः पार्थिवेन महात्मना ।
नान्यं सवरयामास तस्माद्दण्डा दृते वरम् ॥ ३४ ॥

ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ ३५ ॥

स गत्वा भ्रातरं शंखमार्त्तरूपो ऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भवांस्तत्क्षन्तुमर्हति ॥३६ ॥ ॥

शङ्खउवाच· न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥३७ ॥

स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवानृषीन् पितॄं श्चैव मा चाधर्मे मनः कृथाः ॥ ३८ ॥

तस्य तद्वचनं श्रुत्वा शंखस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ ३९ ॥

प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥ ४० ॥

तत स्तमब्रवीत् शङ्ख स्तपसेदं कृतं मया ।
मा च तत्र विशङ्का भूद् दैवमत्र विधीयते ॥ ४१ ॥

लिखित.उवाच· किन्नु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यं मीदृशं द्विजसत्तम ॥ ४२ ॥

शङ्खउवाच. एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपति स्त्वञ्चापि पितृभिः सह ॥ ४३ ॥

यजुः मागृधः कस्य स्विद्धनम् ।

---

भाग. ११.२४ यशो यशस्विनांशुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान् हन्ति श्वित्रोरूपमिवेप्सितम् ॥

---

शां-१५८यु-ड- पापस्य यदधिष्ठानं यतः पापं प्रवर्त्तते ।
एतदिच्छाम्यहं श्रोतुं तत्वेन भरतर्षभ ॥ १ ॥
भीष्म- उवाच- पापस्य यदधिष्ठानं तत् शृणुष्व नराधिप ।
एको लोभो महाग्राहो लोभात् पापं प्रवर्तते ॥ २ ॥
अतः पापमधर्मश्च तथा दुःख मनुत्तमम् ।
निकृत्या मूलमेतद्धि येन पापकृतो जनाः ॥ ३ ॥
लोभात् क्रोधः प्रभवति लोभात् कामः प्रवर्त्तते ।
लोभान् मोहश्च माया च मानस्तम्भः परासुता ॥ ४ ॥
अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः ।
अभिध्या प्रख्यता चैव सर्वं लोभात् प्रवर्त्तते ॥ ५ ॥
अत्याग श्चातितर्षश्च विकर्म्मसु च या क्रिया ।
कुल-विद्या-मद-श्चैव रूपैश्वर्य्य-मदस्तथा ॥ ६ ॥
सर्वभूतेष्वभिद्रोहः सर्व भूतेष्वसत्कृतिः ।
सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम् ॥ ७ ॥
हरणं परवित्तानां परदाराभिमर्षणम् ।
वाग्वेगो मनसो वेगो निन्दावेग स्तथैव च ॥ ८ ॥
उपस्थोदरयो र्वेगो मृत्युवेग श्च दारुणः ।
ईर्षावेग श्च बलवान् मिथ्यावेग श्च दुर्जयः ॥
रसवेगश्च दुर्वार्य्यः श्रोत्रवेग श्च दुःसहः ॥ ९ ॥
कुत्सा विकत्थामात्सर्य्यं पापं दुष्करकारिता ।
साहसानां च सर्वेषामकार्य्याणां क्रियास्तथा ॥ १० ॥
जातौ बाल्ये च कौमारे यौवने चापि मानवाः ।
न सन्त्यजन्त्यात्मकर्म्म यो न जीर्य्यति जीर्य्यतः ॥ ११ ॥
यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह ।

नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः ।
न प्रहृष्यति यो लाभैः कामैर्यश्च न तृप्यति ॥ १२ ॥
यो न दैवैर्न गन्धर्वैर्नासुरैर्न महोरगैः ।
ज्ञायते नृप तत्वेन सर्वैर्भूतगणैस्तथा ।
स लोभः सह मोहेन विजेतव्यो जितात्मना ॥ १३ ॥
दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा ।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम् ॥ १४ ॥
सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः ।
छेत्तारः संशयानाञ्च लोभग्रस्ता व्रजन्त्यधः ॥ १५ ॥
द्वेष क्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ।
अन्तःक्रूरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ॥
धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ॥ १६ ॥
कुर्वते च बहून् मार्गांस्तान् हेतुबलमाश्रिताः ॥
सतां मार्गान् विलुम्पन्ति लोभज्ञानेष्ववस्थिताः ॥ १७ ॥
धर्मस्य क्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।
या या विक्रियते संस्था ततः सापि प्रपद्यते ॥ १८ ॥
दर्पः क्रोधो मदः स्वप्नो हर्षः शोको ऽभिमानिता ।
एत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु ॥ १९ ॥
एतानशिष्टान् बुध्यस्व नित्यं लोभसमन्वितान् ।
शिष्टांस्तु परिपृच्छेथा यान् वदयामि शुचिव्रतान् ॥ २०
येष्वावृत्तिभयं नास्ति परलोकभयं न च ।
नामिषेषु प्रसङ्गो ऽस्ति न प्रियेष्वप्रियेषु च ॥ २१ ॥
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ।
सुखं दुःखं समं येषां सत्यं येषां परायणम् ॥ २२ ॥
दातारो न गृहीतारो दयावन्तस्तथैव च ।
पितृदेवातिथेया श्च नित्योद्युक्तास्तथैव च ॥ २३ ॥
सर्वोपकारिणो वीराः सर्वधर्मानुपालकाः।
सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ॥ २४ ॥
न ते चालयितुं शक्या धर्मव्याहारकारिणः ।
न तेषां भिद्यते वृत्तं यत् पुरा साधुभिः कृतम् ॥ २५ ॥

न आसिनो न चपला न रौद्राः सत्पथे स्थिताः ।
ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता ॥ २६ ॥
कामक्रोधव्यपेता ये निर्ममा निरहङ्कृताः ।
सुव्रताः स्थिरमर्य्यादास्तानुपास्स्व पृच्छ च ॥ २७ ॥
न धनार्थं यशोर्थं वा धर्म स्तेषां युधिष्ठिर ।
अवश्यं कार्य्य इत्येव शरीरस्य क्रिया स्तथा ॥ २८ ॥
न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते ।
न धर्मध्वजिनश्चैव न गुह्यं किञ्चिदास्थिताः ॥ २९ ॥
येष्वलोभस्तथा मोहो ये च सत्यार्जवे स्थिताः ।
तेषु कौन्तेय रज्येथा येषां न भ्रश्यते पुनः ॥ ३० ॥
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ।
निर्ममा निरहङ्काराः सत्त्वस्थाः समदर्शिनः ॥ ३१ ॥
लाभाऽलाभौ सुखदुःखे च तात प्रियाप्रियं मरणं जीवितञ्च ।
समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्त्वपथस्थितानाम् ॥ ३२ ॥
धर्मप्रियांस्तान् सुमहानुभावान् दान्तो ऽप्रमत्तश्च समर्चयेथाः ।
दैवात् सर्वे गुणवन्तो भवन्ति शुभाशुभे वाक् प्रलापा स्तथान्ये॥३३॥

## अथ शौचम्

दक्षसंहिता. शौचे यत्नः सदा कार्यः शौचमूलो द्विजःस्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥
शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धि स्तथान्तरम् ॥
अशौचाद्धि वरं बाह्यं तस्मादाभ्यन्तरं वरम् ।
उभाभ्यां तु शुचि र्यस्तु स शुचि र्नेतरः शुचिः ॥

मनु अ.५ ज्ञानं तपोऽग्निराहारो मृण्मयो वायुर्वाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥ १०५ ॥
सर्वेषा मेव शौचानामर्थ शौचं परं स्मृतम् ।
योऽर्थे शुचिर्हि स शुचि र्न मृद्वारि शुचिः शुचिः॥ १०६ ॥
क्षान्त्या शुद्ध्यन्ति विद्वांसो दानेनाकार्यकारिणः ।
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ १०७॥

मृत्तोयैः शुद्धयते शोध्यं नदी वेगेन शुद्धयति ।
रजसा स्त्री मनोदुष्टा सन्यासेन द्विजोत्तमः ॥ १०८ ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुद्धयति ।
विद्या तपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्धयति ॥ १०९ ॥
एष शौचस्य वः प्रोक्तः शारीरस्य विनिर्णयः ।

शौचम् ॥

मानसानि तीर्थानि ।

युधि॰ उ॰ यद्वरं सर्व तीर्थानां तन्मे ब्रूहि पितामह ।
अनु॰ १०८ यत्र चैव परं शौचं तन्मे व्याख्यातुमर्हसि ॥ १
भीष्मउवाच॰ सर्वाणि खलु तीर्थानि गुणवन्ति मनोपिणः ।
यत्तु तीर्थञ्च शौचञ्च तन्मे शृणु समाहितः ॥ २ ॥
अगाधे विमले शुद्धे सत्यतोये धृतिह्रदे ।
स्नातव्यं मानसे तीर्थे सत्यमालम्ब्य शाश्वतम् ॥ ३ ॥
तीर्थं शौच मनर्थित्व मार्जवं सत्य मार्दवम् ।
अहिंसा सर्वभूताना मानृशंस्यं दमः शमः ॥ ४ ॥
निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ।
शुचयस्तीर्थभूतास्ते ये भैक्ष्यमुपभुञ्जते ॥ ५ ॥
तत्वविस्त्वनहं बुद्धि स्तीर्थप्रवरमुच्यते ।
शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षणम् ॥ ६ ॥
रजस्तमः सत्वमर्थो येषां निर्द्धौतमात्मनः ।
शौचाशौचसमायुक्ताः स्वकार्य परिमार्गिणः ॥ ७ ॥
सर्वत्यागे ष्वभिरताः सर्वज्ञाः सर्वदर्शिनः ।
शौचेन वृत्तशौचार्था स्तेतीर्था शुचयश्च ते ॥ ८ ॥
नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते ।
स स्नातो यो दमःस्नातः स बाह्याभ्यंतरः शुचिः ॥ ९ ॥
अतीते ष्वनपेक्षा ये प्राप्ते ष्वर्थेषु निर्ममाः ।
शौच मेव परं तेषां येषां नोत्पद्यते स्पृहा ॥ १० ॥
प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः ।
तथा निष्किञ्चनत्वं च मनसश्च प्रसन्नता ॥ ११ ॥

वृत्तशौचं मनःशौचं तीर्थं शौच मतः परम् ।
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं मतम् ॥ १२ ॥
मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च ।
स्नाति यो मानसे तीर्थेतत्स्नानं तत्वदर्शिनाम् ॥ १३ ॥
समारोपितशौचस्तु नित्यं भावसमाहितः ।
केवलं गुणसम्पन्नः शुचिरेव नरः सदा ॥ १४ ॥
शरीरस्थानतीर्थानि प्रोक्तान्येतानि भारत ।
पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि ॥ १५ ॥
शरीरस्य यथोद्देशाः शुचयः परिकीर्त्तिताः ।
तथा पृथिव्याभागाश्च पुण्यानि सलिलानि च ॥ १६ ॥
कीर्त्तनाच्चैवतीर्थस्य स्नानाच्च पितृतर्पणात् ।
धुनन्ति पापं तीर्थेषु ते प्रयान्ति सुखं दिवम् ॥ १७ ॥
परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा ।
अतीव पुण्यभागास्ते सलिलस्य च तेजसा ॥ १८ ॥
मनसश्च पृथिव्याश्च पुण्यतीर्थास्तथापरे ।
उभयोरेव यः स्नायात् स सिद्धिं शीघ्रमाप्नुयात् ॥ १९ ॥
यथा बलं क्रियाहीनं क्रिया वा बलवर्जिता ।
नेह साधयते कार्य्यं समायुक्ता तु सिद्ध्यति ॥ २० ॥
एवं शरीरशौचेन तीर्थशौचेन चान्वितः ।
शुचिः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम् ॥ २१ ॥

---

## इन्द्रियनिग्रहः ।

आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यतां ॥

---

मनुः २. इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्न मातिष्ठे द्विद्वान्यन्तेव वाजिनाम् ॥ ८८ ॥
एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः ।
तानि सम्यक् प्रवक्ष्यामि यथा वदनुपूर्वशः ॥ ८९ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥ ९० ॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ।
कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥ ९१ ॥
एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।
यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ ॥ ९२ ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥ ९३ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ९४ ॥
यश्चैतान् प्राप्नुयात्सर्वान् यश्चैतान् केवलांस्त्यजेत् ।
प्रापणात् सर्वकामानां परित्यागो विशिष्यते ॥ ९५ ॥
न तथैतानि शक्यन्ते संनियन्तुमसेवया ।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥ ९६ ॥
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥ ९७ ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ ९८ ॥
इन्द्रियाणान्तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ९९ ॥
वशीकृत्येन्द्रियग्रामं संयम्य च मनस्तथा ।
सर्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥ १०० ॥

---

उद्योग.३३. यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५४ ॥
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्य कारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५७ ॥
रथः शरीरं पुरुषस्य राजन् आत्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥५८ ।
एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ५९ ॥

अनर्थमर्थतः पश्यन्नर्थञ्चैवाप्यनर्थतः।
इन्द्रियैरजितै र्बालः सुदुःखं मन्यते सुखम् ॥ ६० ॥
धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६१ ॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः।
इन्द्रियाणामनैश्वर्य्यादैश्वर्य्याद् भ्रश्यते हि सः ॥ ६२ ॥
यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान्।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥ ६७ ॥
दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ६८ ॥
निजानुपततः शत्रून् पञ्च पञ्च प्रयोजनम्।
यो मोहान्न निगृह्णाति तमापद् ग्रसते नरम् ॥ ७० ॥

---

भाग.११.८. जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशै र्यथा ॥ १९॥
इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्द्धते ॥ २० ॥
तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान्।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥

---

इतिहास अस्वाद्यस्य हि सर्वस्य जिह्वाग्रे क्षणसङ्गमः।
कण्ठनाडीमतीतञ्च सर्वं चैवाशनं समम् ॥
यदन्नं भुज्यते स्वादु कष्टं कदशनञ्च यत्।
तयोः सम्प्राप्तयोः कोष्ठं विपाकः सदृशः स्मृतः ॥
रसनाशनसंयोगात् तृष्णानन्दविमोहिताः।
बडिशेन यथा मीना विनाशं यान्ति याचिशाः ॥

---

वन-२०८ इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत।
निग्रहश्च कथं कार्य्यो निग्रहस्य च किं फलम् ॥ ५५ ॥
कथञ्च फल माप्नोति तेषां धर्मभृतां वर।
एत दिच्छामि तत्त्वेन धर्मं ज्ञातुं निषोध मे ॥ ५६ ॥

वन॰२०९॰मार्क॰द॰ एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ॥ १ ॥
व्याध उवाच. विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्त्तते ।
तत् प्राप्य कामं भजते रोषञ्च द्विजसत्तम ॥ २ ॥
ततस्तदर्थं यतते कर्म्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासञ्च निषेवते ॥ ३ ॥
ततो रागः प्रभवति द्वेषश्चैतदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ४ ॥
ततो लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धि व्याजाद्धर्मं करोति च ।
व्याजेन चरतो धर्ममर्थं व्याजेन रोचते ॥ ५ ॥
व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम ।
तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति ॥ ६ ॥
सुहृद्भि र्वार्य्यमाणश्च पण्डितैश्च द्विजोत्तम ।
उत्तरं श्रुतिसम्बन्धं ब्रवीत्यश्रुतियोजितम् ॥ ७ ॥
अधर्मस्त्रिविधस्तस्य वर्त्तते रागदोषजः ।
पापं चिन्तयते चैव ब्रवीति च करोति च ॥ ८ ॥
तस्याधर्मे प्रवृत्तस्य गुणा नश्यन्ति साधवः ।
एकशीलैश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स तेन दुःखमाप्नोति परत्र च विपद्यते ॥ ९ ॥
पापात्मा भवति ह्येवं धर्मलाभन्तु मे शृणु ।
यस्त्वेतान् प्रज्ञया दोषान् पूर्वमेवानुपश्यति ॥ १० ॥
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते ।
तस्य साधु समारम्भाद् बुद्धि र्धर्मेषु जायते ॥ ११ ॥
इन्द्रियैः सृज्यते यद्यत्तत्तद् व्यक्तमिति स्मृतम् ।
तदव्यक्तमिति ज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १२ ॥
यथा स्वं ग्राहकाण्येषां शब्दादीनामिमानि तु ।
इन्द्रियाणि यदा देही धारयन्निव तप्यते ॥ १३ ॥
लोके विततमात्मानं लोकञ्चात्मनि पश्यति ।
परावरज्ञः सक्तः सन् स तु भूतानि पश्यति ॥ १४ ॥

पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ १५ ॥
ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य पौरुषम् ।
लोकवृत्तिप्रकाशेन ज्ञानमार्गेण गम्यते ॥ १६ ॥
अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् ।
अनौपम्यममूर्त्तं च भगवानाह बुद्धिमान् ॥ १७ ॥
तपो मूलमिदं सर्वं यन्मां विप्रानुपृच्छसि ।
इन्द्रियाण्येव संयम्य तपो भवति नान्यथा ॥ १८ ॥
इन्द्रियाण्येव तत्सर्वं यत् स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ १९ ॥
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् ।
एतन्मूलं हि तपसः कृत्स्नस्य नरकस्य च ॥ २० ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं समाप्नुयात् ॥ २१ ॥
षण्णामात्मनि नित्यानामैश्वर्यं यो ऽधिगच्छति ।
न स पापैः कुतो ऽनर्थैर्युज्यते विजितेन्द्रियः ॥ २२ ॥
रथः शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः॥२३
षण्णामात्मनि युक्तानामिन्द्रियाणां प्रमाथिनाम् ।
यो धीरो धारयेद्रश्मीन् स स्यात् परमसारथिः ॥ २४ ॥
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्वा तानि जयेद् ध्रुवम् ॥ २५ ॥
इन्द्रियाणां विचरतां यन्मनो ऽनुविधीयते ।
तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि ॥ २६ ॥
येषु विप्रतिपद्यन्ते षट्सु मोहात् फलागमे ।
तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् ॥ २७ ॥

---

कठ . उ० १. आत्मानं रथिनं विद्धि शरीरं रथ मेवतु ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रह मेव च ॥

दुरन्वयं दुष्प्रधर्षं दुरापं दुरतिक्रमम् ।
सर्वं वै तपसाभ्येति तपो हि बलवत्तरम् ॥ ८ ॥
सुरापो ऽसम्मता ऽऽदायी भ्रूणहा गुरुतल्पगः ।
तपसा तरते सर्वं मेनसश्च प्रमुच्यते ॥ ९ ॥
सर्वविद्य स्तु चक्षुष्मानऽपि यादृशतादृशम् ।
तपस्विनं तथैवाहु स्ताभ्यां कार्य्यं सदा नमः ॥ १० ॥

---

शां१६१. भीष्म. उ. सर्वमेतत् तपोमूलं कवयः परिचक्षते ।
न ह्यतप्ततपाः मूढः क्रियाफलमवाप्नुते ॥ १ ॥
प्रजापतिरिदं सर्वं तपसैवाऽसृजत् प्रभुः ।
तथैव वेदानृषय स्तपसा प्रतिपेदिरे ॥ २ ॥
तपसैव ससर्जाऽन्नं फलमूलानि यानि च ।
त्रीन् लोकां स्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ॥ ३ ॥
औषधान्यऽगदादीनि क्रिया श्च विविधा स्तथा ।
तपसैव हि सिद्ध्यन्ति तपोमूलं हि साधनम् ॥ ४ ॥
यद् दुरापं भवेत् किञ्चित् तत् सर्वं तपसा भवेत् ।
ऐश्वर्य्यमृषयः प्राप्ता स्तपसैव न संशयः ॥ ५ ॥
सुरापोऽसम्मतादायी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन नरः पापाद्विमुच्यते ॥ ६ ॥
तपसो बहुरूपस्य तैस्तै द्वारैः प्रवर्त्ततः ।
निवृत्त्या वर्त्तमानस्य तपो नानशनात् परम् ॥ ७ ॥
न दुष्करतरं दानान् नातिमातरमाश्रमः ।
त्रैविद्येभ्यः परं नास्ति सन्यासः परमं तपः ॥ ८ ॥
इन्द्रियाणीह रक्षन्ति स्वर्गधर्माऽभिगुप्तये ।
तथा दर्थे च धर्मे च तपो नानशनात् परम् ॥ १० ॥
ऋषयः पितरो देवा मनुष्या मृगपक्षिणः ।
यानि चान्यानि भूतानि स्थावराणि चराणि च ॥ ११ ॥
तपः परायणाः सर्वे सिद्ध्यन्ति तपसा च ते ।
इत्येवं तपसा देवा महत्वं प्रतिपेदिरे॥ १२ ॥

इमानीप्रविभागानि फलानि तपसः सदा ।
तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात् ॥ १३ ॥

शांति- ७९.तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः ।
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु ॥ १७ ॥
अहिंसा सत्य वचनमानृशस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १८ ॥

---

मोक्ष शांति,१८ युधि-उ. यदिदं तप इत्याहु रुपवासं पृथग्जनाः ।
तपःस्या देतदेवेह तपोऽन्यद्वापि किं भवेत् ॥ १ ॥

भीष्म-उवाच-मासार्धमासोपवासाद् यत्तपो मन्यते जनः ।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ॥ २ ॥
त्यागस्यापि च संपत्तिः शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद् ब्रह्मचारी तथैव च ॥ ३ ॥
मुनिश्च स्यात् सदा विप्रो वेदां श्चैव सदा जपेत् ।
कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च मानवः ॥ ४ ॥
अमांसाशी सदा च स्यात् पवित्रं च सदा पठेत् ।
ऋतवादी सदा च स्यात् नियतश्च सदा भवेत् ॥ ५ ॥
विघसाशी सदा च स्यात् सदा चैवातिथिप्रियः ।
अमृताशी सदा च स्यात् पवित्री च सदा भवेत् ॥ ६ ॥

युध. उ- कथं सदोपवासी स्याद् ब्रह्मचारी च पार्थिव ।
विघसाशी कथं च स्यात् कथं चैवातिथिप्रियः ॥ ७ ॥

भीष्म-उवाच. अन्तरा सायमाशं च प्रातराशं च यो नरः ।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ ८ ॥
भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव हि ।
ऋतवादी सदा च स्याद् दानशीलश्च मानवः ॥ ९ ॥
अभक्षयन् वृथा मांसममांसाशी भवत्युत ।
दानं ददत् पवित्री स्याद स्वप्नश्च दिवाऽस्वपन् ॥ १० ॥
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा ।
अमृतं केवलं भुङ्क्ता इति विद्धि युधिष्ठिर ॥ ११ ॥

अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः ।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १२ ॥
देवेभ्यश्च पितृभ्यश्च संश्रितेभ्य स्तथैव च ।
अवशिष्टानि यो भुङ्क्ते तमाहु र्विघसाशिनम् ॥ १३ ॥
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः ।
उपस्थिता ह्यप्सरसो गन्धर्वैश्च जनाधिप ॥ १४ ॥
देवतातिथिभिः सार्धं पितृभि श्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १५ ॥

## त्रिविधं तपः ।

गीता॰ १७. देवद्विज गुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥
मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानस मुच्यते ॥ १६ ॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

## लोकयात्रा

युधि॰ उ॰ किं कर्त्तव्यं मनुष्येण लोकयात्रा हितार्थिना ।
महा॰ अनु॰ १३॰ कथं वै लोकयात्रान्तु किं शीलश्च समाचरेत् ॥ १ ॥
भीष्म. उवाच. कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधञ्चैव दश कर्मपथांस्त्यजेत् ॥ २ ॥
प्राणातिपातस्तैन्यञ्च परदारमथापि च ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ ३ ॥

असत्प्रलापं पारुष्यं पैशून्य मनृतं तथा।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ ४ ॥
अनभिध्या परस्वेषु सर्वसत्वेषु सौहृदम्।
कर्म्मणां फल मस्तीति त्रिविधं मनसा चरेत ॥ ५ ॥
तस्माद्वाक्कायमनसा नाचरे दशुभं नरः।
शुभा शुभान्याचरन् हि तस्य तस्याश्नुते फलम् ॥ ६ ॥

---

## त्रिविधंतपः

अनु॰१४४ उमोवाच भगवन् सर्वभूतेश सुरासुर नमस्कृत।
धर्मा धर्मौ नृणां देव ब्रूहि मे संशयं विभो ॥ १ ॥
कर्मणा मनसा वाचा त्रिविधं हि नरः सदा।
बध्यते बन्धनैः पाशै मुच्यते ऽप्यथवा पुनः ॥ २ ॥
केन शीलेन वै देव कर्मणा कीदृशेन वा।
समाचारै र्गुणै र्वाक्यैः स्वर्ग यान्तीह मानवाः ॥ ३ ॥
देवदेव॰ उ॰देविधर्मार्थ तत्वज्ञे धर्मनित्ये दमे रते।
सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्द्धनः ॥ ४ ॥
सत्यधर्मे रताः सन्तः सर्वलिङ्गविवर्जिताः।
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ ५ ॥
नाधर्मेण न धर्मेण बध्यन्ते छिन्न संशयाः।
प्रलयोत्पत्तितत्वज्ञाः सर्वज्ञाः सर्वदर्शिनः ॥
वीतरागा विमुच्यन्ते पुरुषाः कर्म बन्धनैः ॥ ६ ॥
कर्मणा मनसा वाचा ये न हिंसन्ति किञ्चन।
ये न सज्जन्ति कस्मिंश्चित्ते न बध्यन्ति कर्मभिः ॥ ७ ॥
प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः।
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ॥ ८ ॥
सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु।
त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ॥ ९ ॥
परस्वे निर्ममा नित्यं परदारविवर्ज्जकाः।
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्ग गामिनः ॥ १० ॥

मातृवत् स्वसृवच्चैव नित्यं दुहितृवच्च ये ।
परदारेषु वर्त्तन्ते ते नराः स्वर्गगामिनः ॥ ११ ॥
स्तैन्यान्निवृत्ताः सततं सन्तुष्टाः स्वधनेन च ।
स्वभाग्यान्युपजीवन्ति ते नराः स्वर्ग गामिनः ॥ १२ ॥
परदारेषु ये नित्यं चारित्रावृतलोचनाः ।
यतेन्द्रियाः शीलपरास्ते नराः स्वर्ग गामिनः ॥ १३ ॥
एष देवकृतो मार्गः सेवितव्यः सदा बुधैः ।
अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः ॥ १४ ॥
स्वदारनिरता ये च ऋतुकालाभिगामिनः ।
अग्राम्यसुखभोक्तार स्ते नराः स्वर्गगामिनः ॥ १५ ॥
दानधर्मतपोयुक्तः शीलशौचदयात्मकः ।
वृत्त्यर्थं धर्महेतोर्वा सेवितव्यः सदा बुधैः ॥ १६ ॥
स्वर्गवासमभीप्सद्भिर्नसेव्यस्त्वत उत्तरः ॥ १७ ॥

उमोवाच· वाचा तु वध्यते येन मुच्यतेऽप्यथवा पुनः ।
तानि कर्माणि मे देव वद भूतपतेऽनघ ॥ १८ ॥

महेश्वर उ. आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा ।
ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ॥ १९ ॥
वृत्त्यर्थं धर्महेतो र्वा कामकारा त्तथैव च ।
अनृतं येन भाषन्ति ते नराः स्वर्ग गामिनः ॥ २० ॥
श्लक्ष्णां वाणीं निराबाधां मधुरां दोषवर्जिताम् ।
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥ २१ ॥
परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा ।
अपैशून्यरताः सन्त स्ते नराः स्वर्गगामिनः ॥ २२ ॥
पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम् ।
ऋतं मैत्रन्तु भाषन्ते ते नराः स्वर्गगामिनः ॥ २३ ॥
ये वर्जयन्ति परुषं परद्रोहं च मानवाः ।
सर्वभूतसमादान्ता स्ते नराः स्वर्गगामिनः ॥ २४ ॥
असत् प्रलापाद्विरता विरुद्धपरिवर्जकाः ।
सौम्यप्रलापिनो ये च ते नराः स्वर्गगामिनः ॥ २५ ॥

न कोपा द्व्याहरन्ते ये वाचं हृदयदारिणीम् ।
शान्तं वदन्ति क्रुद्धापि ते नराः स्वर्गगामिनः ॥ २६ ॥
एष वाणीकृतो देवि धर्मः सेव्यः सदा नरैः ।
शुभः सत्यगुणो नित्यं वर्ज्जनीयं मृषा बुधैः ॥ २७ ॥
उमोवाच मनसा बध्यते येन कर्मणा पुरुषः सदा ।
तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक् ॥ २८ ॥
महेश्वर उ. मानसेनेह धर्मेण संयुक्ताः पुरुषाः सदा ।
स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्त्तयतः शृणु ॥ २९ ॥
दुष्प्रणीतेन मनसा दुष्प्रणीतान्तराकृतिः ।
मनो बध्यति येनेह शृणु वाक्यं शुभानने ॥ ३० ॥
अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा ।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ३१ ॥
ग्रामे गृहे वा यद्‌द्रव्यं पारक्यं विजने स्थितम् ।
नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः ॥ ३२ ॥
तथैव परदारान् ये कामवृत्तान् रहोगतान् ।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ३३ ॥
शत्रुं मित्रं च ये नित्यं तुल्येन मनसा नराः ।
भवन्ति मैत्राः सङ्गम्य ते नराः स्वर्गगामिनः ॥ ३४ ॥
श्रुतवन्तो दयावन्तः शुचयः सत्यसङ्गराः ।
स्वैरर्थैः परिसन्तुष्टास्ते नराः स्वर्गगामिनः ॥ ३५ ॥
अवैरा ये त्वनायासा मैत्रीचित्तगताः सदा ।
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ॥ ३६ ॥
श्रद्धावन्तो दयावन्त श्चोक्षा श्चोक्षजनप्रियाः ।
धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः ॥ ३७ ॥
शुभानामशुभानाञ्च कर्मणां फलसञ्चये ।
विपाकज्ञा श्च ये देवि ते नराः स्वर्गगामिनः ॥ ३८ ॥
न्यायोपेता गुणोपेता देवद्विजपराः सदा ।
समुत्थानमनुप्राप्ता स्ते नराः स्वर्गगामिनः ॥ ३९ ॥
शुभैः कर्मफलै र्देवि मयैते परिकीर्त्तिताः ।
स्वर्गमार्गं परामूयः किं श्रोतु स्त्वमिहेच्छसि ॥ ४० ॥

भाग. स्कं. ५.

वनेऽपि दोषाः प्रभवन्ति रागिणाम् गृहेपु पञ्चेन्द्रिय निग्रह स्तपः ।
अकुत्सिते कर्मणि यः प्रवर्त्तते निवृत्तरागस्य गृहं तपोवनम् ॥

---

## अथ दया

भागवत. दयया सर्वभूतेषु सन्तुष्टया येन केन वा ।
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥

दक्षसंहिता. यथैवात्मा परस्तद्वद् द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥
सुखं वा यदि वा दुःखं यत्किंचित् क्रियते परे ।
ततस्तत्तु पुनः पश्चात्सर्वमात्मनि जायते ॥

---

## दयासहानुभूतिः ।

इति॰ य॰युधि॰उ॰ साधुभिः सह संवासे ये गुणाः परिकीर्तिताः ।
अनु॰५०.५१. महाभाग्यबलं चैव तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्मउवाच अत्र ते कथयिष्ये ऽहमितिहासं पुरातनम् ।
नहुषस्य च सम्वादं महर्षे श्च्यवनस्य च ॥ २ ॥
भार्गव श्च्यवनो नाम महर्षिः सुमहातपाः ।
उपवास कृतारम्भो बभूव किल भारत ॥ ३ ॥
निहत्य कामं क्रोधं च द्रोहं मोहं मदं तथा ।
गंगायमुनयो र्मध्ये विवेश सलिलाश्रयम् ॥ ४ ॥
तं गङ्गा यमुना चैव सरित श्चानुगा स्तदा ।
प्रदक्षिणमृषिं चक्रु र्न चैनं प्रत्यपीडयन् ॥ ५ ॥
तत्रास्य वसतः कालः समतीतो महा स्तदा ।
परेण ध्यानभूतेन स्थाणुभूतस्य तिष्ठतः ॥ ६ ॥
ततः कदाचित्तं देशमगमन् मत्स्यजीविनः ।
प्रसार्य सुमहज्जालं सर्वैश्चाकर्पितं जलात् ॥ ७ ॥
अथ ते सहमत्स्यै स्तु निषादा बलदर्पिताः ।
तस्मादुत्तारयामासुः सलिलाद् भृगुनन्दनम् ॥ ८ ॥

तं दृष्ट्वा दीप्ततपसं कैवर्ता भयपीड़िताः ।
शिरोभिः प्रणिपत्योर्वी मिदं वचनमब्रुवन् ॥ ६ ॥

कैवर्त्ताऊचुः- आज्ञानात्कृतपापाना मस्माकं क्षंतुमर्हसि ।
किं वा कुर्मः प्रियं ते ऽद्य तदाज्ञापय सुव्रत ॥ १० ॥

भीष्मउवाच- समुनि स्तान्महद्दृष्ट्वा मत्स्यानां कदनं कृतम् ।
कृपया परयाविष्ट स्तानुवाच सुदुःखितः ॥ ११ ॥

च्यवन उ- मरणं विक्रयं वापि मत्स्यै र्यास्याम्यहं सह ।
संवासान्नोत्सहे त्यक्तुं दीनानेतान्सुदुःखितान् ॥ १२ ॥
दुःखितानीह भूतानि दृष्ट्वा स्यायो न दुःखितः ।
केवलात्महितेच्छो यः कोन्नृशंसतरस्ततः ॥ १३ ॥
अहोसर्वेषु कारुण्य मात्मार्थं सुखमिच्छताम् ।
ज्ञानिनामपि यच्चेतः केवलात्महितोद्यतम् ॥ १४ ॥
ज्ञानिनोऽपि यदा स्वार्थं निश्चित्य ध्यानमास्थिताः ।
सत्वाः संसारदुःखार्ताः कं यान्ति शरणं तदा ॥ १५ ॥
को नु स स्यादुपायोऽत्र येनाहं दुःखितात्मनाम् ।
अन्तः प्रविश्य भूतानां भवेयं दुःखभाक् सदा ॥ १६ ॥
अहो मीनाः स्फुरन्त्येते लुठंति च तथापरे ।
बलिनोऽपि महाकायाः सूर्यांशुपरिपीड़िताः ॥ १७ ॥
दृष्ट्वा ऽन्ध बधिर व्यङ्गाननाथान् रोगिणस्तथा ।
दया न जायते येषां ते शोच्या मूढचेतनाः ॥ १८ ॥
प्राणसंशयमापन्नं यो न रक्षति शक्तिमान् ।
सर्वधर्मबहिर्भूतः सपापां गतिमाप्नुयात् ॥ १९ ॥
अपहृत्यार्त्तिमार्तानां सुखं यदुपजायते ।
तस्य स्वर्गो ऽपवर्गो वा कलां नार्हति षोडशीम् ॥ २० ॥
तस्मान्नैतानहं दीनां स्त्यक्त्वा मीनान् सुदुःखितान् ।
ब्रह्मणो ऽपि पदं यास्ये किं पुनस्त्रिदशालयम् ॥ २१ ॥
न करिष्ये च युष्माक माशाछेदं कदाचन ।
निवेदयत मां राज्ञे स मे मूल्यं प्रदास्यति ॥ २२ ॥

भीष्मउवाच- एवं निशम्य वचनं निषादा जातसंभ्रमाः ।
गत्वा राज्ञे च तत्सर्वं नहुषाय न्यवेदयन् ॥ २३ ॥

नहुषोऽपि च तच्छ्रुत्वा विस्मयाविष्टचेतनः ।
नहुषउवाच· कोऽसावत्यद्भुताकारो जले वास मकल्पयत् ॥ २४ ॥
इति संचिन्त्य धर्मात्मा धर्मशक्तिसमन्वितः ।
भयेन च समाविष्टो मुनिप्रवरशङ्कया ॥ २५ ॥
विसृज्य सेनां तत्रैव राजा लघुपरिच्छदः ।
त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ॥ २६ ॥
तं दृष्ट्वा सूर्य संकाशं च्यवनं शंसितव्रतम् ।
ज्ञात्वा भार्गव मेकाग्रं ध्यानयोग परायणम् ॥ २७ ॥
तं पूजयित्वा विधिव द्देवकल्पं नरेश्वरः ।
प्रोवाच भगवन् ब्रूहि किं करोमि तवाज्ञया ॥ २८ ॥
च्यवन उ श्रमेण महताविष्टाः कैवर्त्ता दुःखजीविनः ।
मम मूल्यं प्रयच्छेभ्यो यथावद्राजसत्तम ॥ २९ ॥
यथामूल्यप्रदानेन मत्स्यसाधर्म्यमास्थितः ।
एभ्यो मुच्ये यथाकामं मरिष्ये वा ततोऽन्यथा ॥ ३० ॥
यथामूल्यप्रदानेन करोम्यात्मप्रमोचनम् ।
तथा मीनांश्च रक्षयामि तन्मे मनसि निश्चतम् ॥ ३१ ॥
नहुष उ· सहस्राणां शतं मूल्यं निषादेभ्यः प्रदीयताम् ।
निष्क्रयार्थं भगवतो यथाह भृगुनन्दनः ॥ ३२ ॥
च्यवन उ नाहं शतसहस्रेण विक्रेयः पार्थिव त्वया ।
सदृशं दीयतां मूल्यममात्यैः सह चिन्तय ॥ ३३ ॥
नहुष उवाच. कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहिताः ।
यद्येतदपि नो मूल्यं ततो भूयः प्रदीयताम् ॥ ३४ ॥
च्यवन उ आत्ममूल्यं न वक्तव्यं न तं लोकः प्रशंसति ।
तस्मान्नाहं प्रवक्ष्यामि न चात्मस्तुतिमुद्वहेत् ॥ ३५ ॥
नाहमर्हामि वा कोटिं न त्वर्होऽभ्यधिकं ततः ।
सदृशं मामकं मूल्यं ब्राह्मणैः सह चिन्तय ॥ ३६ ॥
नहुषउवाच अर्द्धराज्यं समस्तं वा निषादेभ्य प्रदीयताम् ।
एतन् मूल्यमहं मन्ये किं वा त्वं मन्यसे द्विज ॥ ३७ ॥
च्यवन उ अर्द्धराज्यं समस्तं वा नाहमर्हामि पार्थिव ।
सदृशं दीयतां मूल्यमृषिभिः सह चिन्तय ॥ ३८ ॥

भीष्मउवाच. महर्षे स्तद्वचः श्रुत्वा नहुषो भृशदुःखितः ।
चिन्तयामास शोकार्त्तः सहामात्यपुरोहितः ॥ ३९ ॥
गत्वा कश्चिदृषिस्तत्र गविजात इति श्रुतः ।
प्रोवाच नहुषं माभैस्तोषयिष्याम्यहं मुनिम् ॥ ४० ॥
नहुषउवाच- ब्रवीतु भगवन् मूल्यं मुनेस्तस्य महात्मनः ।
परित्रायस्व मामस्माद्विषयं च कुलं च मे ॥ ४१ ॥
हन्याद्दषिः सुसंक्रुद्धो त्रैलोक्यमपि सेश्वरम् ।
किं पुन र्मा तपो हीनं बाहुवीर्यपरायणम् ॥ ४२ ॥
गविजा-उ. अनर्घ्या ये महाराज जगत्पूज्या द्विजोत्तमाः ।
गावश्च दैवतं तेषां तद्गोमूल्यं प्रदीयताम् ॥ ४३ ॥
भीष्म- उ- तच्छ्रुत्वा वचनं राजा सहामात्य पुरोहितैः ।
हर्षेण च समाविष्टः प्रोवाचेदं वचो नृपः ॥ ४४ ॥
अनु.५०.५१. उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतो ऽसि भार्गव ।
एतन् मूल्यमहं मन्ये तव धर्म भृतां वर ॥ २५ ॥
उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतो ऽसि ते ऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किञ्चि दिहाच्युतम् ॥ २६ ॥
कीर्तनं श्रवणं दानं दर्शनञ्चापि पार्थिव ।
गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ २७ ॥
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ।
गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ २८ ॥
अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च ।
अमृतायतना श्वेताः सर्वलोक नमस्कृताः ॥ ३० ॥
तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत्तेजः प्राणिनाञ्च सुखप्रदाः ॥ ३१ ॥
निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयति तं देशं पाप ञ्चास्यापकर्षति ॥ ३२ ॥
गावः स्वर्गस्य सोपानं गावः स्वर्गे ऽपि पूजिताः ।
गावः कामदुहो देव्यो नान्यत्किञ्चित् परं स्मृतम् ॥ ३३ ॥
इत्येतद् गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ।
गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ३४ ॥

एतच्छ्रुत्वा निषादास्ते गवां माहात्म्यमुत्तमम् ।
प्रणिपत्य महात्मानं ततस्तमृषिमब्रुवन् ॥ ५७ ॥
संभाषा दर्शनं स्पर्शं कीर्त्तनं स्मरणं तथा ।
पावनानि किलैतानि साधूनामिति शुश्रुम ॥ ५८ ॥
संभाषा दर्शनं स्पर्शः सहास्माभिः कृतं त्वया ।
प्रसीद भगवं स्तस्मा द्गौरेषा प्रतिगृह्यताम् ॥ ५९ ॥
च्यवन, उ. एष वः प्रतिगृह्णामि गामेषां मुक्तकिल्बिषां ।
निषादा गच्छतः स्वर्गं मत्स्यैः सार्द्धं जलोद्धृतैः ॥ ६० ॥
यन्मया सुकृतं किंचिन्मनोवाक्काय कर्मभिः ।
दुःखार्त्ता जंतव स्तेन सर्वे संतु सुखावहाः ॥ ६१ ॥
भीष्म उवाच. ततस्तस्य प्रसादेन महर्षेर्भावितात्मनः ।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं गताः ॥ ६२ ॥
सेव्याः श्रेयोर्थिभिः सन्तः पुण्यतीर्थजलोपमाः ।
क्षणोपासंगयोगोऽपि न तेषां निष्फलो भवेत् ॥ ६४ ॥
साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ६५ ॥
नांभोमयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ६६ ॥
अथर्षिश्च्यवनो धीमान् गविजातो महातपाः ।
वराभ्यां छन्दयामासु यथेष्टाभ्यां नृपोत्तमम् ॥ ६७ ॥
ततः स वरयामास धर्मे बुद्धिं सुदुर्लभाम् ।
तथेत्युक्त्वा तु तौ विप्रौ तं नृपं प्रशशंसतुः ॥ ६८ ॥
अहो धन्योऽसि राजेन्द्र यत्ते धर्मे मतिः स्थिता ।
धर्मधीः दुर्लभा पुंसां विशेषेण महीक्षिताम् ॥ ६९ ॥
ध्रुवो राज्यमदो राज्ञां मोहश्चापि महान् ध्रुवः ।
मोहाद् ध्रुवश्चनरको राज्यं निन्दन्त्यतो बुधाः ॥ ७०
राज्यं हि बहुमन्यन्ते नरा विषयलोलुपाः ।
मनीषिणस्तु पश्यन्ति तदेव नरकोपमम् ॥ ७१ ॥
तस्माल्लोकद्वयध्वंसी मदः परमदारुणः ।
भविष्यति महाराज तव नैव न संशयः ॥ ७२ ॥

अहोभिर्मुच्यसे राजन् प्रसादादावयोर्ध्रुवम् ।
यस्मात्प्रार्थितवानावां धर्मे बुद्धिं सुदुर्लभाम् ॥ ७३ ॥
भीष्मउवाच. इत्युक्त्वा तौ महात्मानौ जग्मतुः स्वस्वमाश्रमम् ।
नहुषोऽपि वरं लब्ध्वा प्रविष्टः प्राविशत्पुरीम् ॥ ७४ ॥
एतत्ते कथितं राजन् गुणा ये सत्समागमे ।
महाभाग्यवतां चैव किमन्यच्छ्रोतु मिच्छसि ॥ ७५ ॥

---

## अथ शरणागत प्रतिपालनम् ॥

इतिहास४. युधि. उ. यो रक्षेत् प्राणिनं ब्रह्मन् भयार्तं शरणागतम् ।
तस्य पुण्यफलं यत् स्यात् तन्मे ब्रूहि तपोधन ॥ २ ॥
लोमश. उ. एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ३ ॥
इदमेव पुरा देवास्तुलायां समतोलयन् ।
प्राणरक्षणमेवेह गौरवेणातिरिच्यते ॥ ४ ॥
अत्रैवो दाहरंतीममितिहासं पुरातनम् ।
इन्द्रस्याग्नेश्च संवादं शिबे रौशीनरस्य च ॥ ५ ॥
वर्तमाने महायज्ञे जिज्ञासार्थं शिबिं नृपम् ।
इन्द्रः श्येनः कपोतोऽग्नि र्भूत्वा तत्रोपजग्मतुः ॥ ६ ॥
अथ तं नृपतिं प्राप्य कपोतः श्येनजाद्भयात् ।
शरणार्थं महीपालं निलिल्ये भयविह्वलः ॥ ७ ॥
ततः शनै रुपागम्य श्येनरूपी सुरेश्वरः ।
राजानं सुमहात्मानं मोवाचेदं वचस्तदा ॥ ८ ॥
श्येन. उ. धर्मात्मनां वरोऽसि त्वमेको राजन् महीक्षिताम् ।
स त्वं धर्मविरुद्धं हि कथं धर्मं चिकीर्षसि ॥ ९ ॥
भवान् कृतघ्नं दानेन सत्येनानृतवादिनम् ।
क्षमया क्रूरकर्माणमसाधुं साधुना जयः ॥ १० ॥
उपकारपरेष्वेव सुपकारपरो जनः ।
अपकारपरेऽपि त्वमुपकार परो यथा ॥ ११ ॥

अहिते हितबुद्धिस्त्वं पापेषु त्वमपापकृत् ।
दोषान्वेषण दक्षोऽपि गुणान्वेषणतत्परः ॥ १२ ॥
तदयं विहितो भक्ष्यः पीड्यमानस्य मे क्षुधा ।
मा हिंसी र्लोभतो धर्मं धर्ममुत्सृष्टवानसि ॥ १३ ॥
राजोवाच संत्रस्तरूपो प्राणार्थी त्वत्तो भीतो विहङ्गमः ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं खगः ॥ १४ ॥
तदेव मागतस्यास्य कपोतस्याऽभयार्थिनः ।
कथ मस्मद्विधः कुर्य्यात् त्यागं सद्भिर्विगर्हितम् ॥ १५ ॥
लोभाद् द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम् ।
ब्रह्महत्या समं तस्य पाप माहुर्मनीषिणः ॥ १६ ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
शरणागतहन्तृणां न दृष्टा निष्कृतिः क्वचित् ॥ १७ ॥
यथात्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा ।
तस्मान् मृत्युभयत्रस्ताः त्रातव्याः प्राणिनो बुधैः ॥ १८ ॥
जन्ममृत्युजरारोगैर्नित्यं संसारसागरे ।
जन्तवः परिक्लिश्यन्ते मृत्योः पश्यन्ति ते तथा ॥ १९ ॥
यन्निमित्तं भवेच्छोक स्त्रासो वा क्रोधएव च ।
आयासो वा यतो मूलमेकाङ्गमपि तं त्यजेत् ॥ २० ॥
मरिष्यामीति यद्दुःखं पुरुषस्योपजायते ।
युक्तं तेनानुमानेन परोऽपि परिरक्षितुम् ॥ २१ ॥
यथाहि ते जीवितमात्मनः प्रियं तथापरेषामपि जीवितं प्रियम् ।
संरक्षसे जीवितमात्मनो यथा तथापरेषामपि रक्ष जीवितम् ॥ २२ ॥
तस्मान्नाहं मिमं भीतमर्पयिष्ये कपोतकम् ।
यदत्र युक्तं मन्यन्ते कर्तुं श्येनाशु तद्व द ॥ २३ ॥
श्येनउवाच. आहारात्सर्व भूतानि संभवन्ति नरेश्वर ।
आहारेण विवर्द्धंते तेन जीवन्ति जन्तवः ॥ २४ ॥
शक्यते दुष्करे ऽप्यर्थे राजन् वर्तयितुं चिरम् ।
न चाहारविहीनेन शक्यते वर्तितुं क्वचित् ॥ २५ ॥
भक्ष्याद्विक्षेपितस्यास्मान् मम प्राणा विशांपते ।
विसृज्य कायं यास्यंति पथा मम पुन र्भवः ॥ २६ ॥

मृते च मयि सर्वं मे पुत्रदारं मरिष्यति ।
रक्षमाणः कपोतं त्वं बहून् प्राणान् न रक्षसि ॥ २७ ॥
धर्मं यो बाधते धर्मो न स धर्मः परन्तप ।
अविरोधी च यो धर्मः स धर्मः सद्भि रुच्यते ॥ २७ ॥
तस्माद्विरोधे धर्मस्य विचिंत्य गुरुलाघवम् ।
यतो भूयान् ततो राजन् कुरु धर्मविनिर्णयम् ॥ २९ ॥
राजोवाच. नातो भूयान् परो धर्मः कश्चिदन्योऽस्ति खेचर ।
प्राणिनां भयभीतानामभयं यत्प्रदीयते ॥ ३० ॥
यस्मैकस्य सत्वस्य दत्वा त्वभयदक्षिणाम् ।
न तु विप्रसहस्रस्य गोसहस्र मलंकृतम् ॥ ३१ ॥
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
तस्य देहाद्विमुक्तस्य न भयं विद्यते क्वचित् ॥ ३२॥
हेमधेन्वंधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वभूतहितप्रदः ॥ ३३ ॥
महतामपि यज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥ ३४ ॥
येन तप्तं तपस्तीर्थे तीर्थसेवा श्रुतं तथा ।
यज्ञं वाभयदानस्य कलां नार्हन्ति षोडशीम् ॥ ३५ ॥
चतुःसागरपर्यन्तां यो दद्यात्पृथिवी मिमाम् ।
अभयं यश्च भूतेभ्य स्तयोरभयदोऽधिकः ॥ ३६ ॥
अपि त्यजे राज्यमिमं शरीरं वापि दुस्त्यजम् ।
न त्विमं भयसंत्रस्तं त्यजे दीनं कपोतकम् ॥ ३७ ॥
यन्ममास्ति शुभं किञ्चित्तेन जन्मनि जन्मनि ।
भवेयमहमार्त्तानां प्राणिनामार्त्तिनाशकः ॥ ३८ ॥
न त्वहं कामये राज्यं न स्वर्गंनापुनर्भवम् ।
प्राणिनां दुःखतप्तानां कामये दुःखनाशनम् ॥ ३९ ॥
यथा च नानृता वाणी मयैषा समुदाहृता ।
सत्येन तेन भगवान् प्रसीदतु ममेश्वरः ॥ ४० ॥
आहारार्थं समारम्भस्तव चायं विहंगम ।
तद्यपेष्टं समाहारमन्यदेव ददाम्यहम् ॥ ४१ ॥

अहिते हितबुद्धिस्त्वं पापेषु त्वमपापकृत् ।
दोषान्वेषण दक्षोऽपि गुणान्वेषणतत्परः ॥ १२ ॥
तदयं विहितो भक्ष्यः पीड्यमानस्य मे क्षुधा ।
मा हिंसी र्लोभतो धर्मं धर्मयुतस्त्वपृथवानसि ॥ १३ ॥
राजोवाच संत्रस्तरूपो प्राणार्थी त्वत्तो भीतो विहङ्गमः ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं खगः ॥ १४ ॥
तदेव मागतस्यास्य कपोतस्याऽभयार्थिनः ।
कथ मस्मद्विधः कुर्यात् त्यागं सद्भिर्विगर्हितम् ॥ १५ ॥
लोभाद् द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम् ।
ब्रह्महत्या समं तस्य पाप माहुर्मनीषिणः ॥ १६ ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
शरणागतहन्तॄणां न दृष्टा निष्कृतिः क्वचित् ॥ १७ ॥
यथात्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा ।
तस्मान् मृत्युभयत्रस्ताः त्रातव्याः प्राणिनो बुधैः ॥ १८ ॥
जन्ममृत्युजरारोगैर्नित्यं संसारसागरे ।
जन्तवः परिक्लिश्यन्ते मृत्योः पश्यन्ति ते तथा ॥ १९ ॥
यन्निमित्तं भवेच्छोक स्त्रासो वा क्रोधएव च ।
आयासो वा यतो मूलमेकाङ्गमपि तं त्यजेत् ॥ २० ॥
मरिष्यामीति यद्दु खं पुरुषस्योपजायते ।
युक्त तेनानुमानेन परोऽपि परिरक्षितुम् ॥ २१ ॥
यथाहि ते जीवितमात्मनः प्रियं तथापरेषामपि जीवितं प्रियम् ।
संरक्षसे जीवितमात्मनो यथा तथापरेषामपि रक्ष जीवितम् ॥ २२॥
तस्मान्नाहं मिमं भीतमर्पयिष्ये कपोतकम् ।
यदत्र युक्तं मन्यन्ते कर्तुं श्येनाशु तद्व द ॥ २३ ॥
श्येनउवाच आहारात्सर्वे भूतानि संभवन्ति नरेश्वर ।
आहारेण विवर्द्धते तेन जीवन्ति जन्तवः ॥ २४ ॥
शक्यते दुष्करे ऽप्यर्थे राजन् वर्तयितुं चिरम् ।
न चाहारविहीनेन शक्यते वर्तितुं क्वचित् ॥ २५ ॥
भक्ष्याद्विक्षेपितस्यास्मान् मम प्राणा विशांपते ।
विसृज्य कायं यास्यंति यथा मम पुन र्भवः ॥ २६ ॥

मृते च मयि सर्वं मे पुत्रदारं मरिष्यति ।
रक्षमाणः कपोतं त्वं बहून् प्राणान् न रक्षसि ॥ २७ ॥
धर्मं यो बाधते धर्मो न स धर्मः परन्तप ।
अविरोधी च यो धर्मः स धर्मः सद्भि रुच्यते ॥ २७ ॥
तस्माद्विरोधे धर्मस्य विचिंत्य गुरुलाघवम् ।
यतो भूयान् ततो राजन् कुरु धर्मविनिर्णयम् ॥ २९ ॥
राजोवाच. नातो भूयान् परो धर्मः कश्चिदन्योऽस्ति खेचर ।
प्राणिनां भयभीतानामभयं यत्प्रदीयते ॥ ३० ॥
वरमेकस्य सत्वस्य दत्वा त्वभयदक्षिणाम् ।
न तु विप्रसहस्रस्य गोसहस्रमलंकृतम् ॥ ३१ ॥
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
तस्य देहाद्विमुक्तस्य न भयं विद्यते क्वचित् ॥ ३२॥
हेमधेन्वंधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वभूतहितप्रदः ॥ ३३ ॥
महतामपि यज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥ ३४ ॥
येन तप्तं तपस्तीर्थे तीर्थसेवा श्रुतं तथा ।
यज्ञं वाभयदानस्य कलां नार्हन्ति षोडशीम् ॥ ३५ ॥
चतुःसागरपर्यन्तां यो दद्यात्पृथिवीमिमाम् ।
अभयं यश्च भूतेभ्य स्तयोरभयदोऽधिकः ॥ ३६ ॥
अपि त्यजे राज्यमिमं शरीरं वापि दुस्त्यजम् ।
न त्विमं भयसंत्रस्तं त्यजे दीनं कपोतकम् ॥ ३७ ॥
यन्ममास्ति शुभं किञ्चित्तेन जन्मनि जन्मनि ।
भयेयमहमार्त्तानां प्राणिनामार्त्तिनाशकः ॥ ३८ ॥
न त्वहं कामये राज्यं न स्वर्गनापुनर्भवम् ।
प्राणिनां दुःखतप्तानां कामये दुःखनाशनम् ॥ ३९ ॥
यथा च नानृता वाणी मयैषा समुदाहृता ।
सत्येन तेन भगवान् प्रसीदतु ममेश्वरः ॥ ४० ॥
आहारार्थं समारम्भस्तव चायं विहंगम ।
तदर्थं समाहारमन्यदेव ददाम्यहम् ॥ ४१ ॥

श्यनउवाच. य एव विहितो ऽस्माकं धात्रा भक्ष्यः कपोतकः ।
तमेवोत्सृज नाहारैः कार्य्य मप्यपरैरपि ॥ ४२ ॥
श्येनाः कपोतान् खादन्ति श्रुतिरेषा सनातनी ।
मा राजन् सारतां ज्ञात्वा कदलीस्कंधमारुह ॥ ४३ ॥
राजोवाच. नाहं कुशास्त्रमार्गेण कचिद्वर्त्ते विहङ्गम ।
शास्त्रैर्येवो पदिष्टोऽयं धर्मः सत्यदयापरः ॥ ४४ ॥
सर्वसत्वेषु यद्दान मेक सत्वे च या दया ।
सर्वसत्वप्रदानात्तु दयैका च विशिष्यते ॥ ४५ ॥
सर्ववेदाश्च यत् कुर्युः सर्वे यज्ञाश्च खेचर ।
सर्वतीर्थाभिषेकाश्च तत् कुर्यात् प्राणिनो दया ॥ ४६ ॥
वाङ्मनः कर्मभिर्ये तु सर्वभूतहिते रताः ।
दयादर्शितपन्थानो ब्रह्मलोकं व्रजन्ति ते ॥ ४७ ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
यन्नभूतहितार्थाय तत् पशोरिव चेष्टितम् ॥ ४८ ॥
जङ्गमानि च भूतानि स्थावराणि च ये नराः ।
आत्मवत्परिरक्षन्ति यांति ते परमां गतिम् ॥ ४९ ॥
प्राणिनं वध्यमानं तु यः शक्तः समुपेक्षते ।
स याति नरकं घोर मितिप्राहु र्मनीषिणः ॥ ५० ॥
राज्यं समस्तं सुमहत् प्रयच्छामि तव द्विज ।
यद्वा कामयसे ह्यन्यद् वर्जयित्वा कपोतकम् ॥ ५१ ॥
श्येनउवाच- यदि राजन् कपोतेन सुदृढा प्रीति रीदृशी ।
ततः कपोततुल्यानि स्वमांसानि प्रयच्छ मे ॥ ५२ ॥
राजोवाच- अनुग्रहमिमं मन्ये यन्मां श्येनाभिभाषसे ।
एतत्तेऽहं प्रयच्छामि स्वमांसं यावदिच्छसि ॥ ५३ ॥
यद्प्रियं तत्सुजन श्चिराद्ददति मानवः ।
मम तु प्रिय मेवैतत्कस्मादभिहितं चिरात् ॥ ५४ ॥
अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
ध्रुवं यो नार्ज्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ ५५ ॥
यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते ।
ततः किमुपकारोऽस्य प्रत्यहं क्रियते वृथा ॥ ५६ ॥

श्येन उवाच- नातिरिक्तमहं याचे तव मांसं जनेश्वर !।
तस्मात्कपोतेन समं प्रयच्छ तुलया धृतम् ॥ ५७ ॥
राजोवाच- तदेवाहं करिष्यामि यन् मां श्येनाभि भाषसे।
कपोतरक्षणं मे स्यात्त्वापि च विहङ्गम ॥ ५८ ॥
लोमश उवाच- एवमुक्त्वा स्वमांसानि समुत्कृत्य स पार्थिवः।
प्रहृष्टस्तोलयामास कपोतेन समं प्रभुः ॥ ५९ ॥
त्यक्तात्मफलभोगेच्छां सर्वसत्त्वसुखैषिणः।
भवन्ति परदुःखेन साधवो नित्यदुःखिताः ॥ ६० ॥
ध्रियमाणस्तु तुलया कपोतो व्यतिरिच्यते।
पुनश्चोत्कृत्य मांसानि ततः प्रादात् स पार्थिवः ॥ ६१ ॥
न विद्यते यदा मांसं कपोतेन समं क्वचित्।
ततः प्रक्षीण मांसो ऽसावारुरोह तुलां स्वयम् ॥ ६२ ॥
परदुःखातुरा नित्यं सर्वभूतहिते रताः।
नापेक्षंते महात्मानः स्वसुखानि महांत्यपि ॥ ६३ ॥
अथ तस्मिन् समारूढे तुला मौशीनरे नृपे।
देव दुंदुभयो नेदुः पुष्पवृष्टिः पपात ह ॥ ६४ ॥
ततस्तस्य तदा मत्वा धर्मे राज्ञो मतिं पराम्
शक्रः स्वरूप मास्थाय वाक्यमेन दुवाच ह ॥ ६५ ॥
इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवाडयम्।
जिज्ञासमानौ त्वां राजनिमं यज्ञमुपागतौ ॥ ६६ ॥
नैतत्पूर्वं नृपाश्चक्रुर्न करिष्यंति चापरे।
महाकारुणिकेनेह यत्कृतं दुष्कृतं नृप ॥ ६७ ॥
परार्थे त्यजनः प्राणान् या प्रीतिरभवत्तव।
प्राणसंश्रय लुब्धेषु न सा प्राणेषु देहिनाम् ॥ ६८ ॥
परार्थैकांतकल्याणी स्वश्रेयात्यंतनिष्ठुरा।
त्वय्येव केवलं राजन् करुणा तरुणायते ॥ ६९ ॥
स्व कर्मपाशैः सुदृढैर्बद्धं कृत्स्नमिदंजगत्।
त्वं जगद्दुःखमोक्षार्थं बद्धः करुणया नृप ॥ ७० ॥
यथा सर्वात्मना चापि दोषेष्वपहतं त्वया।
तथा चैवात्मनःस्थाने वासनापि न विद्यते ॥ ७१ ॥

श्येनउवाच. य एव विहितो ऽस्माकं धात्रा भक्ष्यः कपोतकः ।
तमेवोत्सृज नाहारैः कार्य्यं मण्यपरैरपि ॥ ४२ ॥
श्येनाः कपोतान् खादन्ति श्रुतिरेषा सनातनी ।
मा राजन् सारतां ज्ञात्वा कदलीस्कंधमारुह ॥ ४३ ॥
राजोवाच. नाहं कुशास्त्रमार्गेण कचिद्वर्त्ते विहङ्गम ।
शास्त्रैरेवो पदिष्टोऽयं धर्मः सत्यदयापरः ॥ ४४ ॥
सर्वसत्वेषु यद्दान मेक सत्वे च या दया ।
सर्वसत्वप्रदानात्तु दयैका च विशिष्यते ॥ ४५ ॥
सर्ववेदाश्च यत् कुर्युः सर्वे यज्ञाश्च खेचर ।
सर्वतीर्थाभिषेकाश्च तत् कुर्यात् प्राणिनो दया ॥ ४६ ॥
वाङ्मनः कर्मभिर्ये तु सर्वभूतहिते रताः ।
दयादर्शितपन्थानो ब्रह्मलोकं व्रजन्ति ते ॥ ४७ ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
यन्नभूतहितार्थाय तत् पशोरिव चेष्टितम् ॥ ४८ ॥
जङ्गमानि च भूतानि स्थावराणि च ये नराः ।
आत्मवत्परिरक्षंति यांति ते परमां गतिम् ॥ ४९ ॥
प्राणिनं वध्यमानं तु यः शक्तः समुपेक्षते ।
स याति नरकं घोर मितिप्राहु र्मनीषिणः ॥ ५० ॥
राज्यं समस्तं सुमहत् प्रयच्छामि तव द्विज ।
यदा कामयसे ह्यन्यद् वर्जयित्वा कपोतकम् ॥ ५१ ॥
श्येनउवाच- यदिराजन् कपोतेन सुहृदा प्रीति रीदृशी ।
ततः कपोततुल्यानि स्वमांसानि प्रयच्छ मे ॥ ५२ ॥
राजोवाच- अनुग्रहमिमं मन्ये यन्मां श्येनाभिभाषसे ।
एषत्तेऽहं प्रयच्छामि स्वमांसं यावदिच्छसि ॥ ५३ ॥
यद्प्रियं तत्सुजन श्चिराद्ददति मानवः ।
मम तु प्रिय मेवैतत्कस्मादभिहितं चिरात् ॥ ५४ ॥
अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
ध्रुवं यो नार्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ ५५ ॥
यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते ।
ततः किमुपकारोऽस्य प्रत्यहं क्रियते वृथा ॥ ५६ ॥

श्येन उवाच- नातिरिक्तमहं याचे तव मांसं जनेश्वर ! ।
तस्मात्कपोतेन समं प्रयच्छ तुलया धृतम् ॥ ५७ ॥
राजोवाच- तदेवाहं करिष्यामि यन् मां श्येनाभि भाषसे ।
कपोतरक्षणं मे स्यात्तवापि च विहङ्गम ॥ ५८ ॥
लोमश उवाच. एवमुक्त्वा स्वमांसानि समुत्कृत्य स पार्थिवः ।
प्रहृष्टस्तोलयामास कपोतेन समं प्रभुः ॥ ५९ ॥
त्यक्तात्मफलभोगेच्छाः सर्वसत्वहितैषिणः ।
भवन्ति परदुःखेन साधवो नित्यदुःखिताः ॥ ६० ॥
ध्रियमाणस्तु तुलया कपोतो व्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि ततः प्रादात् स पार्थिवः ॥ ६१ ॥
न विद्यते यदा मांसं कपोतेन समं क्वचित् ।
ततः प्रक्षीणमांसोऽसावारुरोह तुलां स्वयम् ॥ ६२ ॥
परदुःखातुरा नित्यं सर्वभूतहिते रताः ।
नापेक्षन्ते महात्मानः स्वसुखानि महान्त्यपि ॥ ६३ ॥
अथ तस्मिन् समारूढे तुलां औशीनरे नृपे ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह ॥ ६४ ॥
ततस्तस्य तदा मत्वा धर्मे राज्ञो मतिं पराम्
शक्रः स्वरूपमास्थाय वाक्यमेतदुवाच ह ॥ ६५ ॥
इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवाडयम् ।
जिज्ञासमानौ त्वां राजन्निमं यज्ञमुपागतौ ॥ ६६ ॥
नैतत्पूर्वं नृपाश्चक्रुर्न करिष्यन्ति चापरे ।
महाकारुणिकेनेह यत्कृतं दुष्कृतं नृप ॥ ६७ ॥
परार्थे त्यजतः प्राणान् या प्रीतिरभवत्तव ।
प्राणसंश्रयलुब्धेषु न सा प्राणेषु देहिनाम् ॥ ६८ ॥
परार्थैकान्तकल्याणी स्वश्रेयात्यन्तनिष्ठुरा ।
त्वय्येव केवलं राजन् करुणा तदुपायते ॥ ६९ ॥
स्वकर्मपाशैः सुदृढैर्बद्धं कृत्स्नमिदं जगत् ।
त्वं जगद्दुःखमोक्षार्थं बद्धः करुणया नृप ॥ ७० ॥
यथा सर्वात्मना चापि दोषेष्वपहतं त्वया ।
तथा चैवात्मनःस्थाने वासनापि न विद्यते ॥ ७१ ॥

अकृत्वेर्ष्यां विशिष्टेषु हीनाननवमान्य च ।
अकृत्वा सदृशे स्पर्द्धां स्वं लोकोत्तमतां गतः ॥ ७२ ॥
परोपकारजन्मानो विधात्रा विहिताश्च ये ।
सजला जलदाः खे च सफलाश्च महाद्रुमाः ॥ ७३ ॥
आत्मप्राणैः परप्राणान् यो नरः परिरक्षति ।
स याति परमं धाम यतो नावर्त्तते पुनः ॥ ७४ ॥
प्राणैरपि त्वया राजन् रक्षितः कृपणो जनः ।
स्वमांसानि प्रदत्तानि ह्यन्येष्वन्येषु का कथा ॥ ७५ ॥
पशवोऽपि हि जीवंति केवलात्मोदरंभराः ।
सपुन र्जीवितश्लाघ्यो यः परार्थं हि जीवति ॥ ७६ ॥
किमत्र चित्रं यत् संतः परानुग्रहतत्पराः ।
न हि स्वदेहशीताय जायंते चन्दनद्रुमाः ॥ ७७ ॥
परोपकारव्यापारपरो यः पुरुषः सदा ।
सपदं तदवाप्नोति परादपि हि यत्परम् ॥ ७८ ॥
परोपकारैकधियः स्वसुखाय गतस्पृहाः ।
जगद्धिताय जायंते साधवस्त्वादृशा भुवि ॥ ७९ ॥
यत्स्वमांसानि भूतेभ्यः समुत्कृत्तानि पार्थिव ।
एषा ते शाश्वती कीर्तिर्लोकाननुगमिष्यति ॥ ८० ॥
दिव्यरूपधरश्चैव पालयित्वा महीं चिरम् ।
सर्वं लोकानतिक्रम्य ब्रह्मलोकं गमिष्यसि ॥ ८१ ॥
एवमुक्त्वा तमिन्द्राग्नी जग्मतु स्त्रिदशालयं ।
राजा तु क्रतुभिरिष्ट्वा च मुमुदे देववच्चिरम् ॥ ८२ ॥
य इदं शृणुयान्नित्यं शिवेश्चरितमुत्तमम् ।
सविधूयेह पापानि प्रयाति त्रिदिव नरः ॥ ८३ ॥

विचिंत्य राजा स्वशरीरमध्रुवं ध्रुव यशः सर्वजनस्य दुर्लभम्
शरीर दानात्परजीवरक्षणं विधाय लोकत्रय भूषणं ययौ

## अहिंसा

श्रुतिः । मा हिंस्यात् सर्वभूतानि

श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम् ।
आत्मनः प्रति कूलानि परेषां न समाचरेत् ॥

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः।
न तत्परेषु कुर्वीत जानन्नप्रिय मात्मनः॥
श्लो ३८ न तत्परस्य संदध्यात् प्रतिकूलं यदात्मनः।
एष सामासिको धर्मः कामादन्यः प्रवर्त्तते॥७२॥
जीवितं यः स्वयं चेच्छेत् कथं सोऽन्यं प्रघातयेत्।
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत्॥७३॥
शान्ति. ३०८. मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि।
भूतानां प्रतिकूलेभ्यो निवर्त्तस्व यतेन्द्रियः॥
आत्मनः प्रतिकूलानि परेभ्यो यदि नेच्छसि।
परेषां प्रतिकूलेभ्यो निवर्त्तय ततो मनः॥

---

मनुः ५. योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।
स जीवंश्च मृतश्चैव न कचित् सुखमेधते॥४५॥
यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते॥४६॥
यद्ध्यायति यत्कुरुते धृतिं बध्नाति यत्र च।
तदवाप्नोत्ययत्नेन यो हिनस्ति न किञ्चन॥४७॥
नाकृत्वा प्राणिनां हिंसां मांस मुत्पद्यते कचित्।
न च प्राणिवधः स्वर्ग्य स्तस्मान्मांसं विवर्जयेत्॥४८॥
समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम्।
प्रसमीक्ष्य निवर्त्तेत सर्वमांसस्य भक्षणात्॥४९॥
अनुमन्ता विशसिता निहन्ता क्रय विक्रयी।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः॥५१॥
वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः।
मांसानि च न खादेद्य स्तयोः पुण्यफलं समम्॥५३॥
फलमूलाशनै र्मेध्यै र्मुन्यन्नानां च भोजनैः।
न तत्फल मवाप्नोति यन्मांसपरिवर्जनात्॥५४॥
मांस भक्षयिताऽमुत्र यस्य मांस मिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥५५॥

अनु ११३ युधि.उ अहिंसा वैदिकं कर्म ध्यानमिन्द्रिय संयमः ।
तपो ऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥ १ ॥
सर्वाण्येतानि धर्म्याणि पृथक् द्वाराणि सर्वशः ।
शृणु संकीर्त्य मानानि षडेव भरतर्षभ ॥ २ ॥
हन्त निश्रेयसं जन्तो रहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं यः साधयति वै नरः ॥ ३ ॥
त्रीन् दोषान्सर्वभूतेषु निधाय पुरुषः सदा ।
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥ ४ ॥
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनः सुखमन्विच्छन् स प्रेत्य न सुखी भवेत् ॥ ५ ॥
आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः ।
न्यस्तदण्डो जितक्रोधः सप्रेत्य सुखमेधते ॥ ६ ॥
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ७ ॥
नतत्परस्य सन्दध्यात् प्रतिकूलं यदात्मनः ।
एष संक्षेपतो धर्मः कामादन्यत् प्रवर्तते ॥ ८ ॥
प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ९ ॥
यथापरः प्रक्रमते परेषु तथापरे प्रक्रमन्ते परस्मिन् ।
तथैव तेपूपमा जीवलोके यथा धर्मो निपुणेनोपदिष्टः ॥१०॥
वैशम्पा.उ इत्युक्त्वा तं सुरगुरु धर्मराजं युधिष्ठिरम् ।
दिव माचक्रमे धीमान् पश्यतामेव नः सदा ॥ ११ ॥

---

अनु. ११५ अहिंसा परमो धर्म इत्युक्तं बहुश स्त्वया ।
श्राद्धेषु च भवानाह पितृनामिषकाङ्क्षिणः ॥ १ ॥
मांसै र्बहुविधैः प्रोक्तस्त्वया श्राद्धविधिः पुरा ।
अहत्वा च कुतो मांसमेवमेतद्विरुध्यते ॥ २ ॥
जातो नः संशयो धर्मे मांसस्य परिवर्जने ।
दोषो भक्षयतः कः स्यात् कश्चाभक्षयतो गुणः ॥ ३ ॥

हत्वा भक्षयतो वापि परेणापि हतस्य वा ।
हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ॥ ४ ॥
एतदिच्छामि तत्त्वेन कथ्यमानं त्वयाऽनघ ।
निश्चयेन चिकीर्षामि धर्ममेतं सनातनम् ॥ ५ ॥
कथमायुरवाप्नोति कथं भवति सत्त्ववान् ।
कथ मव्यङ्गतामेति लक्षण्यो जायते कथम् ॥ ६ ॥
भीष्म उ॰ मांसस्याभक्षणाद् राजन् यो धर्मः कुरुनन्दन ।
तन्मे शृणु यथातत्त्वं यथास्य विधिरुत्तमः ॥ ७ ॥
रूपमव्यङ्गता मायुर्बुद्धिं सत्त्वं बलं स्मृतिम् ।
प्राप्तुकामै र्नरै र्हिंसा वर्जिता वै महात्मभिः ॥ ८ ॥
ऋषीणामत्र संवादो बहुशः कुरुनन्दन ।
बभूव तेषां तु मतं यत्तच्छृणु युधिष्ठिर ॥ ९ ॥
यो यजेताश्वमेधेन मासि मासि यतव्रतः ।
वर्ज्जयेन् मधु मांसञ्च सममेतद् युधिष्ठिर ॥ १० ॥
सप्तर्षयो बालखिल्यास्तथैव च मरीचिपाः ।
अमांस भक्षणं राजन् प्रशंसन्ति मनीषिणः ॥ ११ ॥
न भक्षयति यो मांसं न च हन्यान्न घातयेत् ।
तन्मित्रं सर्वभूतानां मनुः स्वायम्भुवो ऽब्रवीत् ॥ १२ ॥
अधृष्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
साधूनां सम्मतो नित्यं भवेन्मांसं विवर्ज्जयन् ॥ १३ ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
नारदः प्राह धर्मात्मा नियतं सोऽवसीदति ॥ १४ ॥
ददाति यजते चापि तपस्वी च भवत्यपि ।
मधुमांसनिवृत्तो पि प्राह चैवं बृहस्पतिः ॥ १५ ॥
सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति मधुमांसविवर्ज्जनात् ॥ १७ ॥
सर्वभूतेषु यो विद्वान् ददात्यभयदक्षिणाम् ।
दाता भवति लोके स प्राणानां नात्र संशयः ।
एतं वै परमं धर्मं प्रशंसन्ति मनीषिणः ॥ २० ॥

प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन मन्तव्यं बुद्धिमद्भिः कृतात्मभिः ॥ २१ ॥
मृत्युतो भयमस्तीति विदुषां भूतिमिच्छताम् ।
किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम् ।
अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥ २३ ॥
तस्माद्विद्धि महाराज मांसस्य परिवर्जनम् ।
धर्मस्यायतनं श्रेष्ठं स्वर्गस्य च सुखस्य च ॥ २४ ॥
अहिंसा परमो धर्मस्तथाहिंसा परं तपः ।
अहिंसा परमं सत्यं यतो धर्मः प्रवर्त्तते ॥ २५ ॥
न हि मांसं तृणात् काष्ठादुपलाद्वापि जायते ।
हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥ २६ ॥
कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च ।
रात्रावहनि सन्ध्यासु चत्वरेषु सभासु च ॥ २८ ॥
उद्यतेषु च शस्त्रेषु मृगव्यालभयेषु च ।
अमांसभक्षणे राजन् भयमन्यै र्न गच्छति ॥ २९ ॥
शरण्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
अनुद्वेगकरो लोके न चाप्युद्विजते सदा ॥ ३० ॥
यस्माद् ग्रसति चैवायुर्हिंसकानां महाद्युते ।
तस्माद्विवर्जयेन् मांसं य इच्छेद् भूतिमात्मनः ॥ ३३ ॥
त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः ।
उद्वेजनीया भूतानां यथा व्यालमृगास्तथा ॥ ३४ ॥
लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव च ।
संसर्गाद् वाथ पापानां अधर्मे रुचिता नृणाम् ॥ ३५ ॥
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ।
उद्विग्नवासो वसति यत्र तत्राभिजायते ॥ ३६ ॥
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः ॥ ३७ ॥
इदन्तु खलु कौन्तेय श्रुतमासीत् पुरा मया ।
मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ॥ ३८ ॥

यो वै खादति मांसानि प्राणिनां जीवितैषिणाम् ।
हतानां वा मृतानां वा यथा हन्ता तथैव सः ॥ ३९ ॥
धनेन क्रयिको हन्ति खादकश्चोपभोगतः ।
घातको वधबन्धाभ्या मित्येष त्रिविधो वधः ॥ ४० ॥
अखादयन्ननुमोदंश्च भावदोषेण मानवः ।
योऽनुमोदति हन्यन्तं सोऽपि दोषेण लिप्यते ॥ ४१ ॥
अधृष्यः सर्वभूतानामायुष्मान्नीरुजः सुखी ।
भवत्यभक्षयन्मांसं दयावान् प्राणिनामिह ॥ ४२ ॥
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः ।
मांसस्याभक्षणे धर्मो विशिष्ट इति नः श्रुतः ॥ ४३ ॥
अप्रोक्षितं वृथा मांसं विधिहीनं न भक्षयेत् ।
भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ॥ ४४ ॥
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिदं ज्ञेयं विपरीते तु लिप्यते ॥ ४५ ॥
खादकस्य कृते जन्तून् यो हन्यात् पुरुषाधमः ।
महादोषतरस्तत्र घातको न तु खादकः ॥ ४६ ॥
भक्षयित्वापि यो मांसं पश्चादपि निवर्त्तते ।
तस्यापि सुमहान् धर्मो यः पापाद्विनिवर्त्तते ॥ ४८ ॥
आहर्त्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्त्ता चोपभोक्ता च खादकाः सर्व एव ते ॥ ४९ ॥
इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम् ।
पुराणमृषिभिर्जुष्टं वेदेषु परिनिष्ठितम् ॥ ५० ॥
प्रवृत्तिलक्षणो धर्मः प्रजार्थिभि रुदाहृतः ।
यथोक्तं राजशार्दूल न तु तन्मोक्षकाङ्क्षिणाम् ॥ ५१ ॥
हविर्यत् संस्कृतं मन्त्रैः प्रोक्षिता भ्युक्षितं शुचि ।
वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च ॥ ५२ ॥
अतोऽन्यथा वृथा मांसमभक्ष्यं मनुरब्रवीत् ।
अस्वर्ग्यमयशस्यं तद् रक्षोवद् भरतर्षभ ॥ ५३ ॥
विधिहीनं नरः पूर्वं मांसं राजन् न भक्षयेत् ।
अप्रोक्षितं वृथा मांसं विधिहीनं न भक्षयेत् ॥ ५४ ॥

य इच्छेत् पुरुषोऽत्यन्तमात्मानं निरुपद्रवम् ।
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ॥ ५५ ॥
श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥ ५६ ॥
ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा ।
अभक्ष्यमिति मांसं यः प्राह भक्ष्यमिति प्रभो ॥ ५७ ॥
आकाशादवनीं प्राप्त स्ततः स पृथिवीपतिः ।
एतदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ ५८ ॥
प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षितास्तपसा मृगाः ॥ ५९ ॥
क्रियास्वेवं न हीयन्ते पितृदैवतसंश्रिताः ।
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ ६० ॥
इदन्तु शृणु राजेन्द्र कीर्त्यमानं मयाऽनघ ।
अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ॥ ६१ ॥
यस्तु वर्षशतं पूर्णं तपस्तप्येत् सुदारुणम् ।
यश्चैव वर्जयेन्मांसं सममेतन्मतं मम ॥ ६२ ॥
कौमुदे तु विशेषेण शुक्लपक्षे नराधिप ।
वर्जयेन् मधुमांसानि धर्मो ह्यत्र विधीयते ॥ ६३ ॥
चतुरो वार्षिकान् मासान् यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम् ॥ ६४ ॥
अथवा मास मेकं वै सर्वमांसान्यभक्षयन् ।
अतीत्य सर्वदुःखानि सुखं जीवे न्निरामयः ॥ ६५ ॥
वर्जयन्ति हि मांसानि मासशः पक्षशोऽपि वा ।
तेषां हिंसा निवृत्तानां ब्रह्मलोको विधीयते ॥ ६६ ॥
मांसन्तु कौमुदं पक्षं वर्जितं पार्थ राजभिः ।
सर्वभूतात्मभूतस्थै र्विदितार्थ परावरैः ॥ ६७ ॥
नाभागे नाम्बरीषेण गयेन च महात्मना ।
आयुनाथानरण्येन दिलीपरघुपूरुभिः ॥ ६८ ॥
कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृगेण विष्वक्सेनेन तथैव शशबिन्दुना ॥ ६९ ॥

युवनाश्वेन च तथा शिबिनौशीनरेण च ।
मुचुकुन्देन मांधात्रा हरिश्चन्द्रेण वा विभो ॥ ७०॥
श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च ।
रैवतेन रन्तिदेवेन वसुना सृंजयेन च ॥ ७२ ॥
दुष्यन्तेन करूपेण रामालर्कनलैस्तथा ।
विरूपाश्वेन निमिना जनकेन च धीमता ॥ ७३ ॥
ऐलेन पृथुना चैव वीरसेनेन चैव ह ।
इक्ष्वाकुणा शम्भुना च श्वेतेन सगरेण च ॥ ७४ ॥
अजेन धुन्धुना चैव तथैव च सुबाहुना ।
हर्यश्वेन च राजेन्द्र क्षुपेण भरतेन च ॥ ७५ ॥
एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥ ७६ ॥
तदेतदुत्तमं धर्मं अहिंसा धर्मलक्षणम् ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥ ७८ ॥
मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥ ७६ ॥
अमांसभक्षणविधिं पवित्रमृषिपूजितम् ।
विमुक्तः सर्वपापेभ्यः सर्वकामैर्महीयते ॥
विशिष्टतां ज्ञातिषु च लभते नात्रसंशयः ॥ ८२ ॥
आपन्नश्चापदो मुच्येद् बद्धो मुच्येत बन्धनात् ।
मुच्येत्तथातुरो रोगाद् दुःखान् मुच्येत दुःखितः ॥ ८३ ॥
तिर्यग् योनिं न गच्छेच्च रूपवांश्च भवेन्नरः ।
ऋद्धिमान् वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ॥ ८४ ॥
एतत्ते कथितं राजन् मांसस्य परिवर्जने ।
प्रवृत्तौ च निवृत्तौ च विधान मृषिनिर्मितम् ॥ ८५ ॥

---

## श्रद्धा

बृहदारण्यकोपनिषत्-३- ९. २१. किं देवतोऽस्यां दक्षिणायां दिश्यसीति । यम देवत इति । स यमः कस्मिन् प्रतिष्ठित इति । यज्ञ इति । कस्मिन्नु यज्ञः प्रतिष्ठित इति । दक्षिणायामिति । कस्मिन्नुदक्षिणा प्रति-

ष्ठितेति । श्रद्धायामिति । यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाᳪ ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति । हृदय इति होवाच । हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

---

मनुः ४· श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥ २२६ ॥
श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवाः सममन्नं कमल्पयन् ॥ २२४ ॥
तान् प्रजापतिराहैत्य माकृध्वं विषमं समम् ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ २२५ ॥
इति. मनु. ३. श्रद्धाधर्मसुता देवी पावनी विश्वरूपिणी ।
सावित्री प्रसवित्री च संसारार्णवतारिणी ॥ ८ ॥
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ।
अकिञ्चना हि मुनयः श्रद्धावन्तो दिवं गताः ॥ ६ ॥
शांति २६३· अहिंसादि कृतं कर्म इह चैव परत्र च ।
श्रद्धां निहन्ति वै ब्रह्मन् सा हता हन्ति तं नरम् ॥ ६ ॥
समानां श्रद्दधानानां संयतानां सुचेतसाम् ।
कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥ ७ ॥
श्रद्धा वैवस्वती सेयं सूर्यस्य दुहिता द्विज ।
सावित्री प्रसवित्री च बहिर्वाङ्मनसी ततः ॥ ८ ॥
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धञ्च भारत ।
श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति ॥ ६ ॥
अत्र गाथा ब्रह्मगीताः कीर्त्तयन्ति पुराविदः ।
शुचे रश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
देवा वित्त ममन्यन्त सदृशं यज्ञकर्मणि ॥ १० ॥
श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ ११ ॥
प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥ १२ ॥

श्रद्धापूतं वदान्यस्य हत मश्रद्धये तरत् ।
भोज्यमन्नं वदान्यस्य कदर्य्यस्य न वार्द्धुषेः ॥ १३ ॥
अश्रद्दान एवैको देवानां नार्हते हविः ।
तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ॥ १४ ॥
अश्रद्धा परमं पापं श्रद्धा पाप प्रमोचनी ।
जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ १५ ॥
ज्यायसी या दविन्नाणां निवृत्तिः श्रद्धया सह ।
निवृत्तशीलदोषो यः श्रद्धावान् पूत एव सः ॥ १६ ॥
किं तस्य तपसा कार्यं किं वृत्तेन कि मात्मना ।
श्रद्धा मयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।
इति धर्मः समाख्यातः सद्भि र्धर्मार्थदर्शिभिः ॥ १७ ॥

---

## आतिथ्यम् ॥

मनु १२७. आतिथ्यं सततं कुर्यात् ।

अथर्ववे० इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथे
रश्नाति ॥ १ ॥ पयश्च वा एष रसं च० ॥ २ ॥ ऊर्जां च वा
एष स्फातिं च० ॥ ३ ॥ प्रजां च वा एष पशूंश्च० ॥ ४ ॥
कीर्तिं च वा एष यशश्च० ॥ ५ ॥ श्रियं च वा एष संविदं
च गृहाणा मश्नाति यः पूर्वो ऽतिथे रश्नाति ॥६ ॥ एष वा
अतिथि र्य च्छोत्रिय स्तस्मात् पूर्वो नाश्नीयात् ॥ ७ ॥

---

मनु. अ ३.संप्राप्ताय त्वतिथये प्रदद्यादासनोदके ।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ ९९ ॥
शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणो ऽनर्चितो वसन् ॥ १०० ॥
तृणानि भूमि रुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ १०१ ॥
एक रात्रिं तु निवसन्नतिथि र्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मा दतिथिरुच्यते ॥ १०२ ॥

नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा ।
उपस्थितं गृहे विद्याद्भार्या यत्राग्नयो ऽपि वा ॥ १०३ ॥
उपासते ये गृहस्थाः परपाकमबुद्धयः ।
तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादि दायिनाम् ॥ १०४ ॥
अप्रणोद्यो ऽतिथिः सायं सूर्योढो गृहमेधिनाम् ।
काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् ॥ १०५ ॥
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं वा ऽतिथिपूजनम् ॥ १०६ ॥
आसनावसथौ शय्या मनुव्रज्या मुपासनाम् ।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥ १०७ ॥
वैश्वदेवे तु निर्वृत्ते यद्यन्यो ऽतिथि राव्रजेत् ।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ १०८ ॥

---

## रन्तिदेव चरितम् ।

भाग·स्कं·९·२१·श्रीशुक·उ वितथस्य सुतो मन्यु बृहत्क्षत्रो जयस्ततः
महावीर्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥ १ ॥
गुरुश्च र[illegible]ुनन्दन ।
[illegible] हि यश इहाऽमुत्र च गीयते ॥ २ ॥
वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ।
निष्किंचनस्य धीरस्य सकुटुम्बस्य सीदतः ॥ ३ ॥
व्यतीयु रष्टचत्वारिंश दहान्यपिबतः किल ।
घृतपायस संयावं तोयं प्रात रुपस्थितम् ॥ ४ ॥
कृच्छ्र प्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ।
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥
तस्मै संव्यभजत् सो ऽन्नमादृत्य श्रद्धयान्वितः ।
हरिं सर्वत्र संपश्यन् स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥
अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते ।
विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥

याते शूद्रे तमन्यो ऽगादतिथिः श्वभिरावृतः ।
राजन्मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥
स आदृत्या वशिष्टं यद्बहुमान पुरस्कृतम् ।
तच्च दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥
पानीयमात्र मुच्छेषं तच्चैक परितर्पणम् ।
पास्यतः पुल्कसो ऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥
तस्य तां करुणां वाचं निशम्य विपुलश्रमाम् ।
कृपया भृशसंतप्त इदमाहामृतं वचः ॥ ११ ॥
न कामये ऽहं गतिमीश्वरात्परा मष्टर्द्धियुक्ता मपुनर्भवं वा ।
आर्तिं प्रपद्ये ऽखिलदेहभाजा मन्तःस्थितो येन भवन्त्यदुःखाः १२
क्षुत्तृट्श्रमो गात्र परिश्रमश्च दैन्यंक्लमः शोकविषाद मोहाः ।
सर्वे निवृत्ताः कृपणस्य जन्तो र्जिजीविषोर्जीव जलार्पणान् मे १३
इति प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसाया ऽददाद्धीरो निसर्गकरुणो नृपः ॥ १४ ॥
तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ।
आत्मानं दर्शयाञ्चक्रु र्विष्णुमायाविनिर्मिताः ॥ १५ ॥
स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः ।
वासुदेवे भगवति भक्त्या चक्रे मनः परम् ॥ १६ ॥
ईश्वरालम्बनं चित्तं कुर्वतो ऽनन्यराधसः ।
माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत ॥ १७ ॥
तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ।
अभवन् योगिनः सर्वे नारायण परायणाः ॥१८॥

---

## मुग्दलोपाख्यानम्

वन २५९–२६० युधि उ° व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना ।
कस्मै दत्तश्च भगवन् विधिना केन चात्थ मे ॥ १ ॥
प्रत्यक्षधर्मा भगवान् यस्य तुष्टो हि कर्मभिः ।
सफलं तस्य जन्माहं मन्ये सद्धर्मचारिणः ॥ २ ॥

व्यास उवाच-शिलोञ्छवृत्ति धर्मात्मा मुद्गलः संयतेन्द्रियः।
आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः ॥ ३ ॥
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः।
सत्रमिष्टी कृतं नाम समुपास्ते महातपाः ॥ ४ ॥
सपुत्रदारो हि मुनिः पक्षाहारो बभूव ह।
कपोतवृत्त्या पक्षेण व्रीहिद्रोण मुपार्जयत् ॥ ५ ॥
दर्शञ्च पौर्णमासञ्च कुर्वन् विगतमत्सरः।
देवताऽतिथिशेषेण कुरुते देहयापनम् ॥ ६ ॥
तस्येन्द्रः सहितो देवैः साक्षात् त्रिभुवनेश्वरः।
प्रत्यगृह्णन्महाराज भागं पर्वणि पर्वणि ॥ ७ ॥
स पर्वकालं कृत्वा तु मुनिवृत्तया समन्वितः।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ८ ॥
व्रीहिद्रोणस्य तद्धस्य ददतोऽन्नं महात्मनः।
शिष्टं मात्सर्यहीनस्य वर्द्धत्यतिथिदर्शनात् ॥ ९ ॥
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम्।
मुनेस्त्यागविशुद्धया तु तदन्नं वृद्धिमृच्छेति ॥ १० ॥
तन्तु शुश्राव धर्मिष्ठं मुद्गलं शंसितव्रतम्।
दुर्वासा नृप दिग्वासा स्तमथाभ्याजगाम ह ॥ ११ ॥
बिभ्रच्चानियतं वेशमुन्मत्त इव पाण्डव।
विकचः परुषा वाचो व्याहरन् विविधा मुनिः ॥ १२ ॥
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः।
अन्नार्थिनमनुप्राप्तं विद्धि मां द्विजसत्तम ॥ १३ ॥
स्वागतन्तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत।
पाद्यमाचमनीयञ्च प्रतिपाद्यान्नमुत्तमम् ॥ १४ ॥
प्रादात् स तापसायान्नं क्षुधितायातिथिव्रती।
उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः ॥ १५ ॥
ततस्तदन्नं रसवत् स एव क्षुधयान्वितः।
बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः ॥ १६ ॥
भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः।
अथाङ्गं लिलिपेऽन्नानि यथागतमगाच्च सः ॥ १७ ॥

एवं द्वितीये संप्राप्ते यथाकाले मनीषिणः ।
आगम्य बुभुजे सर्वमन्नमुञ्छोपजीविनः ॥ १८ ॥
निराहारस्तु स मुनिरुञ्छं मार्गयते पुनः ।
न चैनं विक्रियां नेतुमशकन्मुद्गलं क्षुधा ॥ १९ ॥
न क्रोधो न च मात्सर्यं नावमानो न सम्भ्रमः ।
सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम् ॥ २० ॥
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथा कालं षट्कृत्वः कृतनिश्चयः ॥ २१ ॥
न चास्य मनसः किञ्चिद्विकारं ददृशे मुनिः ।
शुद्धसत्त्वस्य शुद्धं स ददृशे निर्मलं मनः ॥ २२ ॥
तमुवाच ततः प्रीतः स मुनिर्मुद्गलं ततः ।
त्वत्समो नास्ति लोकेऽस्मिन् दाता मात्सर्यवर्जितः ॥२३॥
क्षुद्धर्मसंज्ञां प्रणुदत्यादत्ते धैर्यमेव च ।
रसानुसारिणी जिह्वा कर्षत्येव रसान् प्रति ॥ २४ ॥
आहारप्रभवाः प्राणा मनोदुर्निग्रहञ्चलम् ।
मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं निश्चितं तपः ॥ २५ ॥
श्रमेणोपार्जितं त्यक्तुं दुःखं शुद्धेन चेतसा ।
तत्सर्वं भवता साधो यथावदुपपादितम् ॥ २६ ॥
प्रीताः स्मो ऽनुगृहीताश्च समेत्य भवता सह ।
इन्द्रियाभिजयो धैर्यं संविभागो दमः शमः ।
दया सत्यञ्च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ २७ ॥
जितास्ते कर्मभिर्लोकाः प्राप्तोऽसि परमां गतिम् ॥ २८ ॥
अहो दानं विघुष्टन्ते सुमहत् स्वर्गवासिभिः ।
सशरीरो भवान् गन्ता स्वर्गं सुचरितव्रत ॥ २९ ॥
इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ।
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ॥ ३० ॥
हंससारस युक्तेन किङ्किणीजालमालिना ।
कामगेन विचित्रेण दिव्यगन्धवता तथा ॥ ३१ ॥
उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ।
समुपारोह संसिद्धिं प्राप्तोऽसि परमां मुने ॥ ३२ ॥

अनु॰ पर्व॰ ९ धर्म्मक्षेत्रे कुरुक्षेत्रे धर्म्मज्ञैर्बहुभि र्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित् कापोतिरभवत्तदा ॥ २४ ॥
सभार्य्यः सह पुत्रेण सस्नुषस्तपसि स्थितः ।
बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥ २५ ॥
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह सुव्रतः ।
षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ॥ २६ ॥
भुङ्क्तेऽन्यस्मिन् कदाचित् स षष्ठे काले द्विजोत्तमः ।
कदाचिद्धर्मिणस्तस्य दुर्भिक्षे सति दारुणे ॥ २७ ॥
नाविद्यत तदा विप्राः सञ्चयस्तन्निबोधत ।
क्षीणौषधिसमावेशे द्रव्यहीनोऽभवत्तदा ॥ २८ ॥
काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम् ।
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ॥ २९ ॥
उञ्छंस्तदा शुक्लपक्षे मध्यं तपति भास्करे ।
उष्णार्त्तश्च क्षुधार्त्तश्च स विप्रस्तपसि स्थितः ॥ ३० ॥
उञ्छमप्राप्तवानेव ब्राह्मणः क्षुत्श्रमान्वितः ।
स तथैव क्षुधाविष्टः सार्द्धं परिजनेन ह ॥ ३१ ॥
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः ।
अथ षष्ठे गते काले यवप्रस्थमुपार्ज्जयत् ॥ ३२ ॥
यवप्रस्थन्तु तं सक्तूनकुर्वन्त तपस्विनः ।
कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ॥ ३३ ॥
कुडवं कुडवं सर्वे व्यभजन्त तपस्विनः ।
अथागच्छत् द्विजः कश्चिदतिथिर्भुञ्जतां तदा ॥ ३४ ॥
ते तं दृष्ट्वातिथिं प्राप्तं प्रहृष्टमनसोऽभवन् ।
तेऽभिवाद्य सुखप्रश्नं दृष्ट्वा तमतिथिं तदा ॥ ३५ ॥
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः ।
अनसूया जितक्रोधाः साधवो वीतमत्सराः ॥ ३६ ॥
त्यक्तमानमदक्रोधा धर्म्मज्ञा द्विजसत्तमाः ।
सब्रह्मचर्य्यं गोत्रन्ते तस्याख्यात्वा परस्परम् ॥ ३७ ॥
कुटीं प्रवेशयामासुः क्षुधार्त्तमतिथिं तदा ।
इदमर्घ्यञ्च पाद्यञ्च बृषी चेयं तवानघ ॥ ३८ ॥

शुचयः सक्तवश्चेमे नियमोपार्ज्जिताः प्रभो ।
प्रतिगृह्णीष्व भद्रन्ते मया दत्ता द्विजर्षभ ॥ ३९ ॥
इत्युक्ताः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः ।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥ ४०
स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजः ।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥ ४१ ॥
तस्य भार्य्याब्रवीद्वाक्यं मद्भागो दीयतामिति ।
गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः ॥ ४२ ॥
इति ब्रुवन्तीं तां साध्वीं भार्य्यां स द्विजसत्तमः ।
क्षुधापरिगतां ज्ञात्वा तान् सक्तून्नाभ्यनन्दत ॥ ४३ ॥
आत्मानुमानतो विद्वान् स तु विप्रर्षभस्तदा ।
जानन् वृद्धां क्षुधार्त्ताञ्च श्रान्तां ग्लानां तपस्विनीम् ॥४४॥
त्वगस्थिभूतां वेपन्तीं ततो भार्य्यामुवाच ह ।
अपि कीटपतङ्गानां मृगाणाञ्चैव शोभने ॥ ४५ ॥
स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि ।
अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव सः ॥ ४६ ॥
धर्मकामार्थकार्य्याणि शुश्रूषा कुल सन्ततिः ।
दारेष्वधीनो धर्म्मश्च पितॄणामात्मनस्तथा ॥ ४७ ॥
न वेत्ति कर्म्मतो भार्य्यारक्षणे योऽक्षमः पुमान् ।
अयशो महदाप्नोति नरकांश्चैव गच्छति ।
प्रपतेद्यशसो दीप्तात् स च लोकान्न चाप्नुयात् ॥ ४८ ॥
इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज ।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे ॥ ४९ ॥
सत्यं रतिश्च धर्म्मश्च स्वर्गश्च गुणनिर्ज्जितः ।

जरापरिगतो वृद्धः क्षुधार्त्तो दुर्बलो भृशम् ।
उपवासपरिश्रान्तो तदा त्वमपि कर्षितः ॥ ५३ ॥
इत्युक्तः स तया सक्तून् प्रगृह्येदं वचोऽब्रवीत् ।
द्विज सक्तूनिमान् भूयः प्रतिगृह्णीष्व सत्तम ॥ ५४ ॥
स तान् प्रगृह्य भुक्त्वा च न तुष्टिमगमत् द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ५५ ॥
पुत्र उवाच. सक्तूनिमान् प्रगृह्य त्वं देहि विप्राय सत्तम ।
इत्येव सुकृतं मन्ये तस्मादेतत् करोम्यहम् ॥ ५६ ॥
भवान् हि परिपाल्यो मे सर्वदैव प्रयत्नतः ।
साधूनां काङ्क्षितं यस्मात् पितुर्वृद्धस्य पालनम् ॥ ५७ ॥
पुत्रार्थो विहितो ह्येष वार्द्धके परिपालनम् ।
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥ ५८ ॥
प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया ।
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम् ॥ ५९ ॥
पितोवाच. अपि वर्षसहस्री त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत् सुतात् ॥ ६० ॥
बालानां क्षुद् बलवती जानाम्येतदहं प्रभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ६१ ॥
जीर्णेन वयसा पुत्र न मां क्षुद् बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ६२ ॥
पुत्र उवाच. अपत्यमस्मि ते पुत्रस्त्राणात् पुत्र इति श्रुतिः ।
आत्मा पुत्रः स्मृतस्तस्मात्त्राहयात्मानमिहात्मना ॥ ६३ ॥
पितोवाच. रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ॥ ६४ ॥
इत्युक्त्वादाय तान् सक्तून् प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ६५ ॥
भुक्त्वा तानपि सक्तून् स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह ॥ ६६ ॥
तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत् ॥ ६७ ॥

सन्तानात्तव सन्तानं मम विप्र भविष्यति।
सक्तूनिमानतिथये गृहीत्वा संप्रच्छ मे ॥ ६८ ॥
तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः।
पौत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ६९ ॥
धर्माद्यो हि यथा त्रेता वह्निस्त्रेता तथैव च।
तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः ॥ ७० ॥
पितॄन् ऋणात्तारयति पुत्र इत्यनुशुश्रुम।
पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते ॥ ७१ ॥
श्वशुर उवाच वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै।
कर्पिलां सुव्रताचारे क्षुधाविह्वलचेतसाम् ॥ ७२ ॥
कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः।
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ॥ ७३ ॥
षष्ठे काले व्रतवतीं शौचशीलतपोऽन्विताम्।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे ॥ ७४ ॥
बाला क्षुधार्त्ता नारी च रक्ष्या त्वं सततं मया।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ॥ ७५ ॥
स्नुषा वाच. गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम्।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो ॥ ७६ ॥
देहः प्राणाश्च धर्मश्च शुश्रूषार्थमिदं गुरोः।
तव विप्र प्रसादेन लोकान् प्राप्स्यामहे शुभान् ॥ ७७ ॥
अवेक्ष्या इति कृत्वाहं दृढभक्तेति वा द्विज।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ॥ ७८ ॥
श्वशुरउवाच. अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ॥ ७९ ॥
तस्मात् सक्तून् ग्रहीष्यामि वधो नार्हसि वञ्चनाम्।
गणयित्वा महाभागे त्वं हि धर्मभृतां वरे ॥ ८० ॥
इत्युक्त्वा तानुपादाय सक्तून् प्रादात् द्विजातये।
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः ॥ ८१ ॥
प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम्।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ॥ ८२ ॥

शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः ।
यथाशक्ति विसृष्टेन प्रीतोऽस्मि द्विजसत्तम ॥ ८३ ॥
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः ।
गगनात् पुष्पवर्षञ्च पश्येदं पतितं भुवि ॥ ८४ ॥
सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः ।
स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ॥ ८५ ॥
ब्रह्मर्षयो विमानस्था ब्रह्मलोकचराश्च ये ।
काङ्क्षन्तो दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ ॥ ८६ ॥
पितृलोकगताः सर्वे तारिताः पितरस्त्वया ।
अनागताश्च बहवः सुबहूनि युगान्युत ॥ ८७ ॥
ब्रह्मचर्य्येण दानेन यज्ञेन तपसा तथा ।
असङ्करेण धर्मेण तस्माद्गच्छ दिवं द्विज ॥ ८८ ॥
श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत ।
तस्माद्देवास्त्व दानेन प्रीता ब्राह्मणसत्तम ॥ ८९ ॥
सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा ।
कृच्छ्रकाले ततः स्वर्गो विजितः कर्मणा त्वया ॥ ९० ॥
क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति ।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥ ९१ ॥
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ।
यदा दानरुचिः स्यात्तु तदा धर्मो न सीदति ॥ ९२ ॥
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥ ९३ ॥
द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् ।
कालः परतरो दानात् श्रद्धा चैव ततः परा ॥ ९४ ॥
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ।
स्वर्गार्गलं लोभबीजं रागगुप्तं दुरासदम् ॥ ९५ ॥
तन्तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः ।
ब्राह्मणास्तपसा युक्ता यथाशक्तिप्रदायिनः ॥ ९६ ॥
सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥ ९७ ॥

रन्तिदेवो हि नृपतिरपः प्रदादकिञ्चनः ।
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥ ९८ ॥
न धर्म्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।
न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ॥ ९९ ॥
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः ।
एकां दत्त्वा स पारक्यां नरकं समपद्यत ॥ १०० ॥
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
प्राप्य पुण्यकृतां ल्लोकान् मोदते दिवि सुव्रतः ॥ १०१ ॥
विभवो न नृणां पुण्यं स्वशक्त्या स्वर्ज्जितं सताम् ।
न यज्ञैर्विविधैर्विप्र यथान्यायेन सञ्चितैः ॥ १०२ ॥
क्रोधाद्दानफलं हन्ति लोभात् स्वर्गं न गच्छति ।
न्यायवृत्तिर्हि तपसा दानवित् स्वर्गमश्नुते ॥ १०३ ॥
न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः ।
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥ १०४ ॥
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाक्षयः ।
विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ॥ १०५ ॥
सर्वेषां वै द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ।
आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ॥ १०६ ॥
तारितो हि त्वया देहो लोके कीर्त्तिः स्थिरा च ते ।
सभार्य्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥ १०७ ॥
इत्युक्तवाक्ये धर्मे तु यानमारुह्य स द्विजः ।
सादरः ससुतश्चैव सस्नुषश्च दिवं गतः ॥ १०८ ॥

---

## अथ दानम् ।

तैत्ति आर १-६०. दान मिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुष्करं तस्माद्दाने रमन्ते,—

वन. ३१४. यशः सत्यं दमः शौचं मार्दवं ह्री रचापलम् ।
दानं तपो ब्रह्मचर्य्यं मित्येतास्तनवो मम ॥
अश्व. ९१. एषधर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्य्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ॥ ३२ ॥
सनातनस्य धर्मस्य मूलमेत त्सनातनम् ॥
बृहस्पतिः तपोधर्मः कृतयुगे ज्ञानं त्रेता युगे स्मृतम् ।
द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः ॥
दानेन योगो भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहु र्मनीषिणः ॥
मनुः ४ दानं धर्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥ २२७ ॥
यत्किंचिदपि दातव्यं याचितेनानसूयया ।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥ २२८ ॥
याज्ञव. दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥
स्कं. दानेन प्राप्यते स्वर्गः श्री र्दानेनैव लभ्यते ।
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ॥
दानेन लभ्यते विद्या दानेन युवती जनः ।
धर्मार्थकाम मोक्षाणां साधनं परमं स्मृतम् ॥
उशना. दानाहते नोपचारो विद्यते धनिनो ऽपरः ।
दीयमानं हि तत्तस्य भूय एवाभिवर्द्धते ॥
यमः यतीनां परमो धर्मस्त्वनाहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥
पापकर्मसमायुक्तं पतन्तं नरके नरम् ।
त्रायते दान मेकं तु पात्रभूते द्विजे कृतम् ॥
न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥
अगस्त्यः गोभि र्विप्रै श्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥

म. अश्व. ९१. उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धार्मिकाः ॥ ३१ ॥
एष धर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्य्यं तथा सत्यम ऽनुक्रोशो धृतिः क्षमा ॥ ३२ ॥
सनातनस्य धर्मस्य मूलमेतत् सनातनम् ।
श्रूयन्ते हि पुरा वृत्ता विश्वामित्रादयो नृपाः ॥ ३३ ॥
विश्वा मित्रो ऽसितश्चैव जनकश्च महीपतिः ।
कक्षसेनोर्ष्टिसेनौ च सिन्धुद्वीपश्च पार्थिवः ॥ ३५ ॥
एते चान्ये च बहवः सिद्धिं परमिकां गताः ।
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥ ३६ ॥
ब्राह्मणा क्षत्त्रिया वैश्याः शूद्रा ये चाश्रितास्तपः ।
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥ ३७ ॥

---

## अन्नदान प्रशंसा ।

अनु. ६३. कानि दानानि लोके ऽस्मिन् दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरत सत्तम ॥ १ ॥
केन तुष्यन्ति ते सद्यः किन्तुष्टाः प्रदिशन्ति च ।
शंसमेतन्महाबाहो फलं पुण्यकृतं महत् ॥ २ ॥
दत्तं किं फलवद्राजन्निहलोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ ३ ॥
भीष्म उ. इममर्थं पुरापृष्टो नारदो देवदर्शन. ।
यदुक्तवानसौ वाक्यं तन्मे निगदतः शृणु ॥ ४ ॥
नारद. उ. अन्नमेव प्रशंसन्ति देवा ऋषिगणास्तथा ।
लोकतन्त्रं हि संज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ५ ॥
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ६ ॥
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ ७ ॥

अन्नाद्गृहस्था लोके ऽस्मिन् भिक्षव स्तापसा स्तथा ।
अन्नाद्भवन्ति वै प्राणाः प्रत्यक्षं नात्र संशयः ॥ ८ ॥
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
विदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥ १० ॥
श्रान्तमध्वनि वर्त्तन्तं वृद्धमर्हमुपस्थितम् ।
अर्चयेद्भूति मन्विच्छन् गृहस्थो गृहमागतम् ॥ ११ ॥
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अन्नदः प्राप्नुते राजन् दिवि चेह च यत्सुखम् ॥ १२ ॥
नावमन्येदभिगतं न प्रणुद्यात्कथंचन ।
अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥ १३ ॥
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते ।
श्रान्तायादृष्टपूर्वाय समहद्धर्ममाप्नुयात् ॥ १४ ॥
पितॄन् देवानृषीन् विप्रान् ऽतिथींश्च जनाधिप ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ १५ ॥
कृत्वातिपातकं कर्म योदद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन मुह्यते ॥ १६ ॥
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् ।
अन्नदानं हि शूद्रे च ब्राह्मणस्य विशिष्यते ॥ १७ ॥
नपृच्छेद्गोत्रचरणं स्वाध्यायं देशमेवच ।
भिक्षितो ब्राह्मणेनेह दद्यादन्नं प्रयाचितः ॥ १८ ॥
अन्नदस्यान्नवृक्षाश्च सर्वकामफलप्रदाः ।
भवन्ति चेह चामुत्र नृपते नात्र संशयः ॥ १९ ॥
आशंसन्ते हि पितरः सुवृष्टिमिव कर्षकाः ।
अस्माकमपि पुत्रो वा पौत्रो वान्नं प्रदास्यति ॥ २२ ॥
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठितं ।
अन्नदः पशुमान् पुत्री धनवान् भोगवानपि ॥ २५ ॥
प्राणवां श्चापि भवति रूपवांश्च तथा नृप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः ॥ २६ ॥
अन्नं हि दत्वातिथये ब्राह्मणाय यथाविधि ।
प्रदातासुखमाप्नोति दैवतै श्चापि पूज्यते ॥ २७ ॥

प्रत्यक्षं प्रीतिजननं भोक्तुर्दातुर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ २९ ॥
अन्नाद्धि प्रसवं यान्ति रतिरन्नाद्धि भारत ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथान्नतः ॥ ३० ॥
अन्नं ह्यमृतमित्याह पुराकल्पे प्रजापतिः ।
अन्नं भुवं दिवं खञ्च सर्वमन्ने प्रतिष्ठितम् ॥ ३१ ॥
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः ।
बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ॥ ३२ ॥
आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।
निवर्त्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ॥ ३३ ॥
अन्नतः सर्वमेतद्धि यत्किञ्चित्स्थाणु जङ्गमम् ।
त्रिषुलोकेषुधर्मार्थमन्नं देयमतो बुधैः ॥ ३४ ॥
अन्नदस्य मनुष्यस्य बलमोजो यशांसि च ।
कीर्त्तिश्च वर्द्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ ३५ ॥
प्राणान् ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाथ यो दद्यादन्नमर्थिने ॥ ३६ ॥
नारदेनैव मुक्तो ऽहमदामन्नं सदा नृप ।
अनसूयस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ॥ ४३ ॥
महा॰अनु॰ ६३ अन्नदानं प्रदानं हि कौन्तेय परिचक्षते ।
अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः ॥ ५५ ॥
श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिपः ।
स्वायम्भुवं महास्थानं सगच्छति नराधिपः ॥ ५६ ॥
न हिरण्यै र्न वासोभिर्नान्यदानेन भारत ।
प्राप्नुवन्ति नराः श्रेयो यथा ह्यन्नप्रदाः प्रभो ॥ ५७ ॥
अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परामता ।
अन्नात् प्राणः प्रभवति तेजो वीर्य्यं बलं तथा ॥ ५८ ॥
सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः ॥ ५९ ॥
अर्चयित्वा यथान्यायं देवेभ्यो ऽन्नं निवेदयेत् ।
यदन्नाहि नरा राजं स्तदन्नास्तस्य देवताः ॥ ६० ॥

कौमुदे शुक्लपक्षे तु यो ऽन्नदानं करोत्युत ।
ससन्तरति दुर्गाणि प्रेत्य चानन्तमश्नुते ॥ ६१ ॥
अभुक्तातिथये चान्नं प्रयच्छेद्यः समाहितः ।
स वै ब्रह्मविदो लोकान् प्राप्नुयात् भरतर्षभ ॥ ६२ ॥
सकृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत् ।
पापं तरति चैवेह दुष्कृतञ्चापकर्षति ॥ ६३ ॥

---

## विद्या दानम् ।

मनुः अ.४- सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥ २३३ ॥
अन्नदानात्समं नास्ति विद्या दानं ततोऽधिकम् ।
अन्नेन क्षणिका तृप्ति र्यावज्जीवं तु विद्यया ॥
याज्ञ-आ- सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥
कुक्षौ तिष्ठति यस्यान्नं विद्याभ्यासे न जीर्यति ।
कुलानुद्धरते तस्य दशपूर्वान् दशापरान् ॥

---

## विशिष्ट दानम् ।

महा० अनु० ५९ युधि. उ० यानीमानि बहिर्वेद्यां दानानि परिचक्षते ।
तेभ्योविशिष्टं किंदानं मतन्ते कुरुपुङ्गव ॥ १ ॥
कौतूहलं हि परमं तत्र मे विद्यते प्रभो ।
दातारं दत्तमन्वेति यद्दानं तत्प्रचक्ष्व मे ॥ २ ॥
भीष्म. उ. अभयंसर्वभूतेभ्यो व्यसने चाप्यनुग्रहः ।
यचाभिलषितं दद्यात्तृषितायाभियाचते ॥ ३ ॥
दत्तं मन्येत यद्दत्वा तद्दानं श्रेष्ठ मुच्यते ।
दत्तं दातारमन्वेति यद्दानं भरतर्षभ ॥ ४ ॥
हिरण्यदानं गोदानं पृथिवीदानमेवच ।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ॥ ५ ॥

एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा।
दानानीह नरं पापान् मोक्षयन्ति न संशयः॥ ६॥
यद् यदिष्टतमं लोके यच्चास्य दयितं गृहे।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता॥ ७॥
प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा।
प्रियो भवति भूतानामिह चैव परत्र च॥ ८॥
याचमानमभीमानादनासक्तमकिञ्चनम्।
योनार्चति यथाशक्ति सनृशंसो युधिष्ठिर॥ ९॥
अमित्रमपि चेद्दीनं शरणैषिणमागतम्।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः॥ १०॥
कृशाय कृतविद्याय वृत्तिक्षीणाय सीदते।
अपहन्यात् क्षुधां यस्तु न तेन पुरुषः समः॥ ११॥
क्रियानियमितान् साधून् पुत्रदारैश्च कर्षितान्।
अयाचमानान् कौन्तेय सर्वोपायैर्निमन्त्रयेत्॥ १२॥
आशिषं ये न देवेषु न च मर्त्त्येषु कुर्वते।
अर्हन्तो नित्यसन्तुष्टा स्तथा लब्धोपजीविनः॥ १३॥
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत।
तान् युक्तैरुपजिज्ञास्य तथर्त्विजवरोत्तमान्॥ १४॥
कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः।
निमन्त्रयेथाः कौरव्य सर्वकामसुखावहैः॥ १५॥
यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर।
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः॥ १६॥
विद्यास्नाता व्रतस्नाता ये व्यपाश्रित्य जीविनः।
गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः॥ १७॥
तेषु शुद्धेषु दान्तेषु स्वदार परितोषिषु।
यत्करिष्यसि कल्याणं तत्ते लोकेषु धार्य्यते॥ १८॥
यथाग्निहोत्रं सुहुतं सायं प्रातर्द्विजातिना।
तदादत्तं द्विजातिभ्यो भवत्यथ यतात्मसु॥ १९॥
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः।
विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्त्तताम्॥ २०॥

द्वेग्लः । अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य कथ्यते ॥
द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं दानमुच्यते ॥
द्विहेतुत्व च· नाल्पत्वं वा बहुत्वं वा दानास्याभ्युदयावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धि क्षयकरे स्मृते ॥
षडधिष्ठानत्व च· धर्ममर्थं च कामं च व्रीडा हर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं त्यागबुद्ध्या यद् धर्मदानं तदुच्यते ॥
प्रयोजन मपेक्ष्यैव प्रसङ्गाद् यत प्रदीयते ।
'अनर्हेषु च रागेषु कामदानं तदुच्यते ॥
संसदि व्रीडया स्तुत्या चार्थोऽर्थिभ्यः प्रयाचितः ।
प्रदीयते च यद्दानं व्रीडादानमिति स्मृतम् ॥
दृष्ट्वाप्रियाणि श्रुत्वा वा हर्षवद्यत् प्रदीयते ।
हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तकाः ॥
आक्रोशनार्थं हिंस्राणां प्रतीकाराय यद्भवेत् ।
दीयते तापकर्तृभ्यो भयदानं तदुच्यते ॥
षडङ्गत्व च· दाता प्रतिगृहीता च श्रद्धा देयं च धर्म युक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥
दाता च· अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्या जीवकर्मा च षड्भिर्दाता प्रशस्यते ।
त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।
प्रतिगृहीतेति, सौमुख्याद्यभिसंप्रीतिरर्थिनां दर्शने सदा ॥
सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्त्यते ।
अनापराधमक्लेशं स्वयं तेनार्जितं धनम् ॥
स्वल्पं वा विपुलं वापि देयमित्यभिधीयते ।
यत्र यद्दुर्लभं भद्रं यस्मिन् कालेऽपि वा पुनः ॥
दानार्हौ देशकालौ तौ श्रेष्ठौ स्यातां न चान्यथा ।

अवस्था देशकालानां पात्रदात्रो श्च संपदा ॥
हीनं वापि भवेत् श्रेष्ठं श्रेष्ठं वा प्यन्यथा भवेत् ।
बृ विपाकत्व च- दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम्
षड्विपाकं समुद्दिष्टं षडेतानि विपाकतः ॥
नास्तिकस्तेनहिंस्रेभ्यो जाराय पतिताय च ।
पिशुनभ्रूणहन्तृभ्यः प्रदत्तं दुष्फलं भवेत् ॥
महदप्यफलं दानं परमप्यूनतां व्रजेत् ॥
यथोक्तमितिपद्दत्तं चित्तेन कलुषेण तु ।
तत्तु संकल्पदोषेण दानं तुल्यफलं भवेत् ॥
युक्ताङ्गैः सकलैः षड्भि र्दानं स्याद्विपुलोदयम् ।
अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत् ॥

---

## पात्रता ।

क्षान्तिः स्पृहा दया सत्यं दानं शीलं तपः श्रुतम् ।
एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥
महा· साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः ।
षड्भ्योनिवृत्तः कर्मभ्यस्तं पात्र मृषयो विदुः ॥
याज्ञवल्क्यः न विद्यया केवलया तपसा वापि पात्रता ।
षड्भ्यो निवृत्तः कर्मभ्य स्तं पात्र मृषयो विदुः ।
महा· अनु· २३ युधि उ. पित्र्यं वाप्यथ वा दैवं दीयते यत्पितामह ।
एतदिच्छाम्यहं ज्ञातुं दत्तं केषु महाफलम् ॥ ४९ ॥
भीष्म. उ· येषां दाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः ।
उच्छेष परिशेषं हि तान् भोजय युधिष्ठिर ॥ ५० ॥
चारित्रनिरता राजन् ये कृशाः कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ ५१ ॥

तद्भक्ता स्तद्गृहा राजंस्तद्धना स्तदपाश्रयाः।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ॥ ५२ ॥
तस्करेभ्यः परेभ्यो वा ये भयार्त्ता युधिष्ठिर।
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ॥ ५३ ॥
अकल्कस्य विप्रस्य रौक्षात् करकृतात्मना।
वटवो यस्य भिक्षन्ति तेषु दत्तं महाफलम् ॥ ५४ ॥
हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ॥ ५५ ॥
व्रतिनो नियमस्थाश्च ये विप्राः श्रुतसम्मताः।
तत्समाप्त्यर्थमिच्छन्ति तेभ्यो दत्तं महाफलम् ॥ ५६ ॥
अत्युत्क्रान्ता श्च धर्मेषु पाषंडसमयेषु च।
कृशप्राणाः कृशधनास्तेभ्यो दत्तं महाफलम् ॥ ५७ ॥
कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः।
स्पृहयन्ति च भुक्तान्नं तेभ्यो दत्तं महाफलम् ॥ ५८ ॥
तपस्विनस्तपोनिष्ठा स्तेषां भैक्षचराश्च ये।
अर्थिनः किञ्चिदिच्छन्ति तेषु दत्तं महाफलम् ॥ ५९ ॥

---

अनु २२ युधि०- कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम्।
कीदृशाना मभोक्तव्यं तन्मे ब्रूहि पितामह ॥ ३२ ॥
अक्रोधना धर्मपराः सत्यनित्या दमे रताः।
तादृशाः साधवो विप्रा स्तेभ्यो दत्तं महाफलम् ॥ ३३ ॥
अमानिनः सर्वसहा दृढार्था विजितेन्द्रियाः।
सर्वभूतहिता मैत्रा स्तेभ्यो दत्तं महाफलम् ॥ ३४ ॥
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः।
स्वकर्मनिरता ये च तेभ्यो दत्तं महाफलम् ॥ ३५ ॥

साङ्गांश्च चतुरो वेदानधीते यो द्विजर्षभः ।
षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥ ३६ ॥
ये त्वेवं गुणजातीयास्तेभ्यो दत्तं महाफलम् ।
सहस्रगुण माप्नोति गुणार्हाय प्रदायकः ॥ ३७ ॥
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत कुलं सर्व मेकोऽपीह द्विजर्षभः ॥ ३८ ॥
गामश्वं वित्तमन्न वा तद्विधे प्रतिपादयेत् ।
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ॥ ३९ ॥
तारयेत्तत्कुलं सर्वमेकोऽपीह द्विजोत्तमः ।
किमङ्ग पुनरेवैते तस्मात्पात्रं समाचरेत् ॥ ४० ॥
निशम्य च गुणोपेतं ब्राह्मणं साधुसम्मतम् ।
दूरादानीय सत्कृत्य सर्वतश्चापि पूजयेत् ॥ ४१ ॥

मनु ७. सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥ ८५ ॥
पात्रस्य हि विशेषेण श्रद्धानतयैव च ।
अल्पं वा बहु वा प्रेत्य दानस्यावाप्यतेफलम् ॥ ८६ ॥

अनु. २२. स्वाध्यायाढ्यं शुद्धयोनिं प्रशांतं
वैतानस्थं पापभीरुं बहुज्ञम् ।
गोषु क्षांतं नातितीक्ष्णं शरण्यं
वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ३७ ॥

अनु. ३०. अक्रोधः सत्य वचनं महिंसा तप आर्जवम् ।
अद्रोहो नाभिमानश्च ह्री स्तितिक्षा दमः शमः ॥ ८ ॥
यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत ।
स्वभावतो निविष्टानि तत्पात्रं मान मर्हति ॥ ९ ॥

---

## शमः ।

कठ. उप. नाऽविरतो दुश्चरिता न्नाऽशान्तो नाऽसमाहितः ।
नाऽशान्त मानसो वा ऽपि प्रज्ञानेनैव माप्नुयात् ॥

तैत्ति- आर. १. शम इत्यरण्ये मुनय स्तस्माच्छमेरमन्ते

तैत्ति- आर. १०. शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयो ऽन्वविन्दन् ञ्च्छमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति,-

---

## तुलाधारजाजलिसंवादम् ।

इति समु· युधि. उ. शमस्य तपसो वापि किन्नु श्रेष्ठतमः स्मृतः ।
शांन्ति. २६०.एतन्मे संशयं तात यथावद्वक्तुमर्हसि ॥ १ ॥
विविधा हि गतिः प्रोक्ता धर्मस्येहमनीषिभिः ।
—गश्रित्य शमस्तेषां परायणम् ॥ २ ॥
शमः पवित्रमतुलं शमः पुण्यमनुत्तमम्—
शमः सुखमसंख्येयं शमः पापहरं स्मृतम् ॥ ३ ॥
अत्रैवो दाहरन्तीममितिहासं पुरातनम् ।
तुलाधारस्य सम्वादं जाजलेश्च महात्मनः ॥ ४ ॥
पुरा हि सागरोपांते जाजलिर्नाम वै द्विजः ।
तपस्तेपे महाघोरं वायुभक्षः समाहितः ॥ ५ ॥
तस्य वर्षाण्यनेकानि स्थाणुभूतस्य तिष्ठतः ।
कलिंगौ शकुनावेत्य नीडं शिरसि चक्रतुः ॥ ६ ॥

शान्तो दयावान् ब्रह्मर्षिरुपपेदय तु दम्पती ।
ततस्तौ सुखविश्रब्धौ तत्राण्डानि विमुञ्चतुः ॥ ७ ॥
अंडेभ्योऽप्यथ पुष्टेभ्यो व्यजायंत शकुंतकाः ।
व्यवर्द्धताथ तत्रैव न चचाल स जाजलिः ॥ ८ ॥
कदाचि ज्जातपक्षास्ते समुत्पत्य विहंगमाः ।
नैवा जग्मुर्यदा राजं स्तदासौ प्रययौ द्विजः ॥ ९॥

अथ तत्र समाविष्टः प्रोवाच न मया समः ।
लोकेऽस्मिंस्तापसः कश्चित्ततः खे वाक्यमब्रवीत् ॥ १० ॥
वाराणस्यां निवसति तुलाधारो महामतिः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ ११ ॥
तच्छ्रुत्वा वचनं तस्य तुलाधारदिदृक्षया ।
अचिरेणैव कालेन प्राप्तो वाराणसीं पुरीम् ॥ १२ ॥
तत्रापश्यत् तुलाधारं विक्रीणंतं रसान्बहून् ।
तुलाधारोऽपि तं दृष्ट्वा प्रतिपूज्याब्रवीदिदम् ॥ १३ ॥
तुलाधारउ. अनाख्यातोऽपि विदितो मया त्वं द्विजसत्तम ।
यदिहागमने कार्यं तदप्यवगतं मया ॥ १४ ॥
तपतस्ते तपस्त्वि त्वं जातामूर्द्धनि शाकुन्तकाः ।
ततस्त्वां विस्मयाविष्टं खे वाक् प्रोवाच मां प्रति ॥ १५ ॥
तं श्रुत्वा च महर्षे त्वं मां दिदृक्षुरिहागतः ।
तद्वदाशु द्विजश्रेष्ठ प्रियं किं करवाणि ते ॥ १६ ॥
जाजलिउ. विक्रीणिते सर्वरसान् सर्वगन्धांश्च नित्यशः ।
कथं ते नैष्ठिको धर्मो विदितस्त्वं वदस्व मे ॥ १७ ॥
तुलाधारउ. न मेधीतानि शास्त्राणि नोपास्ता अपि त्वद्विधाः ।
पूर्वाभ्यासादहं विप्र धर्मः प्रादुरभून् मम ॥ १८ ॥
कर्मणा मनसा वाचा यन् नित्यं सेवते नरः ।
तदभ्यासो हरत्येषो माभूत्ते तत्र संशयः ॥ १९ ॥

यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः ।
सुखितानि सुखी चैव तं धर्मं वेद नैष्ठिकम् ॥ २० ॥
अद्रोहेणैव भूतानामल्पद्रोहेण वै पुनः ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥ २१ ॥
परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम् ।
तथैव मन्दिरं विष्णोः कृतं वित्तानुसारतः ॥ २२ ॥
अन्येषामपि देवानां ब्राह्मणानां गवांस्तथा ।
करोम्यनन्त्यनन्तशुश्रूषां पाखंडानामुपेक्षकः ॥ २३ ॥
यद्ददामि न तन् न्यूनं यद् गृह्णामि न चाधिकम् ।
विक्रीणामि रसांश्च हं मद्यवर्जममांसकम् ॥ २४ ॥
यः करोति जडान्धानां वणिक्कर्मणि वंचनम् ।
स याति नरके घोरे धनं तस्यापि हीयते ॥ २५ ॥
सर्वेषां च सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ २६ ॥
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव ।
वाङ्मनःकर्मपारुष्यैः स पापां गतिमाप्नुयात् ॥ २७ ॥
नाहं परेषां कर्माणि स्तौमि निन्दामि न द्विज ।
समोऽस्मि सर्व भूतानां पश्य मे जाजले व्रतम् ॥ २८ ॥
यथा पंग्वन्धबधिरा क्लीबमूकजडादयः ।
दैवेन पिहित द्वाराः सोपमा विषयेषु मे ॥ २९ ॥
यथा वृद्धातुरकृशा निःस्पृहा विषयान्प्रति ।
तथैव कामभोगेषु ममापि विगता स्पृहा ॥ ३० ॥
तुल्यौ मित्रारिपक्षौ मे तुल्यौ निन्दाप्रशंसने ।
तुल्यता सर्वभूतेषु मम तिष्ठति जाजले ॥ ३१ ॥
सर्वभूतात्मभूतस्य समं सर्वत्र पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ३२ ॥

यदा न कुरुते भावं सर्वभूतेषु पातकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३३ ॥
यः स्तौति यश्च मां द्वेष्टि तावुभावपि मे समौ ।
रागद्वेषविहीनस्य न च मे स्तः प्रियाप्रिये ॥ ३४ ॥
सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
सर्वं हि जाजले तीर्थं मा स्म ते संशयो भवेत् ॥ ३५ ॥
शम एव परंतीर्थं शम एव परं तपः ।
शम एव परं ज्ञानं शमो योगः परस्तथा ॥ ३६ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो ऽथ भिक्षुकः ।
सर्व एते शमेनैव प्राप्नुवन्ति परां गतिम् ॥ ३७ ॥
दानमिज्यातपः शौचं तीर्थं वेदा श्रुतं तथा ।
अशांतमनसः पुंसः सर्वमेतदनर्थकम् ॥ ३८ ॥
रागद्वेषानृतक्रोधलोभमोहमदादिभिः ।
सर्वदोषै विनिर्मुक्तो यः स शांत इति स्मृतः ॥ ३६ ॥
शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।
तस्मात्स सर्वशास्त्रज्ञो यस्य शान्तं मनः सदा ॥ ४० ॥
यच्छ्रुतं न विरागाय न धर्माय न शान्तये ।
संवद्धमपशब्देन काकवासितमेव तत् ॥ ४१ ॥

भीष्म उ॰ एतान् धर्मांस्तुलाधारः कथयित्वा तु जाजलेः ।
ततोऽस्य दर्शयामास समीपस्थान् शकुन्तकान् ॥ ४२ ॥

तुलाधार उ॰ एते शकुन्तका विप्र संभूता मूर्ध्नि ये तव ।
आह्वयैतान् द्विजश्रेष्ठ त्वमेषां धर्मतः पिता ॥ ४३ ॥
ततो जाजलिना ते तु समाहूताः शकुन्तकाः ।
वाचं प्रोचुस्ततो दिव्यां धर्मस्य वचनात् किल ॥ ४४ ॥

रक्षुनका ऊचुः । त्यज स्पर्द्धामिमां ब्रह्मन् विस्मयं परमं त्यज ।
शमे मनः समाधाय ततो ज्ञास्यसि तत् पदम् ॥ ४५ ॥
सुदुःखार्जितमेनत्ते तपः क्षरति विस्मयात् ।
तपसि क्षरिते चैव न प्राप्स्यसि परं पदम् ॥ ४६ ॥
विस्मयं त्वं परित्यज्य तपसः क्षयकारणम् ।
शमे मनः समाधाय ध्यानयोगपरो भव ॥
चीरवासी जटी वापि त्रिदंडी मुंड एव च ।
वृथा क्लिश्यति स ब्रह्मन् यस्य शांतं न मानसम् ॥ ४८ ॥
भूषितोऽपि परे द्धर्मं यत्र तत्राश्रमे रतः ।
शमः सर्वेषु भूतेषु न लिंगं धर्म कारणम् ॥ ४९ ॥
वनेऽपि दोषाः प्रभवंति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहं तपः ।
अकुत्सिते कर्मणि यः प्रवर्त्तते निवृत्तरागस्य गृहं तपोवनम् ॥५०॥
वयं स्नेहादिह प्राप्तास्तव धर्म विवक्षया ।
शान्तो भव त्यज स्पर्द्धामित्युक्त्वा ते ययुः खगाः ॥ ५१ ॥
एवं तै रनुशास्तोऽसौ तुलाधारेण वै द्विजः ।
शममास्थाय परमं जगाम परमां गतिम् ॥ ५२ ॥
[illegible]: शम उत्तमम् ।
तपस्वी स्वर्ग माप्नोति शांतात्मा ब्रह्मणः पदम् ॥
एतत्ते सर्व_माख्यातं मया तत्वेन भारत ।
शमे मनः समाधाय ध्यानयोगपरो भव ॥ ५४ ॥
य इदं शृणुयान् नित्यं पुण्य माख्यान मुत्तमम् ।
यः पठेत्प्रांजलिर्भूत्वा स गच्छेत्परमां गतिम् ॥ ५५ ॥

यदा न कुरुते भावं सर्वभूतेषु पातकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३३ ॥
यः स्तौति यश्च मां द्वेष्टि तावुभावपि मे समौ ।
रागद्वेषविहीनस्य न च मे स्तः प्रियाप्रिये ॥ ३४ ॥
सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
सर्वं हि जाजले तीर्थं मा स्म ते संशयो भवेत् ॥ ३५ ॥
शम एव परं तीर्थं शम एव परं तपः ।
शम एव परं ज्ञानं शमो योगः परस्तथा ॥ ३६ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो ऽथ भिक्षुकः ।
सर्व एते शमेनैव प्राप्नुवन्ति परां गतिम् ॥ ३७ ॥
दानमिज्यातपः शौचं तीर्थं वेदा श्रुतं तथा ।
अशांतमनसः पुंसः सर्वमेतदनर्थकम् ॥ ३८ ॥
रागद्वेषानृतक्रोधलोभमोहमदादिभिः ।
सर्वदोषै र्विनिर्मुक्तो यः स शांत इति स्मृतः ॥ ३९ ॥
शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।
तस्मात्स सर्वशास्त्रज्ञो यस्य शान्तं मनः सदा ॥ ४० ॥
यच्छ्रुतं न विरागाय न [illegible]
[illegible] नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ २३५ ॥
तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनो वचनकर्मभिः ॥ २३६ ॥
त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।
एष धर्मः परः साक्षादुपधर्मो ऽन्य उच्यते ॥ २३७ ॥

---

## पितृमातृशुश्रूषा ।

महा भा० शां० अ० १०८ युधिष्ठिर उवाच ।
महानयं धर्मपथो बहुशाखश्च भारत ।

किं स्विद्देवेह धर्माणामनुष्ठेयतमं मतम् ॥ १ ॥
किं कार्यं सर्वधर्माणां गरीयो भवतो मतम् ।
यथाहं परमं धर्ममिह च प्रेत्य चाप्नुयाम् ॥ २ ॥

भीष्म उवाच ।

मातापित्रोर्गुरूणाञ्च पूजा बहुमता मम ।
इह युक्तो नरो लोकान् यशश्च महदश्नुते ॥ ३ ॥
यच्चते ऽभ्यनुजानीयुः कर्म तात सुपूजिताः ।
धर्म्यं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥ ४ ॥
न तैरभ्यनुज्ञातो धर्ममन्यं समाचरेत् ।
यच्चते ऽभ्यनुजानीयुः स धर्म इति निश्चयः ॥ ५ ॥
त एव हि त्रयो लोका एत एवाश्रमास्त्रयः ।
एत एव त्रयो वेदा,एत एव त्रयोऽग्नयः ॥ ६ ॥
पिता वै गार्हपत्यो ऽग्निर्माताग्नि र्दक्षिणः स्मृतः ।
गुरुराहवनीयोऽग्निः साग्नित्रेता गरीयसी ।
त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकांश्च विजेष्यसि ॥ ७ ॥
पितृवृत्त्यात्विमं लोकं मातृवृत्त्या तथापरम् ।
ब्रह्मलोकं गुरोर्वृत्त्या नियमेन तरिष्यसि ॥ ८ ॥
सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत ।
यशः प्राप्स्यसि भद्रं ते धर्मञ्च सुमहत् फलम् ॥ ९ ॥
नैतानतिशयेज्जातु नात्यश्नीयान्नदूषयेत् ।
नित्यं परिचरेश्चैव तद्वै सुकृतमुत्तमम् ॥ १० ॥
कीर्तिं पुण्यं यशो लोकान् प्राप्स्यसे राजसत्तम ।
सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः ॥ ११ ॥
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ।
न चायं न परो लोकस्तस्य चैव परन्तप ॥ १२ ॥
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः ।
न चास्मिन् न परे लोके यशस्तस्य प्रकाशते ।
न चान्यदपि कल्याणं परत्र समुदाहृतम् ॥ १३ ॥
तेभ्य एव हि तत्सर्वं कृत्वा च विसृजाम्यहम् ।
तदासीन् मे शतगुणं सहस्रगुणमेव च ।

तस्मात् ते नमस्कारमन्ते त्रयो लोका युधिष्ठिर ॥ १४ ॥
दशेवतु महाचार्य श्रोत्रियानतिरिच्यते ।
दशाचार्यानुपाध्याय उपाध्यायान् पिताढश ॥ १५ ॥
पितृन् दश तु मातैका सर्वां वा पृथिवी नपि ।
गुरुत्वेनाभिभवति नास्ति मातृ समोगुरु ॥ १६ ॥

---

## गुरुशुश्रूषा ।

गुरुर्गरीयान्पितृतो मातृतश्चेति मे मति ।
उभौ हि मातापितरौ जन्मन्येवोपयुञ्जत ॥ १७ ॥
शरीरमेव सृजत पिता माता च भारत ।
आचार्यशिष्टा जाति सा दिव्या सा ह्यजराऽमरा ॥ १८ ॥
अवध्या हि सदा माता पिता चाप्यपकारिणौ ।
न सदुष्यति तत् कृत्वा न चैते दूषयन्ति तम् ।
धर्माय यतमानाना विदु देवा महर्षिभि ॥ १९ ॥
य आवृणोत्यवितथेन कर्णया वृत ब्रुवन्नमृत सम्प्रयच्छन् ।
त वै मन्येत पितर मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् ॥२०॥
विद्या श्रुत्वा ये गुरु नाद्रियन्ते प्रत्यासन्ना मनसा कर्मणा वा ।
तेषा पाप भ्रूणहत्याविशिष्ट नान्यस्तेभ्य पापकृदस्ति लोके ॥२१॥
यथैवते गुरुभि भावनीया स्तथातेषा गुरवोप्यर्चनीया ॥
तस्मात्पूजयितव्याश्च सविभाज्याश्च यत्नत ।
गुरवोऽर्चयितव्याश्च पुराण धर्ममिच्छता ॥ २२ ॥
येन प्रीणाति पितर तेन प्रीत प्रजापति ।
प्रीणाति मातर येन पृथिवीतेन पूजिता ॥ २३ ॥
येन प्रीणात्युपाध्याय तेन स्याद् ब्रह्मपूजितम् ।
मातृत पितृतश्चैव तस्मात्पूज्यतमो गुरु ॥ २४ ॥
ऋषयश्च हि देवाश्च प्रीयन्ते पितृभि सह ।
पूज्यमानेषु गुरुषु तस्मात्पूज्यतमो गुरु ॥ २५ ॥
केनचिच्च च वृत्तेन ह्यवज्ञेयो गुरुर्भवन् ।
नच माता नच पिता मन्यते यादृशो गुरु ॥ २६ ॥
नतेऽवमानमर्हन्ति नतेषा दूषयेत्कृतम् ।

गुरूणामेव सत्कारं विदुर्देवा महर्षिभिः ॥ २७ ॥
उपाध्यायं पितरं मातरं च येऽभिद्रुह्यन्ते मनसा कर्मणा वा ।
तेषांपापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्तिलोके ॥ २८ ॥
भृतो वृद्धो यो न विभर्ति पुत्रः स्वयोनिजः पितरं मातरंच ।
तद्वै पापं भ्रूणहत्या विशिष्टं तस्मान्नान्यः पापकृदस्ति लोके ॥२९॥
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः ।
चतुर्णां वयमेतेषां निष्कृतिंनानुशुश्रुमः ॥ ३० ॥
एतत् सर्वमनिर्देशे नैवमुक्तं यत्कर्तव्यं पुरुषेणेह लोके ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं सर्वान् धर्माननुसृत्यैतदुक्तम् ॥३१॥

---

## विमृश्य कारिता ।

### चिरकारिकोपाख्यानम् ।

शान्ति२।६६ युधिष्ठिर उवाच ।
कथं कार्यं परीक्षेत शीघ्रं वाथ चिरेणवा ।
सर्वथा कार्यदुर्गेऽस्मिन् भवान्नः परमो गुरुः ॥ १ ॥
भीष्म उवाच ।
अत्राप्युदा हरन्ती ममितिहासं पुरातनं ॥
चिरकारेस्तु यत्पूर्वं वृत्तमांगिरसे कुले ॥ २ ॥
चिरकारिक भद्रं ते भद्रन्ते चिरकारिक ।
चिरकारीहि मेधावी नापराध्यति कर्मसु ॥ ३ ॥
चिरकारी महाप्राज्ञो गौतमस्या भवत्सुतः ।
चिरेण सर्वकार्याणि विमृश्यार्थान् प्रपद्यते ॥ ४ ॥
चिरं सञ्चिन्तयन्नर्थां श्चिरं जाग्रत् चिरं स्वपन् ।
चिरं कार्याभिपत्तिश्च चिरकारी तथोच्यते ॥ ५ ॥
अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते ।
बुद्धिलाघवयुक्तेन जनेनादीर्घ दर्शिना ॥ ६ ॥
व्यभिचारे तु कस्मिंश्चित् व्यतिक्रम्य परान् सुतान् ।
पित्रोक्तः कुपिते नाथ जहीमां जननी मिति ॥ ७ ॥
सतथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः ।

विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ॥ ८ ॥
पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम्।
कथं धर्मच्छलेनास्मिन्निमज्जेय मसाधुवत्॥ ९ ॥
पितुराज्ञा परोधर्मः स्वधर्मो मातृरक्षणम्।
अस्वतंत्रं च पुत्रत्वं किन्नु मां नानुपीड़येत् ॥ १० ॥
स्त्रियं हत्वा मातरञ्च को हि जातु सुखी भवेत्।
पितरञ्चाप्यवज्ञाय कः प्रतिष्ठाम वाप्नुयात् ॥ ११ ॥
अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणं।
युक्तक्षमा वुभावेतौ नातिवर्त्तेत मां कथम् ॥ १२ ॥
पिताह्यात्मान माधत्ते जायायां जज्ञिवानिति।
शील चारित्रगोत्रस्य धारणार्थं कुलस्यच ॥ १३ ॥
सोऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः।
विज्ञानं मे कथं न स्यात् द्वौ बुध्ये चात्मसंभवम् ॥ १४ ॥
जात कर्मणि यत्प्राह पिता यच्चोप कर्मणि।
पर्याप्तः सदृढ़ीकारः पितुर्गौरवनिश्चये ॥ १५ ॥
गुरुरग्र्यः परोधर्मः पोषणा ध्यापनान्वितः।
पिता यदाह धर्मः स वेदेष्वपि सुनिश्चितः ॥ १६ ॥
प्रीतिमात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता।
शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ १७ ॥
तस्मात्पितुर्वचः कार्यं न विचार्यं कथञ्चन।
पातका न्यपि पूयन्ते पितुः शासन कारिणः ॥ १८ ॥
भोग्ये भोज्ये प्रवचने सर्वलोक निदर्शने।
भर्त्रा चैव समायोगे सीमन्तोन्नयने तथा ॥ १९ ॥
पिता धर्मः पिता स्वर्गः पिताहि परमन्तपः।
पितरि प्रीति मापन्ने सर्वाः प्रीयन्ति देवताः ॥ २० ॥
आशिषस्ता भजन्त्येनं पुरुषं प्राह यत्पिता।
निष्कृतिः सर्व पापानां पिता यच्चाभिनन्दति ॥ २१ ॥
मुच्यते वन्धनात्पुष्पं फलं वृन्तात्प्रमुच्यते।
क्लिश्यन्नपि सुतं स्नेहैः पिता पुत्रं न मुञ्चति ॥ २२ ॥

एतद्विचिन्तित तावत्पुत्रस्य पितृ गौरवम् ।
पिता नाल्पतरं स्थान चिन्तयिष्यामि मातरम् ॥ २३ ।
यो ह्यय मयि सघातो मर्त्यत्वे पाञ्चभौतिक ।
अस्य मे जननी हेतु पावकस्य यथारणि ॥ २४ ॥
माता देहारणि पुसा सर्वस्यार्तस्य निर्वृति ।
मातृ लाभे सनाथत्व अनाथत्व विपर्यये ॥ २५ ॥
श्रिया हीनोऽपि यो गेहमम्बेति प्रतिपद्यते ॥ २६ ।
पुत्रपौत्रोपपन्नोऽपि जननीं य समाश्रित ।
अपि वर्षशतस्यान्ते स द्विहायन वच्चरेत् ॥ २७ ॥
समर्थं वासमर्थं वा कृश वाप्यकृश तथा ।
रक्षत्येव सुत माता नान्य पोष्टा विधानत ॥ २८ ॥
तदा सवृद्धो भवति तदा भवति दु खित ।
तदा शून्य जगत्तस्य यदा मात्रा वियुज्यते ॥ २९ ॥
नास्ति मातृ समा छाया नास्ति मातृ समागति ।
नास्ति मातृ सम त्राण नास्ति मातृ समा प्रिया । ३० ॥
कुक्षि सधारणाद्धात्री जननाज्जननी स्मृता ।
अगाना वर्द्धनादम्बा वीर सूत्वेन वीरसू ॥ ३१ ॥
शिशो शुश्रूषणाच्छु श्रू माता देह मनन्तरम् ।
चेतना वाम्नरो हन्याद्यस्य ना शुषिर शिर ॥ ३२ ॥
माता जानाति यद्गोन माता जानाति यस्य स ।
मातुर्मरणमात्रेण प्रीति स्नेह पितु प्रजा ॥ ३३ ॥
देवताना समावाय मेकस्थ पितर विदु ।
मर्त्याना देवतानाञ्च स्नेहादभ्येति मातरम् ॥ ३४ ॥
एव विमृशतस्तस्य चिरकारितया बहु ।
दीर्घ कालो व्यतिक्रान्त स्ततोऽस्याभ्यागमत्पिता ॥ ३५ ॥
मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थित ।
विमृश्य तेन कालेन पत्न्या सस्था व्यतिक्रमम् ॥ ३६ ॥
सोऽब्रवीद्दुभृशसन्तप्तो दु खेनाश्रूणि वर्तयन् ।
श्रुतधैर्य प्रसादेन पश्चात्ताप मुपागत ॥ ३७ ॥

ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्व रेतसः ।
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृत सागरे ॥ ३८ ॥
हत्वा साध्वीञ्च नारीञ्च व्यसनित्वाच्चवाचिताम् ।
भर्त्तव्यत्वेन भार्य्याञ्च कोनु मां तारयिष्यति ॥ ३९ ॥
अन्तरेण मयाज्ञप्तश्चिर कारीत्युदारधीः ।
यद्यद्य चिरकारी स्यात्स मां त्रायेत पातकात् ॥ ४० ॥
चिरकारिक भद्रन्ते भद्रन्ते चिरकारिक ।
यद्यद्य चिरकारीत्वं ततोऽसि चिरकारिकः ॥ ४१ ॥
त्राहि मां मातरंचैव तपो यच्चार्जितं मया ।
आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः ॥ ४२ ॥
सहजं चिरकारित्वं मतिप्रज्ञतया तव ।
सफलं तत्तथा तेऽस्तु भवाद्य चिरकारिकः ॥ ४३ ॥
चिरमाशंसितो मात्रा चिरं धर्मेण धारितः ।
सफलं चिरकारित्वं कुरुत्वं चिरकारिक ॥ ४४ ॥
एवं सुदुःखितो राजन् महर्षिर्गौतमस्तदा ।
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ॥ ४५ ॥
चिरकारी तु पितरं दृष्ट्वा परम दुःखितः ।
शस्त्रं त्यक्त्वा ततो मूर्ध्ना प्रसादायोपचक्रमे ॥ ४६ ॥
गौतम स्तं ततो दृष्ट्वा शिरसा पतितं भुवि ।
पत्नीञ्चैव निराकारां परामभ्यागमन् मुदम् ॥ ४७ ॥
नहि सा तेन सम्भेदं पत्नी नीता महात्मना ।
विजने चाश्रमस्थेन पुत्रश्चापि समाहितः ॥ ४८ ॥
हन्या इति समादेशः शस्त्रपाणौ सुते स्थिते ।
विनीते प्रसवत्यर्थे विवासे चात्मकर्मसु ॥ ४९ ॥
बुद्धिरासीत्सुतं दृष्ट्वा पितुश्चरणयोर्नतम् ।
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ ५० ॥
ततः पित्रा चिरं स्तुत्वाचिरञ्चाघ्राय मूर्द्धनि ।
चिरंदोर्भ्यां परिष्वज्यचिरं जीवेत्युदाहृतः ॥ ५१ ॥
एवं सगौतमःपुत्र प्रीतिहर्षगुणैर्युतः ।

अभिनंद्य महाप्राज्ञ इदं वचनमब्रवीत् ॥ ५२ ॥
चिरकारिक भद्रं ते चिरकारी चिरं भव ।
चिराय यदि ते सौम्य चिरमस्मि न दुःखितः ॥ ५३ ॥
गाथाश्चाप्य ब्रवीद्विद्वान् गौतमो मुनिसत्तमः ।
चिरकारिषु धीरेषु गुणोद्देश समाश्रयाः ॥ ५४ ॥
चिरेण मित्रं बध्नीयात् चिरेण च कृतं त्यजेत् ।
धीरेण हि कृतं मित्रं चिरं धारणमर्हति ॥ ५५ ॥
रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्त्तव्ये चिरकारी प्रशस्यते ॥ ५६ ॥
बन्धूनां सुहृदाञ्चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ५७ ॥
एवं स गौतमस्तत्र प्रीतः पुत्रस्य भारत ।
कर्मणानेन कौरव्य चिरकारितया तथा ॥ ५८ ॥
एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः ।
चिरेण निश्चयं कृत्वा चिरं न परितप्यते ॥ ५९ ॥
चिरं धारयते रोषं चिरं कर्म नियच्छति ।
पश्चात्तापकरं कर्म न किञ्चिदुपपद्यते ॥ ६० ॥
चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत् ।
चिरं धर्मं निषेवेत कुर्याच्चान्वेषणं चिरम् ॥ ६१ ॥
चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च ।
चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम् ॥ ६२ ॥
ब्रुवतश्च परस्यापि वाक्यं धर्मोप संहितम् ।
चिरं पृष्टोऽपि च ब्रूयाच्चिरं न परितप्यते ॥ ६३ ॥
उपास्य बहुला स्तस्मिन्नाश्रमे सुमहातपाः ।
उभाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा ॥ ६४ ॥

---

## शीलम् ॥

युधिष्ठिर उवाच ।

महाभा॰ शां॰ अ॰ १२४

इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ १ ॥

यदि तच्छक्य मस्माभि र्ज्ञातुं धर्मभृतां वर !।
श्रोतु मिच्छामि तत् सर्वं यथैतदुपलभ्यते ॥ २ ॥
कथं तत् प्राप्यते शीलं श्रोतुमिच्छामि भारत !।
किं लक्षणञ्च तत् प्रोक्तं ब्रूहि मे वदतां वर ॥ ३ ॥

भीष्म उ० पुरा दुर्योधनेनेह धृतराष्ट्राय मानद !।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागतम् ॥ ४ ॥
इन्द्रप्रस्थे महाराज ! तव सभ्रातृकस्य ह ।
सभायाञ्चावहसनं तत् सर्वं शृणु भारत ! ॥ ५ ॥
भवत स्तां सभां दृष्ट्वा समृद्धिं चाप्य ऽनुत्तमाम् ।
दुर्योधन स्तदासीनः सर्वं पित्रे न्यवेदयत् ॥ ६ ॥
श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवच स्तदा ।
अब्रवीत् कर्णसहितं दुर्योधन मिदं वचः ॥ ७ ॥

धृ०रा० उ० किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वा त्वाम ऽनुनेष्यामि यदि सम्यग् भविष्यति ॥ ८ ॥
त्वया च महदैश्वर्यं प्राप्तं परपुरञ्जय ।
किङ्करा भ्रातरः सर्वे मित्रसम्बन्धिनः सदा ॥ ९ ॥
आच्छादयसि प्रावारा नश्नासि पिशितौदनम् ।
आजानेया वहन्त्यश्वाः केनाऽसि हरिणः कृशः ॥ १० ॥

दुर्यो० उ० दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुङ्क्ते रुक्मपात्रीभि र्युधिष्ठिर निवेशने ॥ ११ ॥
दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ॥
अश्वांस्तित्तिरिकल्माषान् वस्त्राणि विविधानि च ॥ १२ ॥
दृष्ट्वा तां पाण्डवेयानां ऋद्धिं वैश्रवणीं शुभाम् ।
अमित्राणां सुमहतीं मनुशोचामि भारत ॥ १३ ॥

धृ०रा० उ० यदीच्छसि श्रियं तात यादृशी सा युधिष्ठिरे।
विशिष्टां वा नरव्याघ्र शीलवान् भव पुत्रक ॥ १४ ॥

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
नहि किञ्चिदसाध्यं वै लोके शीलवतां भवेत् ॥ १५ ॥
एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिरे ॥ १६ ॥
एते हि पार्थिवाः सर्वे शीलवन्तो दयान्विताः ।
अत स्तेषां गुणक्रीता वसुधा स्वयमागता ॥ १७ ॥

दुर्यो० उ० कथं तत् प्राप्यते शीलं श्रोतुमिच्छामि भारत ! ।
येन शीलेन तैः प्राप्ता क्षिप्रमेव वसुन्धरा ॥ १८ ॥

धृ०रा० उ० अत्राप्युदाहरन्तीम मितिहासं पुरातनम् ।
नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत ! ॥ १९ ॥
प्रह्लादेनहृतं राज्यं महेन्द्रस्य महात्मनः ।
शीलमाश्रित्य दैत्येन त्रैलोक्यञ्च वशीकृतम् ॥ २० ॥
ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।
तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥ २१ ॥
ततो बृहस्पति स्तस्मै ज्ञानं नै श्रेयसं परम् ।
कथयामास भगवान् देवेन्द्राय कुरूद्वह ॥ २२ ॥
एतावच्छ्रे य इत्येव बृहस्पति रभाषत ।
इन्द्रस्तु भूयः पप्रच्छ क्को विशेषो भवेदिति ॥ २३ ॥

बृहस्प० उ० विशेषो ऽस्ति महा स्तात भार्गवस्य महात्मनः ।
अत्रागमय भद्रन्ते भूय एव सुरर्षभ ! ॥ २४ ॥
आत्मन स्तु ततः श्रेयो भार्गवात् सुमहातपाः ।
ज्ञान मागमयत् प्रीत्या पुनः स परमद्युतिः ॥ २५ ॥
तेनापि स मनुज्ञातो भार्गवेण महात्मना ।
श्रेयो ऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ॥ २६ ॥
भार्गव स्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेण त्युक्तो हृष्ट इचसोऽ भवत् ॥ २७ ॥
स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।

गत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ २८ ॥
प्रह्लादस्त्व ब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ ! ।
त्रैलोक्य राज्यसक्तस्य ततो नोपदिशामि ते ॥२९॥
ब्राह्मणस्त्व ब्रवीद्राजन् यस्मिन् काले क्षणो भवेत् ।
तदोपदेष्टु मिच्छामि यदाचर्य्यम ऽनुत्तमम् ॥ ३० ॥
ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः ।
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ॥ ३१ ॥
ब्राह्मणोऽपि यथान्यायं गुरुवृत्ति मनुत्तमाम् ।
चकार सर्वभावेन यदस्य मनसेप्सितम् ॥ ३२ ॥
पृष्टश्च तेन बहुशः प्राप्तं कथमरिन्दम ।
त्रैलोक्य राज्यं धर्मज्ञ कारणं तद् ब्रवीहि मे ।
प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् ॥ ३३ ॥
प्रह्लाद उ० नासूयामि द्विजान् विप्र राजास्मीति कदाचन ।
काव्यानि वदतां तेषां संयच्छामि वहामि च ॥ ३४ ॥
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
ते मां काव्यपथे युक्तं शुश्रूषु मनसूयकम् ॥ ३५ ॥
धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिंचन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ३६ ॥
सोऽहं वागग्रविद्यानां रसानामवलेहिता ।
स्वजात्या नधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३७ ॥
एतत् पृथिव्याममृत मेतच्चक्षु रनुत्तमम् ।
यद् ब्राह्मणमुखे काव्य मेतच्छ्रुत्वा प्रवर्तते ॥ ३८ ॥
एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३९ ॥
यथावद् गुरु वृत्याते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रन्ते प्रदातास्मि न संशयः ॥ ४० ॥
कृतमित्येव दैत्येन्द्र मुवाच स च वै द्विजः ।
प्रह्लादस्त्वब्रवीत् प्रीतो गृह्यतां वर इत्युत ॥ ४१ ॥

ब्राह्मण उ० यदि राजन् प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४२ ॥
ततः प्रीतस्तु दैत्येन्द्रो भयमस्याऽभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पतेजा ऽयमित्युत ॥ ४३ ॥
एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितो ऽभवत् ॥ ४४ ॥
दत्ते वरे गते विप्रे चिन्तासीन्महती तदा ।
प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥ ४५ ॥
तस्य चिन्तयतस्तावच्छाया भूतं महाद्युति ।
तेजो विग्रहवत्तात शरीरम् ऽजहात्तदा ॥ ४६ ॥
तमपृच्छन्महाकायं प्रह्लादः को भवानिति ।
प्रत्याह तन्तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ४७ ॥
तस्मिन् द्विजोत्तमे राजन् वत्स्याम्यहमनिन्दिते ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ।
इत्युक्त्वा ऽन्तर्हितं तद्वै शक्रञ्चान्वाविशत्प्रभो ॥ ४८ ॥
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततो ऽपरः ।
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ॥ ४९ ॥
धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥ ५० ॥
ततो ऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ॥ ५१ ॥
को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ॥ ५२ ॥
तस्मिन्ननुगते धर्मं महान् वै पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात् पृष्टश्चाह महाबलः ।
वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ॥ ५३ ॥
तस्मिन् गते महाशब्दः शरीरात्तस्य निर्ययौ ।
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ॥ ५४ ॥

इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप।
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ॥ ५५॥
तामपृच्छत् स दैत्येन्द्रः सा श्रीरित्येन मब्रवीत्।
उषितास्मिस्त्वयं वीर त्वयि सत्यपराक्रम।
त्वया त्यक्ता गमिष्यामि बलं ह्यनुगता ह्यहम्॥ ५६॥
ततो भयं प्रादुरासीत् प्रह्लादस्य महात्मनः।
अपृच्छत् स ततो भूयः क्व यासि कमलालये॥ ५७॥
त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी।
कश्चासौ ब्राह्मणश्रेष्ठ स्तत् त्वामिच्छामि वेदितुम्॥ ५८॥

श्रीरुवाच स शक्रो ब्रह्मचारी य स्त्वत्त श्चैवोपशिक्षित।
त्रैलोक्ये ते यदैश्वर्य्यं तत्तेनापहृतं प्रभो॥ ५९॥
शीलेन हि त्रयो लोका स्त्वया धर्मज्ञ निर्ज्जिताः।
तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो॥ ६०॥
धर्मः सत्यं तथा वृत्तं बलञ्चैव तथाप्यहम्।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः॥ ६१॥

भीष्म उ० एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर।
दुर्योधनस्तु पितरं भूय एवा ऽब्रवीद्वचः॥ ६२॥
शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन।
प्राप्यते च यथा शीलं तञ्चोपायं वदस्व मे॥ ६३॥

धृ०रा० उ० सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना।
संक्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर॥ ६४॥
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानञ्च शीलमेतत् प्रशस्यते॥ ६५॥
यदन्येषां हितं न स्यात् आत्मनः कर्म पौरुषम्।
अपत्रपेत वा येन न तत्कुर्यात् कथञ्चन॥ ६६॥
तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि।

शीलं समासेनैतत्ते कथितं कुरुसत्तम ॥ ६७ ॥
यद्यप्यऽशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् ।
न भुञ्जते चिरं तात समूलाश्च न सन्ति ते ॥ ६८ ॥
धृ॰रा॰ उ॰ एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक ।
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ॥ ६९ ॥
भीष्म उ॰ एतत् कथितवान् पुत्रे धृतराष्ट्रो नराधिपः ।
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत् फलम् ॥ ७० ॥

---

## सन्तोषः ।

मनुः अ॰ ४ सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् ।
सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ १२ ॥
सन्तुष्टः को न शक्नोति फलमूलैश्च वर्त्तितुम् ।
सर्वोऽपीन्द्रियलौल्येन संकटान्य वगाहते ॥
सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढ़ पादस्य ननु चर्मावृतेव भूः ॥
यत् पृथिव्यां व्रीहि यवं हिरण्यं पशवः स्त्रियः ।
नाल मेकस्य तत् सर्व मिति मत्वा शमं व्रजेत् ॥
सन्तोषा मृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धन लुब्धानां मितश्चेतश्च धावताम् ॥
कामं कामयमानस्य यदि कामः प्रसिद्ध्यति ।
तथैव परमं कामं भूयो विन्दति मानवः ॥
कामाभिलाषान् मोहाच्च न नरः सुखमेधते ।
श्येनालय तरुच्छायां व्रजन्निव कपिञ्जलः ॥
शान्ति॰ सन्तोषो वै स्वर्गतमः सन्तोषः परमं सुखम् ।
अ॰ २१- तुष्टे नं किञ्चित्परतः सा सम्यक् प्रतितिष्ठति ॥ २ ॥
वन॰ अ॰ ३- असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखम् ॥

तस्मात्सन्तोष मेवेह परं पश्यन्ति पण्डिताः ॥ ४५ ॥

भाग० स्कं० संतुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम् ।
७-अ० १५ कुत स्तत्कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥
सदा संतुष्टमनसः सर्वाः सुखमया दिशः ।
शर्करा कण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ १७ ॥
संतुष्टः केन वा राजन्न वर्तेतापि वारिणा ।
औपस्थ्यजैह्व्य कार्पण्याद्गृहपालायते जनः ॥ १८ ॥
असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः ॥
स्रवतीन्द्रिय लौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥

---

## कीदृशे वसते श्रीः ।

शक्र उवाच का त्वं केन च कार्येण संप्राप्ता चारुहासिनी ।
महाभा० शां० अ० २२८ कुत श्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ॥ १८ ॥
श्रीरुवाच पुण्येषु त्रिषुलोकेषु सर्वे स्थावरजङ्गमाः ।
ममात्म भावमिच्छन्तो यतन्ते परमात्मना ॥ १९ ॥
साहं वै पङ्कजे जाता सूर्य रश्मि विबोधिते ।
भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ॥ २० ॥
अहं लक्ष्मीरहं भूतिः श्री श्चाहं बलसूदन ।
अहं श्रद्धाच मेधाच सन्नति र्विजितिः स्थितिः ॥ २१ ॥
अहं धृतिरहं सिद्धिरहं तद्भूति रेवच ।
अहं स्वाहा स्वधा चैव सन्नतिर्नियतिः स्मृतिः ॥ २२ ॥
राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु च ।
निवासे धर्मशीलानां विषयेषु पुरेषु च ॥ २३ ॥
जितकाशिनि शूरे च संग्रामेष्व निवर्तिनि ।
निवसामि मनुष्येन्द्रे सदैव बलसूदन ॥ २४ ॥
धर्मे नित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।

प्रश्रिते दान शीले च सदैव नियसाम्यहम् ॥ २५ ॥
असुरेष्ववसं पूर्वं सत्य धर्मनिबन्धना ।
विपरीतांस्तु तान् बुध्वा त्वयि वास मरोचयम् ॥ २६ ॥
शक्र उवाच कथं वृत्तेषु दैत्येषु त्वम ऽवात्सीो वरानने ।
दृष्ट्वा च किमिहागा स्त्वं हित्वा दैतेय दानवान् ॥ २७ ॥
श्री उवाच स्वधर्ममनुतिष्ठत्सु धैर्यादचलितेषु च ।
स्वर्गमार्गा भिरामेषु सत्वेषु निरताह्यहम् ॥ २८ ॥
दानाध्ययन यज्ञेज्या पितृदैवत पूजनम् ।
गुरूणामतिथीनां च तेषां नित्य मवर्तत ॥ २९ ॥
सुसंमृष्ट गृहाश्चा सन् जितस्त्रीका हुताग्नयः ।
गुरु शुश्रूषका दान्ता ब्रह्मण्याः सत्यवादिनः ॥ ३० ॥
श्रद्दधाना जितक्रोधा दानशीला ऽनसूयवः ।
भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्षवः ॥ ३१ ॥
अमर्षेण न चान्योऽन्यं स्पृहयन्ते कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ ३२ ॥
दातारः संग्रहीतार आर्याः करुणवेदिनः ।
महाप्रसादा ऋजवो दृढ़भक्ता जितेन्द्रियाः ॥ ३३ ॥
सन्तुष्ट भृत्यसचिवाः कृतज्ञाः प्रियवादिनः ।
यथार्हं मानार्थ करा ह्रीनिषेवा यतव्रताः ॥ ३४ ॥
नित्यं पर्वसु सुस्नाता. स्वनुलिप्ताः स्वलंकृता. ।
उपवासतपः शीलाः प्रतीता ब्रह्मवादिनः ॥ ३५ ॥
नैतानभ्युदियात् सूर्यो न चाप्यासन्प्रगेशयाः ।
रात्रौ दधि च सक्तूंश्च नित्यमेव व्यवर्जयन् ॥ ३६ ॥
कल्यं घृतं चान्ववेक्षन् प्रयता ब्रह्मवादिनः ।
मङ्गल्यान्यपि चापश्यन् ब्राह्मणांश्चाप्यपूजयन् ॥ ३७ ॥
सदाहि वदतां धर्मं सदा चाप्रति गृह्णताम् ।
अर्द्धं च रात्र्याः स्वपतां दिवा चास्वपतां तथा ॥ ३८ ॥

कृपणाऽनाथवृद्धानां दुर्बलाऽऽतुरयोषिताम् ।
दयां च संविभागं च नित्यमेवानुमोदताम् ॥ ३९ ॥
त्रस्तं विषण्णमुद्विग्नं भयार्तं व्याधितं कृशम् ।
हृतस्वं व्यसनार्तं च नित्यमाश्वासयन्ति ते ॥ ४० ॥
धर्ममेवान्ववर्तन्त न हिंसन्ति परस्परम् ।
अनुकूलाश्च कार्येषु गुरुवृद्धोपसेविनः ॥ ४१ ॥
पितॄन् देवाऽतिथींश्चैव यथावत् तेऽभ्यपूजयन् ।
अवशेषाणि चाश्नन्ति नित्यं सत्यतपोधृताः ॥ ४२ ॥
नैके ऽश्नन्ति सुसंपन्नं नागच्छन्त परस्त्रियम् ।
सर्वभूतेष्ववर्तन्त यथात्मनि दयां प्रति ॥ ४३ ॥
नैवाकाशे न पशुषु वियोनौ न च पर्वसु ।
इन्द्रियस्य विसर्गं ते रोचयन्ति कदाचन ॥ ४४ ॥
नित्यं दानं तथा दाक्ष्यमार्जवं चैव नित्यदा ।
उत्साहोऽथानहंकारः परमं सौहृदं क्षमा ॥ ४५ ॥
सत्यं दानं तपः शौचं कारुण्यं वागनिष्ठुरा ।
मित्रेषु चानभिद्रोहः सर्वं तेष्वभवत् प्रभो ॥ ४६ ॥
निद्रा तन्द्री रसं प्रीति रसूयायां नवेक्षिता ।
अरतिश्च विषादश्च स्पृहा चाप्यऽविशञ्च तान् ॥ ४७ ॥
साहमेवं गुणेष्वेव दानवेष्वऽवसं पुरा ।
प्रजासर्गमुपादाय नैकं युगविपर्ययम् ॥ ४८ ॥
ततः कालविपर्यासे तेषां गुणविपर्ययात् ।
अपश्यं निर्गतं धर्मं कामक्रोधवशात्मनाम् ॥ ४९ ॥
सभासदां च वृद्धानां सतां कथयतां कथाः ।
प्राहसन्नभ्यसूयंश्च सर्वे वृद्धान् गुणावराः ॥ ५० ॥
युवानश्च समासीना वृद्धानभिगतान् सतः ।
नाभ्युत्थानाभिवादाभ्यां यथा पूर्वमपूजयन् ॥ ५१ ॥
वर्तन्त्येव पितरि पुत्रः प्रभवते तदा ।
अभृत्या भृत्यतां प्राप्य ख्यापयन्त्यनपत्रपाः ॥ ५१ ॥
यथा धर्मादपेतेन कर्मणा गर्हितेन ये ।

महतः प्राप्नुवन्त्यर्थान् तेषां तत्राभवत् स्पृहा ॥ ५२ ॥
उच्चैश्चाभ्यवदन् रात्रौ नीचैस्तत्राग्निरज्वलत् ।
पुत्राः पितॄनत्यचरन् नार्यश्चात्यचरन् पतीन् ॥ ५३ ॥
मातरं पितरं वृद्ध माचार्य मतिथिं गुरुम् ।
गुरुत्वान्ना भ्यनन्दन्त कुमाराश्चान्वपालयन् ॥ ५४ ॥
भिक्षां बलिमदत्वाच स्वयमन्नानि भुंजते ।
अनिष्ट्वा संविभज्याथ पितॄन् देवातिथीन् गुरून् ॥ ५५ ॥
न शौच मन्वरुध्यन्त तेषां सूदजनास्तथा ।
मनसा कर्मणा वाचा भक्ष्य मासीदनावृतम् ॥ ५६ ॥
विप्रकीर्णानि धान्यानि काक मूषिक भोजनम् ।
अपावृतं पयो तिष्ठ दुच्छिष्टाश्चास्पृशन् घृतम् ॥ ५७ ॥
कुद्दालं दात्रपिटकं प्रकीर्णं कांस्यभोजनम् ।
द्रव्यो पकरणं सर्वं नान्ववैक्षत् कुटिम्बिनी ॥ ५८ ॥
प्राकारागार विध्वंसान्न स्म ते प्रतिकुर्वते ।
नाद्रियन्ते पशून् बध्वा यवसेनोदकेन च ॥ ५९ ॥
बालानां प्रेक्ष्यमाणानां स्वयं भक्ष्या मभक्षयन् ।
तथा भृत्यजनं सर्वं मर्सतर्प्य च दानवाः ॥ ६० ॥
पायसं कृशरं मांस मपूपानथ शष्कुलीः ।
अपाचयन्नात्मनोऽर्थे वृथा मासान्यभक्षयन् ॥ ६१ ॥
उत्सूर्यशायिन श्चासन् सर्वे चासन् प्रगे निशाः ।
अवर्तन् कलहाश्चात्र दिवा रात्रं गृहे गृहे ॥ ६२ ॥
अनार्या श्चार्यमासीनं पर्युपासन्न तत्र ह ।
आश्रमस्थान् विधर्मस्थाः प्राद्विषन्त परस्परम् ॥ ६३ ॥
संकराश्चाभ्यवर्तन्त न च शौचमवर्तत ।
ये च वेदविदो विप्रा विस्पष्ट मनृचश्च ये ।
निरन्तर विशेषास्ते बहुमानावमानयोः ॥ ६४ ॥
हारमा भरणं वेशं गतं स्थित मवेक्षितम् ।
असेवन्त भुजिष्या वै दुर्जना चरितं विधिम् ॥ ६५ ॥
स्त्रियः पुरुष वेषेण पुंसः स्त्रीवेशधारिणः ।

क्रीडारति विहारेषु परां मुद मवाप्नुवन् ॥ ६६ ॥
प्रभवद्भिः पुरादाया ऽमर्हेभ्यः प्रतिपादितान् ।
नाभ्यवर्तन्त नास्तिक्या द्वर्तन्तः संभवे ष्वपि ॥ ६७
मित्रेणाभ्यर्थितं मित्र मर्थं संशयिते क्वचित् ।
बालकोट्यग्र मात्रेण स्वार्थेनाघ्नत तद्वसु ॥ ६८ ॥
परस्वाऽऽदानरुचयो विपण व्यवहारिणः ।
अद्रूरयन्तार्य वर्णेषु शूद्राश्चापि तपोधनाः ॥ ६९ ॥
अधीयन्तेऽव्रताः केचिद् वृथा व्रतमथापरे ।
अशुश्रूषु र्गुरोः शिष्यः कश्चिच्छिष्यसखो गुरुः ॥ ७० ॥
पिता चैव जनित्री च श्रान्तौ वृत्तोत्सवाविव ।
अप्रभुत्वे स्थितौ वृद्धा वन्नं प्रार्थयतः सुतान् ॥ ७१ ॥
तत्र वेदविदः प्राज्ञा गांभीर्ये सागरोपमाः ।
कृष्यादिष्व ऽभवन् सक्ता मूर्खाः श्राद्धान्य ऽभुञ्जत ॥ ७२ ॥
प्रातः प्रातश्च सुप्रश्नं कल्पनं प्रेषण क्रियाः ।
शिष्यानु प्रहितास्तेषा मकुर्वन् गुरवः स्वयम् ॥ ७३ ॥
श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यान शासत ।
अन्वशासच्च भर्तारं समाहूया भिजल्पती ॥ ७४ ॥
प्रयत्नेनापि चारक्ष च्चित्तं पुत्रस्य वै पिता ।
व्यभजच्चापि संरम्भाद् दुःख वासं तथा वसन् ॥ ७५ ॥
अग्निदाहेन चौरैर्वा राजभिर्वा हृतं धनम् ।
दृष्ट्वा द्वेषात् प्राहसन्त सुहृत् संभाविता ह्यपि ॥ ७६ ॥
कृतघ्ना नास्तिकाः पापा गुरुदाराभिमर्षिणः ।
अभक्ष्य भक्षणरता निर्मर्यादा हतत्विषः ॥ ७७ ॥
तेष्वेव मादीनाचारा नाचरत्सु विपर्यये ।
नाहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः ॥ ७८ ॥
तन्मां स्वय मानुप्राहा मभिनन्द शचीपते ।
त्वयार्चितां मां देवेश पुरो धास्यन्ति देवताः ॥ ७९ ॥
यत्राहं तत्र मे कान्ता मद्विशिष्टा मदर्पणाः ।

सप्त देव्यो जयाष्टम्यो वासमेष्यन्ति तेऽष्टधा ॥ ८० ॥
आशा श्रद्धा धृतिः शान्ति विजितिः सन्नतिः क्षमा ।
अष्टमी वृत्ति रेतासां पुरोगा पाकशासन ॥ ८१ ॥
तांश्चाहं चासुरां स्त्यक्त्वा युष्मद्विषय मागताः ।
त्रिदशेषु निवत्स्यामो धर्मनिष्ठान्तरात्मसु ॥ ८२ ॥
इत्युक्त वचनां देवीं प्रीत्यर्थं च ननन्दतुः ।
नारदश्चात्र देवर्षि र्वृत्रहन्ता च वासवः ॥ ८३ ॥
ततो ऽनलसखो वायु प्रववौ देववेश्मसु ।
इष्टगन्धः सुखस्पर्शः सर्वेन्द्रिय सुखावहः ॥ ८४ ॥
शुचौ चाभ्यर्थिते देशे त्रिदशाः प्रायशः स्थिताः ।
लक्ष्मी सहित मासीनं मघवन्तं दिदृक्षवः ॥ ८५ ॥
ततो दिवं प्राप्य सहस्रलोचनः श्रियोपपन्नः सुहृदा महर्षिणा ।
रथेन हर्यश्वयुजा सुरर्षभः सद सुराणा मभिसत्कृतो ययौ ॥ ८६ ॥
अथेङ्गितं वज्र धरस्य नारद श्रियश्च देव्या मनसा विचारयन् ।
श्रियै शशंसा ऽमरदृष्टपौरुष. शिवेन तत्रागमनं महर्षिः ॥ ८७ ॥
ततोऽमृतं द्यौः प्रववर्ष भास्वती पिता महस्या यतने स्वयंभुवः ।
अनाहता दुन्दुभयोऽथ नेदिरे तथा प्रसन्नाश्च दिश श्चकाशिरे ॥८८॥
यथर्तु शस्येषु ववर्ष वासवो न धर्ममार्गाद्विचचाल कश्चन ।
अनेक रत्नाकर भूषरा च भू सुघोष घोषा भुवनौकसां जये ॥ ८९॥
क्रिया भिरामा मनुजा मनस्विनो बभु शुभे पुण्यकृतां पथि स्थिता. ।
नरामरा किन्नरयक्षराक्षसा समृद्धिमन्त सुमनस्विनोऽभवन् ॥९०॥
न जात्व काले कुसुमं कुत फलं पपात वृक्षात्पवनेरितादपि ।
रसप्रदा कामदुधाश्च धेनवो न दारुणा वाग्विचचार कस्यचित् ॥९१॥
इमां सपर्यां सह सर्वकामदैः श्रियाश्च शक्र प्रमुखैश्च दैवतैः ।
पठन्ति ये विप्रसदः समागताः समृद्धकामा श्रियमाप्नुवन्ति ते ॥९२॥
त्वया कुरूणांवर यत्प्रचोदितं भवाभवस्येह परं निदर्शनम् ।
तदद्य सर्वं परिकीर्तितं मया परीक्ष्य तत्वं परिगन्तुमर्हसि ॥९३॥

## पुण्यपापे ।

तैत्तिरीयार- यथा वृक्षस्य संपुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो
ण्यक-१०- दूराद् गन्धो वाति । यथाऽसिधारा कर्तेऽवहिता मवक्रामेद्य युवे
अनु० ६ हुवे हवा विहृदिष्यामि कर्तं पतिष्यामीत्येव मनृतादात्मान
जुगुप्सेत् इति ॥

महा० उ० पाप कुर्वन् पापकीर्त्ति पापमेवा श्नुते फलम् ।
अ० ३५ पुण्यं कुर्वन् पुण्यकीर्त्ति पुण्य मत्यन्त मश्नुते ॥ ६१ ॥
तस्मात् पाप न कुर्वीत पुरुष शंसितव्रत ।
पापं प्रज्ञा नाशयति क्रियमाणं पुन पुन ॥ ६२ ॥
नष्टप्रज्ञ पापमेव नित्य मारभते नर ।
पुण्य प्रज्ञा वर्द्धयति क्रियमाणं पुन पुन ॥ ६३ ॥
वृद्धप्रज्ञ पुण्यमेव नित्य मारभते नर ।
पुण्यं कुर्वन् पुण्यकीर्तिं पुण्यस्थानं स्म गच्छति ॥ ६४ ॥
नकृच्छ्रं महदाप्नोति नचिरात् पापमाचरन् ।
अनसूय कृतप्रज्ञ शोभनान्या चरन्सदा ॥ ६५ ॥
तस्मात् पुण्य निषेवेत पुरुष सुसमाहित ।
असूयको दन्दशूको निष्ठुरो वैरकृच्छठ ॥
स कृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ६६ ॥
प्रज्ञामेवा गमयति य प्राज्ञेभ्य स पण्डित ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥ ६७ ॥
दिवसेनैव तत् कुर्य्यात् येन रात्रौ सुख वसेत् ।
अष्टमासेन तत् कुर्य्यात् येन वर्षा सुखवसेत् ॥ ६८ ॥
पूर्ववयसि तत्कुर्य्यात् येनवृद्ध सुखं वसेत् ।
यावज्जीवेन तत् कुर्य्यात् येनामुत्र सुख वसेत् ॥ ६९ ॥
मनु० ४-२१ प्लवते धर्म लघवो लोकेम्भसि यथा प्लवा ।
मज्जन्ति पाप गुरव शस्त्र स्कन्धमि वोदके ॥
इति २ अ० न पापं प्रति पाप स्यात् साधुरेव सदा भवेत् ।
आत्मनैव हत पापो य. पाप कर्तु मि च्छति ॥ १ ॥

दग्ध हि सोऽनुदहति हत मेवानुहन्ति च ।
मृत मारयते चैव यः पापे पापमाचरेत् ॥ २ ॥
महामोह युत पूर्व यो जतून् हन्ति निर्दय ।
स प्रेत्य नरक याति नृशसो मृतमारक ॥ ३ ॥
सुलभा पुरुषा लोके साधव साधु कारिण ।
असाधुषु पुन साधु दुर्लभ पुरुषो भुवि ॥ ४ ॥
ते साधव सुजन्मान स्तैरियं भूषिता धरा ।
अपकारिषु भूतेषु ये भवन्त्युपकारिण ॥ ५ ॥
दु खितेभ्यो ऽपि भूतेभ्यो मृत्यु रोग जरादिभि ।
भूय को दु खमपर सघृणो दातुमर्हति ॥ ६ ॥
दु ख ददाति योऽन्यस्य ध्रुव दु ख स विन्दति ।
तस्मान्न कस्यचित् दु ख दातव्य दु खभीरुणा ॥ ७ ॥
बीजे योनौ तथाहारे व्यवहारे च य शुचि ।
तस्य कृच्छ्रगतस्यापि न पाप कुरुते मति ॥ ८ ॥
चोद्यमानोऽपि पापेषु शुद्धात्मा न प्रवर्तते ।
वार्यमाणोऽपि पापेभ्य पापात्मा पापमिच्छति ॥ ९ ॥
विद्वद्भि शास्यमानोऽपि पाप कर्म रति नर ।
घृष्यमाण इवागारो निर्मलत्व न गच्छति ॥ १० ॥

---

## कर्म प्राधान्यम् ।

युधिष्ठिर उ० यद्यस्ति दत्तमिष्ट वा तपस्तप्तं तथैव च ।
शा० अ० १२२ गुरूणा चापि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म उवाच आत्मना नर्थ युक्तेन पापे निविशते मनः ।
स्वकर्म कलुषं कृत्वा क्लेशे महति धीयते ॥ २ ॥
दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
मृतेभ्य प्रमृतायान्ति दारिद्रा पापकर्मिण ॥ ३ ॥
उत्सवादु त्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनस्था शुभकारिण ॥ ४ ॥

व्याल कुञ्जर दुर्गेषु सर्प चोर भयेषु च ।
हस्ता वापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ ५ ॥
प्रियदेवा ऽऽतिथेयाश्च वदान्याः प्रिय साधवः ।
क्षेम्य मात्मवतां मार्गं मास्थिता दत्त दक्षिणाः ॥ ६ ॥
पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ७ ॥
सुशीघ्र मपि धावन्तं विधान मनुधावति ।
शेते सह शयानेन येन येन यथा कृतम् ॥ ८ ॥
पापं तिष्ठति तिष्ठन्तं धावन्त मनु धावति ।
करोति कुर्वतः कर्म छाये वानु विधीयते ॥ ९ ॥
येन येन यथा यद् यत् पुरा कर्मसु निश्चितम् ।
तत्तदेवोत्तरं भुंक्ते नित्यं विहित मात्मना ॥ १० ॥
समान कर्म विक्षेप विधान परि रक्षणम् ।
भूल ग्राम मिमं कालः समन्ता दपकर्षति ॥ ११ ॥
अचोद्य मानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नाति वर्तन्ते तथा कर्म पुरा कृतम् ॥ १२ ॥
संमान श्चावमानश्च लाभोऽलाभः क्षयाक्षयौ ।
प्रवृत्ता न निवर्त्तन्ते निधनान्तः पदे पदे ॥ १३ ॥
आत्मना विहितं दुःख मात्मना विहितं सुखम् ।
गर्भशय्या मुपादाय भजते पूर्व देहिकम् ॥ १४ ॥
बालो युवा वा वृद्धश्च यत् करोति शुभा शुभम् ।
तस्यां तस्या मवस्थायां भुंक्ते जन्मनि जन्मनि ॥ १५ ॥
यथा धेनुसहस्त्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तार मनुगच्छति ॥ १६ ॥
मलिनं हि यथा वस्त्रं पश्चाच्छुध्यति वारिणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ १७ ॥
दीर्घकालेन तपसा सेवितेन महामते ।
धर्मनिर्धूत पापानां संसिध्यन्ते मनोरथाः ॥ १८ ॥

शकुनानामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा पुण्यकृतां गतिः ॥ १९ ॥
अलमन्यै रुपालब्धैः कीर्त्तितैश्च व्यतिक्रमैः ।
पेशलश्चानुरूपश्च कर्तव्यं हितमात्मनः ॥ २० ॥

---

देवत्व मथ मानुष्यं पशुत्वं पक्षितां तथा ।
तिर्य्यक्त्वं स्थावरत्वञ्च याति जंतुः स्वकर्मभिः ॥
अचिन्त्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालेनानु वर्त्तन्ते तथा कर्म पुरा कृतम् ॥
येनैव यद्यथापूर्वं कृतं कर्म शुभा ऽशुभम् ।
स एव तत्तथा भुंक्ते दुःखं वा यदि वा सुखम् ॥
आत्मना विहितं दु खं आत्मना विहितं सुखम् ।
गर्भशय्यां समादाय भुज्यते पौर्व दैहिकम् ॥
उपतिष्ठति तिष्ठंतं गच्छन्तं मनुगच्छति ।
करोति कुर्वतः कर्म्म च्छायेवानुविधीयते ॥
ग्रह रोगा विष स्तोयं राजानः शकुनादयः ।
पीड्यन्ति नरं पश्चात् पीड़ितं पूर्व कर्मभिः ॥
यथा पृथिव्यां बीजानि रत्नानि विविधानि च ।
सकृदुप्तानि कर्माणि तिष्ठंति प्रभवन्ति च ॥
तैल क्षयाद्यथा दीपो निर्वाण मधिगच्छति ।
कर्म क्षया त्तथा जंतो· शरीरं नाश मृच्छति ॥
कर्म क्षया न्नृणां मृत्यु स्ततः सद्भि रुदाहृतः ।
विविधाः प्राणिनां तत्र स्मृता रोगाश्च हेतवः ॥
दुःखाना च सुखानां च जन्मनो मरणस्य च ।
आत्मैव आत्मनो योनि श्चित्रभानो र्विवारणैः ॥

---

## कर्मफलम्।

अनुधर्मे २६१ सौवर्णं राजतं वापि यथा भाण्डं निषिच्यते।
तथा निषिच्यते जन्तुः पूर्वं कर्म यथानुगः॥
ना बीजाज्जायते किंचित् नाकृत्वा सुख मेधते।
सुकृतै र्विन्दते सौख्यं प्राप्य देह क्षयं नरः॥
दैवं तात न पश्यामि नास्ति दैवस्य साधनम्।
स्वभावतो हि संसिद्धा देव गन्धर्व दानवाः॥
प्रेत्य यान्त्य कृतं कर्म न स्मरन्ति सदा जनाः।
ते वै तस्य फल प्राप्तौ कर्म चापि चतुर्विधम्॥
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्।
करोति यादृशं कर्म तादृशं प्रतिपद्यते॥
निरन्तरञ्च मिश्रं च लभते कर्म पार्थिव।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते॥
कदाचित् सुकृतं कर्म कूटस्थ मिव तिष्ठति।
मज्जमानस्य संसारे यावत् दुःखा द्विमुच्यते॥
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेव्यते।
सुकृत क्षयाच्च दुष्कृतं तद्विद्धि मनुजाधिप॥
नायं परस्य सुकृतं दुष्कृतं चापि सेवते॥
करोति यादृशं कर्म तादृशं प्रतिपद्यते॥
यथा मृत् पिण्डतः कर्ता कुरुते यद्य दिच्छति।
एवमात्म कृतं कर्म मानवः प्रतिपद्यते॥
यथा छाया तपौ नित्यं सुसंबद्धौ निरन्तरम्।
तथा कर्म च कर्ता च संबद्धा वात्म कर्मभिः॥

---

## कर्मफलिकोपाख्यानम्।

युधि॰ उ॰ कर्मणां च समस्तानां शुभानां भरतर्षभ।
अन॰ अ॰ ७ फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः॥ १॥
भीष्म उ॰ हंत ते कथयिष्यामि यन्मां पृच्छसि भारत।
रहस्यं यदृषीणां तु तच्छृणुष्व युधिष्ठिर॥ २॥

या गति प्राप्यते येन प्रेत्यभावे चिरेप्सिता ॥ ३ ॥
येन येन शरीरेण यद्यत् कर्म करोति य ।
तेन तेन शरीरेण तत्तत् फल मुपाश्नुते ॥ ४ ॥
यस्या यस्या मवस्थाया यत्करोति शुभा शुभम् ।
तस्या तस्या मवस्थाया भुङ्क्ते जन्मनि जन्मनि ॥ ५ ॥
न नश्यति कृत कर्म सदा पञ्चेन्द्रियै रिह ।
ते ह्यस्य साक्षिणो नित्य षष्ठ आत्मा तथैव च ॥ ६ ॥
चक्षु र्दद्यान्मनोदद्या द्वाचं दद्याच्च सूनृताम् ।
अनुव्रजे दुपासीत स यज्ञ पञ्च दक्षिण ॥ ७ ॥
यो दद्यादपरिक्लिष्ट मन्न मध्वनि वर्तते ।
श्रान्तायाऽदृष्ट पूर्वाय तस्य पुण्य फलं महत् ॥ ८ ॥
स्थण्डिलेषु शयानाना गृहाणि शयनानि च ।
चीर वल्कल संवीते वासास्या भरणानि च ॥ ९ ॥
वाहनानि च यानानि योगात्मनि तपोधने ।
अग्नी नुप शयानस्य राज्ञ पौरुषमेव च ॥ १० ॥
रसाना प्रति सहारे सौभाग्य मनुगच्छति ।
आमिष प्रति संहारे पशून् पुत्रांश्च विन्दति ॥ ११ ॥
अवाक् शिरास्तु यो लम्बे दुदवासं च यो वसेत् ।
सततश्चैक शायी य स लभेते प्सिता गतिम् ॥ १२ ॥
पाद्य मासन मेवाथ दीपमन्नं प्रतिश्रयम् ।
दद्या दतिथि पूजार्थं सयज्ञ पञ्चदक्षिण ॥ १३ ॥
वीरासनं वीरशय्या वीरस्थान मुपागत ।
अक्षयास्तस्य वै लोका सर्वकामगमा स्तथा ॥ १४ ॥
धनं लभेत दानेन मौने नाज्ञा विशाम्पते ।
उपभोगा श्च तपसा ब्रह्मचर्येण जीवितम् ॥ १५ ॥
रूप मैश्वर्य मारोग्य महिंसा फल मश्नुते ।
फलमूलाशिनो राज्य स्वर्गं पर्णाशिना भवेत् ।
प्रायो पवेशिनो राजन् सर्वत्र सुख मुच्यते ॥ १६ ॥

मवाक्यः शाकदीक्षायां स्वर्गगामी तृणाशनः ।
अथ त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ॥ १७ ॥
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् ।
सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विजः ॥ १८ ॥
मनः साधयते राज्यं नाकपृष्ठमनाशके ।
उपवासं च दीक्षायां अभिषेकञ्च पार्थिव ॥ १९ ॥
कृत्वा द्वादश वर्षाणि वीरस्थाना द्विशिष्यते ।
अधीत्य सर्ववेदान् वै सद्यो दुःखा द्विमुच्यते ॥ २० ॥
मानसं हि चरन् धर्मं स्वर्गलोकमुपाश्नुते ।
या दुस्त्यजा दुर्मतिभि र्या न जीर्यति जीर्यतः ।
योऽसौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ २१ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म कर्तार मनुगच्छति ॥ २२ ॥
अचोद्य मानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नाति वर्तन्ते तथा कर्म पुराकृतम् ॥ २३ ॥
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुः श्रोत्रे च जीर्यते तृष्णैका तु न जीर्यते ॥ २४ ॥
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ २५ ॥
येन प्रीणात्युपाध्यायं तेन स्याद् ब्रह्म पूजितम् ॥ २६ ॥
सर्वे तस्या दृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वा स्तस्याऽफलाः क्रियाः ॥ २७ ॥
वैशं० उ० भीष्मस्यै तद्वचः श्रुत्वा विस्मिताः कुरुपुङ्गवाः ।
आसन्प्रहृष्टमनसः प्रीतिमन्तो भवंस्तदा ॥ २८ ॥
यन्मन्त्रे भवति वृथोपयुज्यमाने यत्सोमे भवति वृथाभिपूयमाणे ।
यच्चाग्नौ भवति वृथाभिहूयमाने तत्सर्वं भवति वृथाभिधीयमाने२९
इत्येत दृषिणा प्रोक्त मुक्तवानस्मि यद्विभो ।
शुभा शुभ फल प्राप्तौ किमतः श्रोतुमिच्छसि ॥ ३० ॥

---

## यमनियमादि फल कथनम् ।

युधि० उ० विश्रम्भितोऽहं भवता धर्मान् प्रवदता प्रभो ।
मनु० अ० ७४ प्रवक्ष्यामि तु सन्देहं तन्मे ब्रूहि पितामह ॥ १ ॥
व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते ।
नियमानां फलञ्चैव स्वधीतस्य च किं फलम् ॥ २ ॥
दत्तस्येह फलं किञ्च वेदानां धारणे च किम् ।
अध्यापने फलं किञ्च सर्वमिच्छामि वेदितुं ॥ ३ ॥
अप्रतिग्राहके किञ्च फलं लोके पितामह ।
तस्य किञ्च फलं दृष्टं श्रुतं यस्तु प्रयच्छति ॥ ४ ॥
स्वकर्मनिरतानाञ्च शूराणाञ्चापि किं फलं ।
शौचे च किं फलं प्रोक्तं ब्रह्मचर्य्यस्य च किं फलं ॥ ५ ॥
पितृ शुश्रूषणे किंच मातृशुश्रूषणे तथा ।
आचार्य्य गुरु शुश्रूषास्व नुक्रोशा नुकम्पने ॥ ६ ॥
एतत् सर्वं मशेषेण पितामह यथातथं ।
वेत्तु मिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥ ७ ॥
भीष्म उ० यो व्रतं वै यथोद्दिष्टं तथा सम्प्रतिपद्यते ।
अखण्डं सम्य गारभ्य तस्य लोकाः सनातनाः ॥ ८ ॥
नियमानां फलं राजन् प्रत्यक्ष मिह दृश्यते ।
नियमानां क्रतूनाञ्च त्वया वाप्त मिदं फलम् ॥ ९ ॥
स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इह लोके च था नित्यं ब्रह्मलोके च मोदते ॥ १० ॥
दमस्य तु फलं राजन् शृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ॥ ११ ॥
यत्रेच्छागामिनो दान्ताः सर्वशत्रु नि षूदनाः ।
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ॥ १२ ॥
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ! ।
स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ॥ १३ ॥
दाने र्यज्ञैश्च विविधै स्तथा दान्ताः क्षमान्विताः ।

दमाद्दमो विशिष्टो हि दानं किञ्चित् द्विजातये ॥ १४ ॥
दाता कुप्यति नो दान्त स्तस्मा द्दानात् परं दमः ।
यस्तु दद्या दकुप्यन् हि तस्य लोकाः सनातनाः ॥ १५ ॥
क्रोधो हन्ति हि यद्दानं तस्माद्दानात् परं दमः ॥ १६ ॥
अदृश्यानि महाराज स्थानान्य युतशो दिवि ।
अपीषां सर्वलोकेषु यानीतो यान्ति देवताः ॥ १७ ॥
दमेन यानि नृपते यच्छन्ति परमर्षयः ।
कामयाना महत् स्थानं तस्मा द्दानात् परं दमः ॥ १८ ॥
अध्यापकः परिक्लेशा दक्षयं फल मश्नुते ।
विधिवत् पावकं हुत्वा ब्रह्मलोके नराधिप ॥ १९ ॥
अधीत्यपि हि यो वेदान् न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्म प्रशंसी तु सोऽपि स्वर्गे महीयते ॥ २० ॥
क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ।
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते ॥ २१ ॥
वैश्यः स्वकर्म्म निरतः प्रदानाल्लभते महत् ।
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयार्च्छति ॥ २२ ॥
शूरा बहुविधाः प्रोक्ता स्तेषा मर्थांस्तु मे शृणु ।
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव हि ॥ २३ ॥
यज्ञशूरा दमे शूराः सत्यशूरास्तथाऽपरे ।
युद्धशूरा स्तथैवोक्ता दानशूराश्च मानवाः ॥ २४ ॥
सांख्य शूराश्च बहवो योगशूरास्तथाऽपरे ।
अरण्ये गृहवासे च त्यागे शूरास्तथाऽपरे ॥ २५ ॥
बुद्धिशूरास्तथैवान्ये क्षमाशूरा स्तथाऽपरे ।
आर्जवे च तथा शूराः शमे वर्त्तन्ति मानवाः ॥ २६ ॥
तैस्तैस्तु नियमैः शूरा बहवः सन्ति चाऽपरे ।
वेदाध्ययन शूराश्च शूराश्चाध्ययने रताः ॥ २७ ॥
गुरुशुश्रूषया शूराः पितृशुश्रूषया ऽपरे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथा ऽपरे ॥ २८ ॥
अरण्ये गृहवासे च शूराश्चातिथि पूजने ।

सर्वे यान्ति पराल्लोकान् स्वकर्म फलनिर्ज्जितान् ॥ २९ ॥
धारणं सर्ववेदानां सर्वतीर्थावगाहनं।
सत्यञ्च ब्रुवतो नित्यं समं वा स्यान्न वा समं ॥ ३० ॥
अश्वमेध सहस्रञ्च सत्यञ्च तुलया धृतं।
अश्वमेधसहस्राद्धि सत्य मेव विशिष्यते ॥ ३१ ॥
सत्येन सूर्य्यस्तपति सत्ये नाग्निः प्रदीप्यते।
सत्येन मरुतो यान्ति सर्वं सत्ये प्रतिष्ठितं ॥ ३२ ॥
सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणा स्तथा।
सत्यमाहुः परो धर्मस्तस्मात् सत्यं न लङ्घयेत् ॥ ३३ ॥
मुनयः सत्यनिरता मुनयः सत्यविक्रमाः।
मुनयः सत्यशपथा स्तस्मात् सत्यं विशिष्यते।
सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ ॥ ३४ ॥
दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया।
असंशयं विनीतात्मा स वै स्वर्गे महीयते ॥ ३५ ॥
ब्रह्मचर्य्यस्य च गुणं शृणु त्वं वसुधाधिप।
आजन्ममरणाद् यस्तु ब्रह्मचारी भवेदिह ॥ ३६ ॥
न तस्य किञ्चि दप्राप्य मिति विद्धि नराधिप।
बह्वः कोट्यस्त्वृषीणाञ्च ब्रह्मलोके वसन्त्युत ॥ ३७ ॥
सत्ये रतानां सततं दान्तानामूर्द्ध्वरेतसां।
ब्रह्मचर्य्यं दहेद्राजन् सर्वपापा न्युपासितं ॥ ३८ ॥
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्नि रुच्यते।
प्रत्यक्षं हि तथा ह्येतद् ब्राह्मणेषु तपस्विषु ॥ ३९ ॥
बिभेति हि यथा शक्रो ब्रह्मचारि प्रधर्षितः।
तद्ब्रह्मचर्य्यस्य फल मृषीणामिह दृश्यते ॥ ४० ॥
मातापित्रोः पूजनं यो धर्मस्तमपि मे शृणु।
शुश्रूषते यः पितरं नावसूयेत् कदाचन ॥ ४१ ॥
मातरं भ्रातरं वापि गुरु माचार्य्य मेव च।
तस्य राजन् फलं विद्धि स्वर्ल्लोके स्थानमर्च्चितं।
न च पश्येत नरकं गुरुशुश्रूषया ऽऽत्मवान् ॥ ४२ ॥

---

## काम क्रोध लोभ निन्दा ।

भगवद्गीता त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
अ० १६ कामः क्रोध स्तथा लोभ स्तस्मादेतत् त्रयं त्यजेत् ॥ २१ ॥
एतै र्विमुक्तः कौन्तेय तमोद्वारै स्त्रिभि र्नरः ।
आचरत्यात्मनः श्रेय स्ततो याति परां गतिम् ॥ २२ ॥

## अक्रोधः

गृद्ध व्याघ यः परेषां नरोनित्य मतिवादां स्तितिक्षते ।
महा० शा० देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १ ॥
अ० ७४ यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा ।
सयन्ते त्युच्यते सद्भि र्न यो रश्मिषु लम्बते ॥ २ ॥
यः समुत्पतितं क्रोध मक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्व मिदं जितम् ॥ ३ ॥
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।
यथोरग स्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ४ ॥
यः सन्धारयते मन्युं यो ऽति वादां स्तितिक्षते ।
यश्च तप्तो न तपति दृढं सो ऽर्थस्य भाजनम् ॥ ५ ॥
यो यजेदपरिश्रान्तो मासि मासि शतं समाः ।
न क्रुद्ध्ये द्यश्च सर्वस्य तयो रक्रोधनो ऽधिकः ॥ ६ ॥
यत् कुमाराः कुमार्य्यश्च वैरं कुर्य्यु रचेतसः ।
न तत्प्राज्ञो ऽनुकुर्वीत न विदु स्ते बलाबलम् ॥ ७ ॥
भाग० स्कं० ४ संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् ।
अ० ११ श्रुतेन भूयसा राजन्न गदेन यथा ऽऽमयम् ॥ ३१ ॥
येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशम् ।
न बुधस्तद्वशं गच्छे दिच्छ न्नभय मात्मनः ॥ ३२ ॥

## मङ्कि गीतम् ।

यधि० व० ईहमानः समाऽऽरम्भान् यदि नासादये द्धनम् ।
महाभा० शां०
अ० १०६ धनतृष्णाभि भूतश्च किं कुर्वन् सुख माप्नुयात् ॥ १ ॥

भीष्म० उ० सर्वं साम्य मनायासः सत्य वाक्यञ्च भारत ।
निर्वेदश्च विवित्सा च यस्य स्यात् स सुखी नरः ॥ २ ॥
एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये ।
एष स्वर्गश्च धर्मश्च सुखञ्चानुत्तमं सताम् ॥ ३ ॥
अत्राप्युदा हरन्तीम मितिहासं पुरातनम् ।
निर्वेदान् मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ४ ॥
ईहमानो धनं मङ्कि र्भग्नेहश्च पुनः पुनः ।
केनचिद्धन शेषेण क्रीतवान् दम्यगोयुगम् ॥ ५ ॥
सुसंबद्धौ तु तौ दम्यौ दमनायाभि निःसृतौ ।
आसीन मुष्ट्रं मध्येन सहसैवाऽभ्यधावताम् ॥ ६ ॥
तयोः समाप्नयो रुष्ट्रः स्कन्ध देश ममर्षणः ।
उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ७ ॥
ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ च सम्प्रेक्ष्य मङ्कि स्तत्रा ऽब्रवी दिदम् ॥ ८ ॥
न चैवा विहितं शक्यं दक्षेणा पीहितं धनम् ।
युक्तेन श्रद्धया सम्य गीहां समनुतिष्ठता ॥ ९ ॥
कृतस्य पूर्वं नानर्थै र्युक्तस्या प्यनुतिष्ठतः ।
इमं पश्यत सङ्गत्या मम दैव मुपप्लवम् ॥ १० ॥
उद्यम्योद्यम्य मे दम्यौ विषमे नैव गच्छतः ।
उत्क्षिप्य काकतालीय मुत्पथेनैव धावतः ॥ ११ ॥
मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैव मेवेदं हठे नैवास्ति पौरुषम् ॥ १२ ॥
यदिवा प्युपपद्येत पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैव मेवा वतिष्ठते ॥ १३ ॥
तस्मान्निर्वेद एवेह गन्तव्यः सुख मिच्छता ।
सुखं स्वपिति निर्विण्णो निराश श्चार्थ साधने ॥ १४ ॥
अहो सम्यक् शुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् ॥ १५ ॥
यः कामानाप्नुयात् सर्वान् यश्चैतान् केवलां स्त्यजेत् ।
प्रापणात् सर्व कामानां परित्यागो विशिष्यते ॥ १६ ॥

नान्तं सर्वविधित्सानां गतपूर्वो ऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मन्दस्य वर्द्धते ॥ १७ ॥
निवर्त्तस्व विधित्साभ्यः शाम्य निर्विद्य कामुक ।
असकृच्चासि निकृतो न च निर्विद्यसे ततः ॥ १८ ॥
यदि नाहं विनाश्य स्ते यद्येवं रमसे मया ।
मा मां योजय लोभेन वृथा त्वं वित्तकामुक ॥ १९ ॥
सञ्चितं सञ्चितं द्रव्यं नष्टं तव पुनः पुनः ।
कदाचिन् मोक्ष्यसे मूढ़ धनेहां धनकामुक ॥ २० ॥
अहोनु मम बालिश्यं योऽहं क्रीडनकस्तव ।
किन्त्वेवं जातु पुरुषः परेषां प्रेष्यतामियात् ॥ २१ ॥
न पूर्वे न परे जातु कामानामन्त माप्नुवन् ।
त्यक्त्वा सर्वे समारम्भान् प्रतिबुद्धोऽस्मि जागमि ॥ २२ ॥
नूनं ते हृदयं काम वज्रसारमयं दृढ़म् ।
यदनर्थं शताविष्टं शतधा न विदीर्यते ॥ २३ ॥
जानामि काम त्वाञ्चैव यच्च किञ्चित् प्रियं तव ।
तवाहं प्रियमन्विच्छ न्नात्मन्युपलभे सुखम् ॥ २४ ॥
काम जानामि ते मूलं सङ्कल्पात् किल जायसे ।
न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि ॥ २५ ॥
ईहा धनस्य न सुखा लब्धे चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्यु लब्धं भवति वा न वा ॥ २६ ॥
परित्यागे न लभते ततो दुःखतरं नु किम् ।
न च तुष्यति लब्धेन भूय एव न मार्गति ॥ २७ ॥
अनुतर्षुल एवार्थः स्वादु गङ्गमिवोदकम् ।
मद्विलापन मेतत्तु प्रतिबुद्धो ऽस्मि सन्त्यज ॥ २८ ॥
य इमं मामकं देहं भूतग्रामं समाश्रितः ।
स यात्वितो यथा कामं वसतां वा यथा सुखम् ॥ २९ ॥
न युष्मास्विह मे प्रीतिः काम लोभानुसारिषु ।
तस्मादुत्सृज्य कामान् वै सत्यमेवाऽऽश्रयाम्यहम् ॥ ३० ॥
सर्वभूता न्यहं देहे पश्यन् मनसि चात्मनः ।

योगे बुद्धिं श्रुते सत्त्वं मनो ब्रह्मणि धारयन् ॥ ३१ ॥
विहरिष्याम्यऽनासक्तः सुखी लोकान् निरामयः ।
यथा मां त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ॥ ३२ ॥
त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते ।
तृष्णाशोकश्रमाणां हि त्वं काम प्रभवः सदा ॥ ३३ ॥
धननाशेऽधिकं दुःखं मन्ये सर्व महत्तरम् ।
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनाच्युतम् ॥ ३४ ॥
अवज्ञान सहस्रैस्तु दोषाः कष्ट तरा धने ।
धने सुख कला या तु सापि दुःखे विधीयते ॥ ३५ ॥
धनमस्येति पुरुषं पुरो निघ्नन्ति दस्यवः ।
क्लिश्यन्ति विविधै र्दण्डै र्नित्य मुद्वेजयन्ति च ॥ ३६ ॥
अर्थलोलुपता दुःख मिति बुद्धं चिरान् मया ।
यद्यदा लम्बसे काम तत्तदेवानुरुध्यसे ।
अतस्त्वत्तोऽसि बालश्च दुस्तोप पूरणोऽनलः ॥ ३७ ॥
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ।
पाताल मिव दुष्पूरो मां दुःखै र्योक्तु मिच्छसि ॥
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ॥ ३८ ॥
निर्वेद महमासाद्य द्रव्य नाशाद्य दृच्छया ।
निवृत्ति परमां प्राप्य नाद्य कामान् विचिन्तये ॥ ३९ ॥
अति क्लेशान् महा नीहनाहं बुद्धयाम्य बुद्धिमान् ।
निकृतो धन नाशेन शये सर्वाङ्ग विज्वरः ॥ ४० ॥
परित्यजामि काम त्वां हित्वा सर्व मनोगतीः ।
न त्वं मया पुनः काम वत्स्यसे न च रंस्यसे ॥ ४१ ॥
क्षमिष्ये क्षिपमाणानां न हिंसिष्ये विहिंसतः ।
द्वेष्यः मुक्त. प्रियं वक्ष्याम्यनादृत्य तद प्रियम् ॥
तृप्तः स्वस्थेन्द्रियो नित्यं यथा लब्धेन वर्त्तयन् ॥ ४२ ॥
न सकामं करिष्यामि त्वा महं शत्रु मात्मनः ।
निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम् ।
सर्व भूत दयाञ्चैव विद्धि मां समुपागतम् ॥ ४३ ॥

तस्मात् कामश्च लोभश्च तृष्णां कार्पण्य मेव च ।
त्यजन्तु मां प्रतिष्ठन्तं सत्वस्थो ह्यस्मि साम्प्रतम् ॥ ४४ ॥
प्रहाय कामं लोभञ्च सुखं प्राप्तोऽस्मि साम्प्रतम् ।
नाद्यलोभवशं प्राप्तो दुःखं प्राप्स्या म्यनात्मवान् ॥ ४५ ॥
यद्यत्यजति कामानां तत् सुखस्याभि पूर्य्यते ।
कामस्य वशगो नित्यं दुःख मेव प्रपद्यते ॥ ४६ ॥
कामानु यत्थं मुदते यत् किञ्चित् पुरुषो रजः ।
काम क्रोधोद्भवं दुःख मह्री ऽररति रेवच ॥ ४७ ॥
एष ब्रह्म प्रविष्टोऽहं ग्रीष्मे शीतमिव ह्रदम् ।
शाम्यामि परिनिर्वामि सुखं मामेति केवलम् ॥ ४८ ॥
यच्च काम सुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णा क्षय सुखस्यैते नार्हतः षोडशीं कलाम् ॥ ४९ ॥
आत्मना सप्तमं कामं हत्वा शत्रु मिवोत्तमम् ।
प्राप्या वध्यं ब्रह्मपुरं राजेव स्या महं सुखी ॥ ५० ॥
एतां बुद्धि समास्थाय मङ्कि निर्वेद मागतः ।
सर्वान् कामान् परित्यज्य प्राप्य ब्रह्म महत् सुखम् ॥ ५१ ॥
दम्यनाश कृते मङ्कि रमृतत्वं किलागमत् ।
अनिच्छत् काम मूलं न तेन प्राप महत् सुखम् ॥ ५२ ॥

---

## कामक्रोधोत्पत्तिः ।

युधि॰ उ॰ यतः प्रभवति क्रोधः कामो वा भरतर्षभ ।
महा॰ आप शोक मोहौ विधित्सा च परासुत्वं च तद्वद ॥ १ ॥
शा॰ अ॰ ११ लोभो मात्सर्य मीर्ष्या च कुत्साऽसूया कृपा भयम् ।
एतत् सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥ २ ॥
भीष्म॰ उ॰ त्रयोदशै तेऽतिबलाः शत्रवः प्राणिनां स्मृताः ।
उपासन्ते महाराज समन्तात् पुरुषानिह ॥ ३ ॥
एते प्रमत्तं पुरुष मप्रमत्ता स्तुदन्ति च ।
वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषं बलात् ॥ ४ ॥
एभ्यः प्रवर्तते दुःख मेभ्यः पापं प्रवर्तते ।

इति मर्त्यो विजानीयात् सततं पुरुषर्षभ ॥ ५ ॥
एतेषा मुदयं स्थानं क्षयं च पृथिवीपते ।
हन्तते कथयिष्यामि क्रोधस्योत्पत्ति मादितः ॥ ६ ॥
लोभात् क्रोधः प्रभवति परदोषै रुदीर्यते ।
क्षमया तिष्ठते राजन् क्षमया विनिवर्त्तते ॥ ७ ॥
संकल्पा ज्जायते कामः सेव्यमानो विवर्धते ।
यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति ॥ ८ ॥
परासूया क्रोध लोभावन्तरा प्रति मुच्यते ।
दयया सर्व भूतानां निर्वेदा द्विनिवर्त्तते ॥ ९ ॥
अवद्य दर्शनादेति तत्त्वा ऽज्ञानाच्च धीमताम् ।
अज्ञान प्रभवो मोहः पापाभ्यासात्प्रवर्धते ॥ १० ॥
यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ।
विरुद्धा नीह शास्त्राणि पश्यन्तीह कुरुद्वह ॥ ११ ॥
विधित्सा जायते तत्र तत्त्वज्ञानान्निवर्तते ।
प्रीत्या शोकः प्रभवति वियोगात्तस्य देहिनः ॥ १२ ॥
यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति ।
परासुता क्रोध लोभा दभ्यासाच्च प्रवर्धते ॥ १३ ॥
दयया सर्व भूतानां निर्वेदा द्विनिवर्तते ।
सत्यत्यागात्तु मात्सर्य महितानां च सेवया ॥ १४ ॥
एतत्तु क्षीयते तात साधूना मुपसेवनात् ।
कुलाऽज्ञानात्तथै श्वर्या न्मदो भवति देहिनाम् ॥ १५ ॥
एभि रेवतु विज्ञातैः स च सद्यः प्रणश्यति ।
ईर्ष्या कामात् प्रभवति संघर्षा च्चैव जायते ॥ १६ ॥
इतरेषां तु सत्वानां प्रज्ञया सा प्रणश्यति ।
विभ्रमा ल्लोक वाह्यानां द्वेष्यै र्वाक्यै रसंमतैः ॥ १७ ॥
कुत्सा संजायते राजन् लोकान् प्रेक्ष्याभिशाम्यति ।
इति कर्तुं न शक्ता ये बलस्याया पकारिणे ॥ १८ ॥
असूया जायते तीव्रा कारुण्याद्वि निवर्तते ।
कृपणान् सततं दृष्ट्वा ततः संजायते कृपा ॥ १९ ॥

धर्मनिष्ठा यदा वेत्ति तदा शाम्यति सा कृपा ।
अज्ञान प्रभवो लोभो भूतानां दृश्यते सदा ॥ २० ॥
अस्थिरत्व च भोगाना दृष्ट्वा ज्ञात्वा निवर्त्तते ।
एतान्येव जितान्याहु प्रशनाद्द त्रयोदश ॥ २१ ॥

---

## अक्रोधः ।

युधिष्ठिरउवाच क्रोधो हन्ता मनुष्याणा क्रोधो भावयिता पुन ।
वन०अ० २६० इति विद्धि महाप्राज्ञे क्रोधमूलौ भवा भवौ ॥ १ ॥
यो हि संहरते क्रोधं भवस्तस्य सुशोभने ।
य पुन पुरुष क्रोध नित्य न सहते शुभे ।
तस्याऽभवाय भवति क्रोध परम दारुण ॥ २ ॥
क्रोध मूलो विनाशोहि प्रजानामिह दृश्यते ।
तत् कथं मादृश क्रोध मुत्सृजे ल्लोकनाशनम् ॥ ३ ॥
क्रुद्ध पाप नर कुर्य्यात् क्रुद्धो हन्याद् गुरूनपि ।
क्रुद्ध परुषया वाचा श्रेयसो ऽप्यव मन्यते ॥ ४ ॥
वाच्या वाच्ये हि कुपितो न प्रजानाति कर्हि चित् ।
नाकार्य्य मस्ति क्रुद्धस्य नावाच्य विद्यते तथा ॥५॥
हिंस्यात् क्रोधा दवध्या स्तु वध्यान् सम्पूजयीत च ।
आत्मान मपि च क्रुद्ध प्रेषयेद्यमसादनम् ॥ ६ ॥
एतान् दोषान् प्रपश्यद्भिर्जित क्रोधो मनीषिभि ।
इच्छद्भि परम श्रेय इह चामुत्र चोत्तमम् ॥ ७ ॥
त क्रोध वर्जितं धीरै कथम स्मद्विधश्चरेत् ।
एतत् द्रौपदि सन्धाय न मे मन्यु प्रवर्द्धते ॥ ८ ॥
आत्मानञ्च परा श्चैव त्रायते महतो भयात् ।
क्रुध्यन्तम प्रति क्रुध्यन् द्वयोरेव चिकित्सक ॥ ९ ॥
मूढो यदि क्लिश्यमान क्रुध्यते ऽशक्तिमान्नर ।
बलीयसा मनुष्याणा त्यजत्या त्मान मात्मना ॥ १० ॥
तस्या त्मान सन्त्यजतो लोका नश्यन्त्य नात्मन ।

तस्मात् द्रौपद्यऽशक्तस्य मन्योर्नियमनं स्मृतम् ॥ ११ ॥
विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ।
अनाशयित्वा क्लेष्टारं परलोके च नन्दति ॥ १२ ॥
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहु रापत्स्वपि विजानता ॥ १३ ॥
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधो रिह सतां मतम् ॥ १४ ॥
सत्यञ्चानृततः श्रेयो नृशंसा चानृशंसता ।
तमेवं बहु दोषं तु क्रोधं साधु विवर्जितम् ॥ १५ ॥
मादृशः प्रसृजेत् कस्मात् सुयोधन वधादपि ।
तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ॥ १६ ॥
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ।
यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्वदर्शिनः ॥ १७ ॥
क्रुद्धो हि कार्य्यं सुश्रोणि न यथावत् प्रपश्यति ।
न कार्य्यं न च मर्य्यादां नरः क्रुद्धोऽनुपश्यति ॥ १८ ॥
हन्त्य वध्यानपि क्रुद्धो गुरून् क्रुद्ध स्तुदत्यपि ।
तस्मात्तेजसि कर्त्तव्यः क्रोधो दूरे प्रतिष्ठितः ॥ १९ ॥
दाक्ष्यं ह्यमर्षः शौर्य्यश्च शीघ्रत्व मिति तेजसः ।
गुणाः क्रोधाभि भूतेन नशक्याः प्राप्तु मञ्जसा ॥ २० ॥
क्रोधं त्यक्त्वा तु पुरुषः सम्यक् तेजोऽभिपद्यते ।
काल युक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥ २१ ॥
क्रोधस्त्वऽपण्डितैः शश्वत्तेजइत्यभि निश्चितम् ।
रजस्तु लोकनाशाय विहितं मानुषं प्रति ॥ २२ ॥
तस्माच्छश्वत् त्यजेत् क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान् स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ २३ ॥
यदि सर्वम बुद्धीना मतिक्रान्तमऽचेतसाम् ।
अति क्रमो मद्विधस्य कथं स्यात् स्विदनिन्दिते ॥ २४ ॥
यदि नस्यु र्मानुषेषु क्षमिणः पृथिवीसमाः ।

तस्यात् सन्धिर्मनुष्याणां क्रोध मूलो हि विग्रहः ॥ २५ ॥
अभिपक्तो ह्यभिपजे दाहन्याद् गुरुणा हत ।
एवं विनाशे भूताना मधर्म प्रथितो भवेत् ॥ २६ ॥
आक्रुष्टः पुरुषः सर्वं प्रत्याक्रोशे दनन्तरम् ।
प्रति हन्याद् तथैव तथा हिंस्याच्च हिंसितः ॥ २७ ॥
हन्युर्हि पितरः पुत्रान् पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन् भार्या स्तथैव च ॥ २८ ॥
एवं संकुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजानां सन्धि मूलं हि जन्म विद्धि शुभानने ॥ २९ ॥
ताः क्षियेरन् प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशे ।
तस्मान्मन्यु र्विनाशाय प्रजानाम ऽभयाय च ॥ ३० ॥

---

## दुर्गातितरणम् ।

युधि॰ द॰ क्लिश्यमानेषु भूतेषु तैस्तैर्भा वै स्ततस्ततः ।
महाभा॰ शां॰ अ॰ ११० दुर्गाण्य ऽतितरेद्येन तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म॰ उ॰ आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।
वर्त्तन्ते संयतात्मानो दुर्गाण्य तितरन्ति ते ॥ २ ॥
ये दम्भाना चरन्ति स्म येषां वृत्तिश्च संयता ।
विषयांश्च निगृह्णन्ति दुर्गाण्यति तरन्ति ते ॥ ३ ॥
प्रत्याहु र्नोच्यमाना ये न हिंसन्ति च हिंसिताः ।
प्रयच्छन्ति न याचन्ते दुर्गाण्यति तरन्ति ते ॥ ४ ॥
वासयन्त्य ऽतिथी न्नित्यं नित्यं चानसूयकाः ।
नित्यं स्वाध्याय शीलाश्च दुर्गाण्यति तरन्ति ते ॥ ५ ॥
माता पित्रोश्च ये वृत्तिं वर्त्तन्ते धर्मज्ञो विदाः ।
वर्जयन्ति दिवा स्वप्नं दुर्गाण्यति तरन्ति ते ॥ ६ ॥
ये वा पापं न कुर्वन्ति कर्मणा मनसा गिरा ।
निक्षिप्तदण्डा भूतेषु दुर्गाण्यति तरन्ति ते ॥ ७ ॥
ये न लोभा न्नयन्त्यर्थान् राजानो राजसान्विताः ।

विषयान् परिरक्षन्ति दुर्गाण्यति तरन्ति ते ॥ ८ ॥
स्वेषु दारेषु वर्त्तन्ते नान्य धृत्तिमृता घृतौ ।
अग्निहोत्र परा सन्तो दुर्गाण्यति तरन्ति ते ॥ ९ ॥
आहवेषु च ये शूरास्त्यक्त्वा मरणज भयम् ।
धर्मेण जय मिच्छन्ति दुर्गाण्यति तरन्ति ते ॥ १० ॥
ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाण भूता भूताना दुर्गाण्यति तरन्ति ते ॥ ११ ॥
कर्माण्य ऽकुहकार्थानि येषा वाचश्च सूनृता ।
येषा मर्यादा सम्बद्धा दुर्गाण्यति तरन्ति ते ॥ १२ ॥
अनध्यायेषु ये विप्रा स्वध्याय नेह कुर्वते ।
तपोनिष्ठा सुतपसो दुर्गाण्यति तरन्ति ते ॥ १३ ॥
ये तपश्च तपस्यन्ति कौमारा ब्रह्मचारिण ।
विद्या वेद व्रतस्नाता दुर्गाण्यति तरन्ति ते ॥ १४ ॥
ये च सशान्तरजस सशाततमसश्च ये ।
सत्त्वे स्थिता महात्मानो दुर्गाण्यति तरन्ति ते ॥ १५ ॥
येषा न कश्चित् त्रसति न त्रसन्ति हि कस्यचित् ।
येषामात्मसमो लोको दुर्गाण्यति तरन्ति ते ॥ १६ ॥
परस्त्रिया न तप्यन्ति ये सन्त पुरुषर्षभा ।
ग्राम्या दर्थान्निवृत्ताश्च दुर्गाण्यति तरन्ति ते ॥ १७ ॥
सर्वान् देवान्नमस्यन्ति सर्वधर्माश्च शृण्वते ।
ये श्रद्दधाना शान्ताश्च दुर्गाण्यति तरन्ति ते ॥ १८ ॥
ये न मानित्वमिच्छन्ति मानयन्ति च ये परान् ।
मान्यमानान्नमस्यन्ति दुर्गाण्यति तरन्ति ते ॥ १९ ॥
ये च श्राद्धानि कुर्वन्ति तिथ्या तिथ्या प्रजार्थिन ।
सुविशुद्धेन मनसा दुर्गाण्यति तरन्ति ते ॥ २० ॥
ये क्रोध सनियच्छन्ति क्रुद्धान् सशमयन्ति च ।
न च कुप्यन्ति भूताना दुर्गाण्यति तरन्ति ते ॥ २१ ॥
मधु मासञ्च ये नित्य वर्जयन्तीह मानवा ।
जन्मप्रभृति मद्यञ्च दुर्गाण्यति तरन्ति ते ॥ २२ ॥

यात्रार्थं भोजनं येषां संतानार्थंच मैथुनम् ।
वाक् सत्यवचनार्थाय दुर्गाण्यति तरन्ति ते ॥ २३ ॥
ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यति तरन्ति ते ॥ २४ ॥
य एष पद्मरक्ताक्षः पीतवासा महाभुजः ।
सुहृद्भ्राता च मित्रं च सम्बन्धी च तवाच्युत. ॥ २५ ॥
य इमान् सकलांल्लोकान् चर्मवत् परिवेष्टयेत् ।
इच्छन् प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ २६ ॥
स्थितः प्रियहिते जिष्णोः स एव पुरुषोत्तमः ।
राजंस्तव च दुर्द्धर्षो वैकुंठः पुरुषर्षभः ॥ २७ ॥
य एनं संश्रयन्तीह भक्ता नारायणं हरिम्
ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा ॥ २८ ॥
दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ।
कथयन्ति च विप्रेभ्यो दुर्गाण्यति तरन्ति ते ॥ २९ ॥
इति कृत्यसमुद्देशः कीर्त्तितस्ते मया ऽनघ ।
तरन्ते येन दुर्गाणि परत्रेह च मानवाः ॥ ३० ॥

---

## स्त्रीणां समादरः

मनु० अ० ३ पितृभिर्भ्रातृभि श्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहु कल्याण मीप्सुभि. ॥ ५५ ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्रदेवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्रा ऽफलाः क्रियाः ॥ ५६ ॥
शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥ ५७ ॥
जामयो यानि गेहानि शपन्त्य प्रति पूजिताः ।
तानि कृत्या हतानीव विनश्यन्ति समन्ततः ॥ ५८ ॥
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।
भूतिकामै र्नरै र्नित्यं सत्कारेषू त्सवेषु च ॥ ५९ ॥

संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ६० ॥
यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्तते ॥ ६१ ॥
स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् ।
तस्यां त्वरोचमानायां सर्वमेव न रोचते ॥ ६२ ॥

भीष्म उवाच पितृभि र्भ्रातृ भिश्चापि श्वशुरै रथ देवरैः ।
महा० अनु० पूज्या भूषयितव्याश्च बहु कल्याणमीप्सुभिः ॥ ३ ॥
अ० ४६ पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप ।
स्त्रियो यत्र च पूज्यन्ते रमन्ते तत्र देवताः ॥ ५ ॥
अपूजिताश्च यत्रैता सर्वास्तत्रा ऽफलाः क्रियाः ।
तदा चैतत् कुलं नास्ति यदा शोचन्ति जामयः ॥ ६ ॥
यामिः शप्तानि गेहानि निकृत्तानीव कृत्यया ।
नैव भान्ति न वर्द्धन्ते श्रिया हीनानि पार्थिव ॥ ७ ॥
स्त्रियः पुंसां परिददे मनुर्जिगमिषु र्दिवम् ।
अबलाः स्वल्पकौपीनाः सुहृदः सत्यजिष्णवः ॥ ८ ॥
ईर्षवो मानकामाश्च चण्डा ह्यसुहृदो ऽबुधाः ।
स्त्रियस्तु मान मर्हन्ति ता मानयत मानवाः ॥ ९ ॥
स्त्री प्रत्ययो हि वै धर्मो रति भोगाश्च केवलाः ।
परिचर्या नमस्कारा स्तदा यत्ता भवंतु वः ॥ १० ॥
उत्पादन मपत्यस्य जातस्य परिपालनम् ।
प्रीत्यर्थं लोक यात्रायाः पश्यतः स्त्रीनिबन्धनम् ॥ ११ ॥
संमन्यमाना श्चैता हि सर्वकार्याण्य वाप्स्यथ ।
विदेह राज दुहिता चात्र श्लोक मगायत ॥ १२ ॥
नास्ति यज्ञक्रिया काचिन्न श्राद्धं नोपवासकम् ।
धर्मः स्वभर्तृ शुश्रूषा तया स्वर्गं जयन्त्युत ॥ १३ ॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्य मर्हति ॥ १४ ॥

श्रिय एताः स्त्रियो नाम सत्कार्या भूति मिच्छता ।
पालिता निगृहीता च श्रीः स्त्री भवति भारत ॥ १५ ॥

---

## नारीधर्म कथनम् ।

मनु० अ० ५ बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किंचित् कार्यं गृहेष्वपि ॥ १४७ ॥
बाल्ये पितु र्वशे तिष्ठेत् पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम् ॥ १४८ ॥
पित्रा भर्त्रा सुतैर्वापि नेच्छेद् विरह मात्मनः ।
एषां हि विरहेण स्त्री गर्ह्ये कुर्या दुभे कुले ॥ १४९ ॥
सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १५० ॥
यस्मै दद्यात् पिता त्वेनां भ्राता वा नुमतेपितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥ १५१ ॥
मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ।
प्रयुज्यते विवाहेषु प्रदानं स्वाम्य कारणम् ॥ १५२ ॥
अनृता वृतु काले च मंत्र संस्कार कृत्पतिः ।
सुखस्य नित्यं दातेह परलोके च योषितः ॥ १५३ ॥
विशीलः काम वृत्तो वा गुणै र्वा परिवर्जित. ।
उपचर्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥ १५४ ॥
नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं ना प्युपोषितम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १५५ ॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोक मभीप्सन्ती नाचरेत् किंचिद् प्रियम् ॥ १५६ ॥
कामं तु क्षपयेद्देहं पुष्प मूल फलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ १५७ ॥
आसीता मरणात् क्षांता नियता ब्रह्मचारिणी ।
यो धर्म एक पत्नीनां कांक्षन्ती तमनुत्तमम् ॥ १५८ ॥

अनेकानि सहस्राणि कुमार ब्रह्मचारिणाम् ।
दिवं गतानि विप्राणा मकृत्वा कुल संततिम् ॥ १५९ ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्य पुत्रापि यथा ते ब्रह्मचारिणः ॥ १६० ॥
अपत्य लोभाद्यातु स्त्री भर्तार मतिवर्तते ।
सेह निन्दा मवाप्नोति पतिलोकाच्च हीयते ॥ १६१ ॥
नान्योत्पन्ना प्रजास्तीह न चाप्यन्य परिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ॥ १६२ ॥
पतिं हित्वाऽपकृष्टं स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते ॥ १६३ ॥
व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ १६४ ॥
पतिं या नाभिचरति मनोवाग्देह संयता ।
सा भर्तृ लोक माप्नोति सद्भिः साध्वीति चोच्यते ॥ १६५ ॥
अनेन नारी वृत्तेन मनोवाग्देह संयता ।
इहाग्र्यां कीर्तिमाप्नोति पतिलोकं परत्र च ॥ १६६ ॥

---

## सत् स्त्रीणां समुदाचारम् ।

युधि० उ० सत् स्त्रीणां समुदाचारं सर्व धर्म विदांवर ।
महा० अनु० अ० १२३ श्रोतुमिच्छाम्यहं त्वत्तः तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्मउवाच सर्वज्ञां सर्वतत्त्वज्ञां देवलोके मनस्विनीम् ।
कैकेयी सुमना नाम शाण्डिलीं पर्य पृच्छत ॥ २ ॥
केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्व पापानि देवलोकं त्वमागता ॥ ३ ॥
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा ।
सुता ताराधिपस्येव प्रभया दिव मागता ॥ ४ ॥
अरजांसि च वस्त्राणि धारयन्ती गतक्लमा ।
विमानस्था शुभे भासि सहस्र गुण मोजसा ॥ ५ ॥
न त्वमल्पेन तपसा दानेन नियमेन च ।
इमं लोक मनुप्राप्ता त्वं हि तत्त्वं वदस्व मे ॥ ६ ॥

इति पृष्टा सुमनया मधुरं चारु हासिनी।
शाण्डिली निभृतं वाक्यं सुमना मिद मब्रवीत् ॥ ७ ॥
नाहं काषायवसना नापि वल्कलधारिणी।
न च मुण्डा च जटिला भूत्वा देवत्व मागता ॥ ८ ॥
अहितानि च वाक्यानि सर्वाणि परुषाणि च।
अप्रमत्ता च भर्तारं कदाचित् नाह मब्रुवम् ॥ ९ ॥
देवतानां पितृणां च ब्राह्मणानां च पूजने।
अप्रमत्ता च सदा युक्ता श्वश्रू श्वशुरवर्तिनी ॥ १० ॥
पैशून्येन प्रवर्तामि न ममैतन्मनो गतम्।
अद्वारि न च तिष्ठामि चिरं न कथयामि च ॥ ११ ॥
असद्वा हसितं किञ्चि दहितं वापि कर्मणा।
रहस्य मरहस्यं वा न प्रवर्त्तामि सर्वथा ॥ १२ ॥
कार्यार्थे निर्गतञ्चापि भर्त्तारं गृह मागतम्।
आसने नोप संयोज्य पूजयामि समाहिता ॥ १३ ॥
यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति।
भक्ष्यं वा यदि वा लेह्यं तत् सर्वं वर्जयाम्यहम् ॥ १४ ॥
कुटुम्बार्थे समानीतं यत् किञ्चित् कार्य्यमेव तु।
प्रातरुत्थाय तत् सर्वं कारयामि करोमि च ॥ १५ ॥
प्रवासं यदि मे याति भर्ता कार्येण केनचित्।
मङ्गलै र्बहुभि र्युक्ता भवामि नियता तदा ॥ १६ ॥
अंजनं रोचनां चैव स्नानं माल्यानु लेपनम्।
प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्तरि ॥ १७ ॥
नोत्थापयामि भर्तारं सुख सुप्त महं सदा।
आन्तरेष्वपि कार्येषु तेन तुष्यति मे मनः ॥ १८ ॥
ना यासयामि भर्तारं कुटुम्बार्थेऽपि सर्वदा।
गुप्त गुह्या सदा चास्मि सुसम्मृष्ट निवेशना ॥ १९ ॥
इमं धर्म पथं नारी पालयन्ती समाहिता।
अरुन्धतीव नारीणां स्वर्गलोके महीयते ॥ २० ॥

भीष्म उवाच एतदाख्याय सा देवी सुमनायै तपस्विनी।

पतिधर्मं महाभागा जगामा दर्शनं तदा ॥ २१ ॥
यश्चेदं पाण्डवाख्यानं पठेत् पर्वणि पर्वणि।
स देवलोकं संप्राप्य नन्दने च सुखी भवेत्॥ २२ ॥

## कीदृशे वसते श्रीः।

युधि० उ० महा० अनु० अ० ११ कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म० उ० अत्र ते वर्तयिष्यामि यथा वृत्तं यथा श्रुतम्।
रुक्मिणी देवकीपुत्रसन्निधौ पर्य्य पृच्छत ॥ २ ॥
नारायणस्याङ्कगतां ज्वलन्तीं दृष्ट्वा श्रियं पद्मसमानवर्णाम्।
कौतूहला द्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ॥ ३ ॥
कानीह भूतान्युपसेवसे त्वं संतिष्ठसे कानि न सेवसे त्वम्।
तानि त्रिलोकेश्वर भूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकल्पे ॥ ४ ।
एवं तदा श्रीरभिभाष्यमाणा देव्या समक्षं गरुडध्वजस्य।
उवाच वाक्यं मधुराभिधानं मनोहरं चन्द्रमुखी प्रसन्ना ॥ ५ ॥
श्री उवाच वसामि नित्यं सुभगे प्रगल्भे दक्षे नरे कर्मणि वर्तमाने।
अक्रोधने देवपरे कृतज्ञे जितेन्द्रिये नित्यमुदीर्णसत्वे ॥ ६ ॥
नाकर्मशीले पुरुषे वसामि न नास्तिके सांकरिके कृतघ्ने।
न भिन्नवृत्ते न नृशंसवर्णे न चापि चौरे न गुरुष्वसूये ॥ ७ ॥
ये चाल्प तेजोबल सत्वमानाः क्लिश्यन्ति कुप्यंति च यत्र तत्र।
न चैव तिष्ठामि तथा विधेषु नरेषु संगुप्त मनोरथेषु ॥ ८ ॥
यश्चात्मनि प्रार्थयते न किंचि द्यश्च स्वभावो पहतान्तरात्मा।
तेष्वल्प सन्तोष परेषु नित्यं नरेषु नाहं निवसामि सम्यक् ॥ ९ ॥
स्वधर्मशीलेषु च धर्मवित्सु वृद्धोपसेवानिरते च दान्ते।
कृतात्मनि क्षान्तिपरेसमर्थे क्षान्तासु दान्तासु तथा ऽबलासु १०
सत्य स्वभावार्जव संयुतासु वसामि देव द्विज पूजिकासु।
प्रकीर्णभांडामनवेक्ष्यकारिणीं सदा च भर्तुः प्रतिकूलवादिनीम्।
परस्य वेश्माभिरता मलज्जामेवं विधां स्त्रीं परिवर्जयामि ॥ ११ ॥

वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु।
सत्यासु नित्यं प्रियदर्शनासु सौभाग्ययुक्तासु गुणान्वितासु॥ १२॥
पापा मचौक्षा मवलेहिनीञ्च व्यपेतधैर्यां कलहप्रियां च।
निद्राभिभूतां सततं शयाना मेवंविधां तां परिवर्जयामि॥ १३॥
यानेषु कन्यासु विभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु।
वसामि फुल्लासु च पद्मिनीषु नक्षत्रवीथीषु च शारदीषु॥ १४॥
गजेषु गोष्ठेषु तथा सनेषु सरः सुफुल्लोत्पल पङ्कजेषु।
नदीषु हंसस्वननादितासु क्रौंचावघुष्टस्वरशोभितासु॥ १५॥
प्रकीर्ण कूलद्रुमराजितासु तपस्वि सिद्ध द्विज सेवितासु।
वसामि नित्यं सुबहूदकासु सिंहैर्गजै श्चाकुलितोदकासु॥ १६॥
मत्ते गजे गोवृषभे नरेन्द्रे सिंहासने सत्पुरुषेषु नित्यम्।
यस्मिन् जनो हव्यभुजं जुहोति गोब्राह्मणं चार्चति देवताश्च।
कालेन पुष्पैर्बलयः क्रियन्ते तस्मिन् गृहे नित्यमुपैमि वासम्॥१७॥
स्वाध्यायनित्येषु सदा द्विजेषु क्षत्रे च धर्माभिरते सदैव।
वैश्ये च कृष्याभिरते वसामि शूद्रे च शुश्रूषया नित्ययुक्ते॥ १८॥
नारायणे त्वेकमना वसामि सर्वेण भावेन शरीर भूता।
तस्मिन्हि धर्मः सुमहान्निविष्टो ब्रह्मण्यता चात्र तथाप्रियत्वम्॥१९॥
नाहं शरीरेण वसामि देवि नैवं मयाशक्य मिहाभिधातुम्।
भावेन यस्मिन्निवसामि पुंसि स वर्द्धते धर्मयशोऽर्थ कामैः॥ २०॥

---

## पातिव्रतम्।

वैशम्पायन उ० ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम्।
महा०वन० २०४ पप्रच्छ भरतश्रेष्ठ धर्मप्रश्नं सुदुर्विदम्॥ १॥
युधिष्ठिर उ० श्रोतुमिच्छामि भगवन् स्त्रीणां माहात्म्य मुत्तमम्।
कथ्यमानं त्वया विप्र सूक्ष्मधर्मं च तत्वत॥ २॥
प्रत्यक्षेण हि दृश्यन्ते देवा विप्रर्षि सत्तम।
सूर्या चन्द्रमसौ वायुः पृथिवी वह्निरेव च॥ ३॥

पिता माता च भगवन् गुरुरेव च सत्तम ।
यच्चान्यद्दैव विहितं तच्चापि भृगुनन्दन ॥ ४ ॥
मान्या हि गुरवः सर्वे एकपत्न्य स्तथा स्त्रियः ।
पतिव्रतानां शुश्रूषा दुष्करा प्रति भाति मे ॥ ५ ॥
पतिव्रतानां माहात्म्यं वक्तु मर्हसि नः प्रभो ।
निरुध्य चेन्द्रिय ग्रामं मन. संरुध्य चानघ ॥ ६ ॥
पतिं दैवत वच्चापि चिन्तयन्त्यः स्थिता हि याः ।
भगवन् दुष्करं त्वेतत् प्रतिभाति मम प्रभो ॥ ७ ॥
मात्रा पित्रोश्च शुश्रूषा स्त्रीणां भर्तरि च द्विज ।
स्त्रीणां धर्मात् सुघोराद्धि नान्यं पश्यामि दुष्करम् ॥ ८ ॥
साध्वाचाराः स्त्रियो ब्रह्मन् यत् कुर्वन्ति सदादृता. ।
दुष्करं खलु कुर्वन्ति पितरं मातरश्च वै ॥ ९ ॥
एकपत्न्यश्च या नार्यो याश्च सत्यं वदन्त्युत ।
कुक्षिणा दशमासांश्च गर्भं संधारयन्ति याः ॥ १० ॥
नार्य्यः कालेन संभूय किमद्भुत तरं ततः ।
संशयं परमं प्राप्य वेदना मतुला मपि ॥ ११ ॥
प्रजायन्ते सुतान्नार्यो दु·खेन महता विभो ।
पुष्णन्ति चापि महता स्नेहेन द्विज पुंगव ॥ १२ ॥
ये च क्रूरेषु सर्वेषु वर्तमाना जुगुप्सिता. ।
स्वकर्म कुर्वन्ति सदा दुष्करं तच्च मे मतम् ॥ १३ ॥
क्षत्रधर्म समाचारं तत् त्वं चाख्याहि मे द्विज ।
धर्मः सुदुर्लभो विप्र नृशंसेन महात्मनाम् ॥ १४ ॥
एतदिच्छामि भगवन् प्रश्नं प्रश्नविदांवर ।
श्रोतुं भृगुकुल श्रेष्ठ शुश्रूषे तव सुव्रत ॥ १५ ॥
मार्क॰ उवाच हन्त ते सर्वमाख्यास्ये प्रश्नमेतं सुदुर्लभम् ।
तत्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे ॥ १६ ॥
मातरस्तु गौरवा दन्ये पितृनन्येतु मेनिरे ।
दुष्करं कुरुते माता विवर्धयति या प्रजाः ॥ १७ ॥
तपसा देवतेज्याभि र्वन्दनेन तितिक्षया ।

अभिचारै रुपायैश्च प्रीयन्ते पितर सुतान् ॥ १८ ॥
एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम् ।
चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति ॥ १९ ॥
आशंसते हि पुत्रेषु पिता माता च भारत ।
यश कीर्तिमथैश्वर्यं प्रजाधर्मं तथैव च ॥ २० ॥
तयो राशा तु सफला य करोति स धर्मवित् ।
पिता माता च राजेन्द्र तुष्यतो यस्य नित्यश ॥ २१ ॥
इह प्रेत्य च तस्याथ कीर्तिर्धर्मश्च शाश्वत ।
नैव यज्ञक्रिया काश्चिन्न श्राद्धं नोपवासकम् ।
या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्युत ॥ २२ ॥
एतत् प्रकरणं राजन् अधिकृत्य युधिष्ठिर ।
पतिव्रतानां नियतं धर्मं चावहित शृणु ॥ २३ ॥
मार्क० उवाच कश्चिद् द्विजातिप्रवरो वेदाध्यायी तपोधन ।
महाभारत तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ १ ॥
वन० अ० २०४ साङ्गोपनिषदो वेदानधीते द्विजसत्तम ।
स वृक्षमूले कस्मिंश्चिद् वेदानुच्चारयन् स्थित ॥ २ ॥
उपरिष्टाच्च वृक्षस्य बलाका सन्न्यलीयत ।
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ३ ॥
तामवेक्ष्य तत क्रुद्ध समपध्यायत द्विज ।
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ॥ ४ ॥
अपध्याता च विप्रेण न्यपतद्धरणीतले ।
बलाका पतिता दृष्ट्वा गत सत्त्वा मचेतनाम् ॥ ५ ॥
कारुण्यादभि सन्तप्त पर्यशोचत तां द्विज ।
अकार्यं कृतवानस्मि रोष राग बलात्कृत ॥ ६ ॥
इत्युक्त्वा बहुशो विद्वान् ग्रामं भैक्षाय संश्रित ।
ग्रामे शुचीनि प्रचरन् कुलानि भरतर्षभ ॥ ७ ॥
प्रविष्ट स्तत् कुलं यत्र पूर्वं चरितवांस्तु स ।
देहीति याचमानो ऽसौ तिष्ठेत्युक्त स्त्रिया तत ॥ ८ ॥
शौचन्तु यावत् कुरुते भाजनस्य कुटुम्बिनी ।

एतस्मिन्नन्तरे राजन् क्षुधा संपीडितो भृशम् ।
भर्ता प्रविष्टः सहसा तस्या भरतसत्तम ॥ ९ ॥
सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यवहाय तम् ॥ १० ॥
पाद्य माच मनीयं वै ददौ भर्तुस्तथासनम् ।
प्रह्वा पर्यचरच्चापि भर्तारमसिते क्षणा ॥ ११ ॥
आहारेणाथ भक्ष्यैश्च भोज्यैः सुमधुरैस्तथा ।
उच्छिष्टं भाविता भर्तुं भुंक्ते नित्यं युधिष्ठिर ॥ १२ ॥
दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी ।
कर्मणा मनसा वाचा नान्यचिन्ताऽभ्यगात् पतिम् ॥ १३ ॥
तं सर्व भावोपगता पति शुश्रूषणे रता ।
साध्वाचारा शुचि र्दक्षा कुटुम्बस्य हितैषिणी ॥ १४ ॥
भर्तुश्चापि हितं यत्तत् सततं सानुवर्तते ।
देवताऽतिथि भृत्यानां श्वश्रू श्वशुरयोस्तथा ॥ १५ ॥
शुश्रूषणपरा नित्यं सततं संयते न्द्रिया ।
सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्ष्यकाङ् क्षिणम् ।
कुर्वती पति शुश्रूषां सस्माराथ शुभेक्षणा ॥ १६ ॥
व्रीडिता साभवत् साध्वी तदा भरतसत्तम ।
भिक्षा मादाय विप्राय निर्जगाम यशस्विनी ॥ १७ ॥
ब्राह्मण॰ उ॰ किमिदं भवति त्वं मां तिष्ठे त्युक्त्वा वराङ्गने ।
उपरोधं कृतवती न विसर्जितवत्यसि ॥ १८ ॥
ब्राह्मणं क्रोध संतप्तं ज्वलन्त मिव तेजसा ।
दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्वं वचोऽब्रवीत् ॥ १९ ॥
स्त्री॰ उ॰ क्षन्तु मर्हसि मे विद्वन् भर्ता मे दैवतं महत् ।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया ॥ २० ॥
ब्राह्मण॰ उ॰ ब्राह्मणा न गरीयांसो गरीयां स्ते पतिः कृतः ।
गृहस्थ धर्मे वर्तन्ती ब्राह्मणानव मन्यसे ॥ २२ ॥
इंद्रो प्येषां प्रणमते किं पुन र्मानवो भुवि ।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया
ब्राह्मणा ह्यग्नि सदृशा दहेयुः पृथिवी मपि ॥ २२ ॥

स्त्र्युवाच नाहं बलाका विप्रेन्द्र त्यज क्रोधं तपोधन ।
अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसि ॥ २३ ॥
नाप जानाम्यहं विप्रान् देवैस्तुल्यान् मनस्विनः ।
अपराधमिमं विप्र क्षन्तु मर्हसि मेऽनघ ॥ २४ ॥
जानामि तेजो विप्राणां महाभाग्यञ्च धीमताम् ।
अपेयः सागरः क्रोधात् कृतो हि लवणोदकः ॥ २५ ॥
तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
येषां क्रोधाग्नि रद्यापि दण्डके नोपशाम्यति ॥ २६ ॥
ब्राह्मणानां परिभवा द्वातापिः स दुरात्मवान् ।
अगस्त्य मृषि मासाद्य जीर्णः क्रूरो महासुरः ॥ २७ ॥
बहु प्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम् ।
क्रोधः सुविपुलो ब्रह्मन् प्रसादश्च महात्मनाम् ॥ २८ ॥
अस्मिं स्त्वतिक्रमे ब्रह्मन् क्षन्तुमर्हसि मेऽनघ ।
पति शुश्रूषया धर्मो यः स मे रोचते द्विज ॥ २९ ॥
दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ।
अविदूयेण तस्याहं कुर्यां धर्मं द्विजोत्तम ॥ ३० ॥
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम् ।
बलाका हि त्वया दग्धा रोषात् तद्विदितं मया ॥ ३१ ॥
क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३२ ॥
यो वदेदिह सत्यानि गुरुं सन्तोषयेत च ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ३३ ॥
जितेन्द्रियो धर्म परः स्वाध्याय निरतः शुचिः ।
कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ॥ ३४ ॥
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु च रतस्तं देवा ब्राह्मणं विदुः ॥ ३५ ॥
योऽध्यापये दधीयीत यजेद्वा याजयीत वा ।
दद्याद्वापि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ ३६ ॥

ब्रह्मचारी च वेदान् योऽप्यधीयात् द्विज पुङ्गवः ।
स्वाध्याये चाप्रमत्तो वै तं देवा ब्राह्मणं विदुः ॥ ३७ ॥
यद् ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत् ।
सत्यं तथा व्याहरतां नानृते रमते मनः ॥ ३८ ॥
धर्मन्तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् ।
इन्द्रियाणां निग्रहञ्च शाश्वतं द्विजसत्तम ॥ ३९ ॥
सत्यार्ज्जवं धर्ममाहुः परं धर्मविदो जनाः ।
दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥ ४० ॥
श्रुतिः प्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ।
बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ॥ ४१ ॥
भगवानपि धर्मज्ञः स्वाध्यायनिरतः शुचिः ।
न तु तत्त्वेन भगवन् धर्मं वेत्सीति मे मतिः ॥ ४२ ॥
यदि विप्र न जानीषे धर्मं परमकं द्विज ।
धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम् ॥ ४३ ॥
माता पितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः ।
मिथिलायां वसेद् व्याधः स ते धर्मान् प्रवक्ष्यति ॥ ४४ ॥
तत्र गच्छस्व भद्रं ते यथा कामं द्विजोत्तम ।
अत्युक्तमपि मे सर्वं क्षन्तुं मर्हसि निन्दित ।
स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविन्दते ॥ ४५ ॥
ब्राह्मण० उ० प्रीतोऽस्मि तव भद्रन्ते गतः क्रोधश्च शोभने ।
उपालम्भ स्त्वया ह्युक्तो मम निःश्रेयसं परम् ।
स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ॥ ४६ ॥

---

महादेव० उ० परावरज्ञे धर्मज्ञे तपोवन निवासिनि ।
महा० अनु० अ० १५६ साध्वि सुभ्रु सुकेशान्ते हिमवत्पर्वतात्मजे ॥ २ ॥
दक्षे दमशमोपेते निर्ममे धर्मचारिणि ।
पृच्छामि त्वा वरारोहे पृष्टा वद ममेप्सितम् ॥ ३ ॥
सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती ।

मार्कण्डेयस्य धूमोर्णा ऋद्धि वैश्रवणस्य च ॥ ४ ॥
वरुणस्य तथा गौरी सूर्यस्य च सुवर्चला ।
रोहिणी शशिनः साध्वी स्वाहा चैव विभावसोः ॥ ५ ॥
अदितिः कश्यपस्याथ सर्वास्ताः पति देवताः ।
पृष्टाश्चोपासिताश्चैव तास्त्वया देवि नित्यशः ॥ ६ ॥
तेन त्वां परिपृच्छामि धर्मज्ञे धर्मवादिनि ।
स्त्री धर्मं श्रोतु मिच्छामि त्वयोदाहृत मादितः ॥ ७ ॥
सह धर्मचरी मे त्वं समशीला समव्रता ।
समानसार वीर्या च तपस्तीव्रं कृतञ्च ते ॥ ८ ॥
त्वया ह्युक्तो विशेषेण गुणवान् स भविष्यति ।
लोके चैव तथा देवि प्रमाणत्व मुपेष्यति ॥ ९ ॥
स्त्रियश्चैव विशेषेण स्त्रीजनस्य गतिः परा ।
गौर्य्यां गच्छति सुश्रोणि लोकेष्वेषा गतिः सदा ॥ १० ॥
मम चार्द्धं शरीरस्य तव चार्द्धेन निर्मितम् ।
सुर कार्यकरी च त्वं लोक सन्तान कारिणि ॥ ११ ॥
तव सर्व. सुविदितः स्त्रीधर्मः शाश्वत. शुभे ।
तस्मादशेषं तं ब्रूहि स्वधर्मं विस्तरेण मे ॥ १२ ॥
भगवन् सर्वभूतेश भूत भव्यभवो द्भव ।
त्वत् प्रसादादियं देव वाक् चैव प्रति भाति मे ॥ १३ ॥
स्त्री धर्मो मां प्रति यथा प्रतिभाति यथा विधि ।
तमहं कीर्त्तयिष्यामि तथैव प्रश्रितो भव ॥ ३३ ॥
स्त्री धर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः ।
सह धर्मचरी भर्तु र्भवत्यग्नि समीपतः ॥ ३४ ॥
सुस्वभावा सुवचना सुवृत्ता सुख दर्शना ।
पुत्रवक्त्र मिवा भीक्ष्णं भर्तु र्वदन मीक्षति ॥ ३५ ॥
या साध्वी नियताचारा सा भवेद्धर्मचारिणी ।
श्रुत्वा दम्पति धर्मं वै सह धर्म कृतं शुभम् ॥ ३६ ॥
या भवेद्धर्म परमा नारी भर्तृ समव्रता ।
देववत् सततं साध्वी भर्तार मनुपश्यति ॥ ३७ ॥

शुश्रूषां परिचर्यां च देववतुल्यं प्रकुर्वती ।
वश्या भावेन सुमनाः सुव्रता सुखदर्शना ।
अनन्यचित्ता सुमुखी सा नारी धर्म चारिणी ॥ ३८ ॥
परुषाण्यपि चोक्ता या दृष्टा क्रुद्धेन चक्षुषा ।
सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता ॥ ३९ ॥
न चन्द्र सूर्य्यौ न तरुं पुन्नाम्नो या निरीक्षते ।
भर्तृपूज्या वरारोहा सा भवेद्धर्म चारिणी ॥ ४० ॥
दरिद्रं व्याधितं दीन मध्वना परिकर्शितम् ।
पतिं पुत्र मिवोपास्ते सा नारी धर्मचारिणी ॥ ४१ ॥
या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ।
पतिव्रता पतिप्राणा सा नारी धर्म भागिनी ॥ ४२ ॥
शुश्रूषां परिचर्यां च करोत्य विमनाः सदा ।
सुप्रीता च विनीता च सा नारी धर्मभागिनी ॥ ४३ ॥
विभर्त्यन्न प्रदानेन कुटुम्बं चैव नित्यदा ॥ ४४ ॥
न कामेषु न भोगेषु नैश्वर्य्येण सुखे तथा ।
स्पृहा यस्या यथा पत्यौ सा नारी धर्म भागिनी ॥ ४५ ॥
कल्योत्थान रतिर्नित्यं गृह शुश्रूषणे रता ।
सुसंमृष्टक्षया चैव गोशकृत् कृतलेपना ॥ ४६ ॥
अग्निकार्य परा नित्यं सदा पुष्पबलि प्रदा ।
देवता ऽतिथि भृत्यानां निवाप्य पतिना सह ॥ ४७ ॥
शेषान्नमपि भुञ्जाना यथा न्यायं यथाविधि ।
तुष्ट पुष्ट जना नित्यं नारी धर्मेण युज्यते ॥ ४८ ॥
श्वश्रू श्वशुरयोः पादौ तोषयन्ती गुणान्विता ।
माता पितृ परा नित्यं या नारी सा तपोधना ॥ ४९ ॥
ब्राह्मणान् दुर्बलानाथान् दीनान्धकृपणां स्तथा ।
विभर्त्यन्नेन या नारी सा पतिव्रतभागिनी ॥ ५० ॥
व्रतं चरति या नित्यं दुश्चरं लघु सत्त्वया ।
पति चित्ता पतिहिता सा पति व्रत भागिनी ॥ ५१ ॥
पुण्य मेतत् तपश्चैव स्वर्गश्चैप सनातनः ।

या नारी भर्तृ परमा भवे द्भर्तृव्रता सती ॥ ५२ ॥
पति र्हि देवो नारीणां पति र्बन्धुः पति र्गतिः ।
पत्या गतिः समा नास्ति दैवतं वा यथा पतिः ॥ ५३ ॥
पति प्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत् ।
अहं स्वर्गं न हीच्छेयं त्वय्य ऽप्रीते महेश्वर ॥ ५४ ॥
यद्य कार्य मधर्मं वा यदि वा प्राण नाशनम् ।
पति र्ब्रूयाद् दरिद्रो वा व्याधितो वा कथञ्च न ॥ ५५ ॥
आपन्नो रिपु संस्थो वा ब्रह्म शापार्दितोऽपि वा ।
आपद्धर्मा ननुप्रेक्ष्य तत् कार्य मविशङ्कया ॥ ५६ ॥
एष देव मया प्रोक्तः स्त्री धर्मो वचनात्तव ।
यात्वेवं भाविनी नारी सा पतिव्रत भागिनी ॥ ५७ ॥

---

## अथ पतिव्रता माहात्म्य पर्व ।

युधि० उ० नात्मान मनुशोचामि नेमान् भ्रातॄन् महामुने ।
महाभा० वन० हरणञ्चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १ ॥
अ० २९२ द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुन र्वनाच्चापि हृता बलात् ॥ २ ॥
अस्ति सीमन्तिनी काचिद् दृष्टपूर्वापि वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३ ॥
मार्कं० उ० शृणु राजन् कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ॥ ४ ॥
आसीन् मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ ५ ॥
यज्वा दानपति र्दक्षः पौरजान पदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्व भूतहिते रतः ॥ ६ ॥
क्षमावान ऽनपत्यश्च सत्य वाग्वि जितेन्द्रियः ।
अतिक्रान्तेन वयसा सन्ताप मुपजग्मिवान् ॥ ७ ॥
अपत्योत्पादनार्थञ्च तीव्रं नियममास्थितः ।

काले नियमिताहारो ब्रह्मचारी जितेन्द्रियः ॥ ८ ॥
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ९ ॥
एतेन नियमे नासीद् वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ १० ॥
रूपिणी तु तदा राजन् दर्शयामास तं नृपम् ।
अग्निहोत्रात् समुत्थाय हर्षेण महतान्विता ।
उवाच चैनं वरदा वचनं पार्थिवं तदा ॥ ११ ॥
सावि॰उ॰ ब्रह्मचर्य्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च भक्त्या च तुष्टाऽस्मि तव पार्थिव ॥ १२ ॥
वरं वृणीष्वाश्वपते मद्रराज यदीप्सितम् ।
न प्रमादश्च धर्मेषु कर्त्तव्यस्ते कथञ्चन ॥ १३ ॥
अश्व॰उ॰ अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभाजनाः ॥ १४ ॥
तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहम् ।
सन्तानं परमो धर्म इत्याहुर्मां द्विजातयः ॥ १५ ॥
सावित्र्यु॰ पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थं मुक्तो वै भगवांस्ते पितामहः ॥ १६ ॥
प्रसादाच्चैव तस्मात्ते स्वयम्भु विहिताद्भुवि ।
कन्या तेजस्विनी सौम्या क्षिप्रमेव भविष्यति ॥ १७ ॥
उत्तरञ्च न ते किञ्चिद् व्याहर्त्तव्यं कथञ्चन ।
पितामह निसर्गेण तुष्टा ह्येतद् ब्रवीमि ते ॥ १८ ॥
मार्क॰उ॰ स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति ।
अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ॥ १९ ॥
स्वराज्ये चा वसद्वीरः प्रजा धर्मेण पालयन् ।
कस्मिंश्चित्तु गते काले स राजा नियत व्रतः ॥ २० ॥
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ।
राजपुत्र्यास्तु गर्भः स मालव्या भरतर्षभ ॥ २१ ।

व्यवर्द्धत तदा शुक्ले तारापतिरिवाम्बरे ।
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ॥ २२ ॥
क्रियाश्च तस्या मुदितश्चक्रे स नृपसत्तम. ।
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ॥ २३ ॥
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ।
सा विग्रहवतीव श्री र्व्यवर्द्धत नृपात्मजा ॥ २४ ॥
कालेन चापि सा कन्या यौवनस्था बभूव ह ।
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ॥ २५ ॥
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ।
तान्तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ॥ २६ ॥
न कश्चिद्वरयामास तेजसा प्रतिवारितः ।
अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ॥ २७ ॥
हुत्वाग्निं विधिवद्विप्रान् वाचयामास पर्वणि ।
ततः सुमनसः शेषः प्रतिगृह्य महात्मनः ॥ २८ ॥
पितुः समीपमगमद्देवी श्रीरिव रूपिणी ।
साभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ॥ २९ ॥
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमास्थिता ।
यौवनस्थान्तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानाञ्च वरैर्नृपतिर्दुःखितोऽभवत् ॥ ३० ॥
राजोवाच पुत्रि प्रदानकालस्ते न च कश्चित् वृणोति माम् ।
स्वयमन्विच्छ भर्त्तारं गुणैः सदृशमात्मनः ॥ ३१ ॥
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३२ ॥
श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ३३ ॥
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः ।
मृते भर्त्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३४ ॥
इदं मे वचनं श्रुत्वा भर्त्तुरन्वेषणे त्वर ।

देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३५ ॥
मार्क० उ० एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रञ्च गम्यतामित्यचोदयत् ॥ ३६ ॥
साभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामा ऽविचारितम् ॥ ३७ ॥
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३८ ॥
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३९ ॥
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तंतं देशं जगाम ह ॥ ४० ॥

---

मार्क० उ० अ० २९३ अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १ ॥
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २ ॥
नारदेन सहासीनं सा दृष्ट्वा पितरं तदा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३ ॥
नारद उ० क्व गताभूत् सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि ॥ ४ ॥
अश्व० उ० कार्य्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
एतस्याः शृणु देवर्षे भर्त्तारं योऽनया वृतः ॥ ५ ॥
मार्क० उ० सा ब्रूहि विस्तरेणेति पित्रा सञ्चोदिता शुभा ।
दैवतस्येव वचनं प्रतिगृह्येद मब्रवीत् ॥ ६ ॥
सावित्र्यु० आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ॥ ७ ॥
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्ववैरिणा ॥ ८ ॥

स बालवत्सया सार्द्धं भार्य्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९ ॥
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्त्तेति मनसा वृतः ॥ १० ॥

नारद उ॰ अहो वत महत् पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥ ११ ॥
सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
तथास्य ब्राह्मणाश्चक्रु र्नामैतत् सत्यवानिति ॥ १२ ॥
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृण्मयान् ।
चित्रेऽपि विलिखत्यश्वां श्चित्राश्व इति चोच्यते ॥ १३ ॥

राजोवाच अपीदानीं स तेजस्वी बुद्धिमान् वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान् पितृवत्सल ॥ १४ ॥

नारद उ॰ विवस्वानिव तेजस्वी वृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥ १५ ॥

अश्व॰ उ॰ अपि रामात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाप्यथवा प्रियदर्शनः ॥ १६ ॥

नारद उ॰ सांकृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।
ब्रह्मण्यः सत्यवादी च शिविरौशीनरो यथा ॥ १७ ॥
ययातिरिव चोदारः सोमवत् प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १८ ॥
स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ।
स मैत्रः सोऽनसूयश्च स ह्रीमान् धृतिमांश्च सः ॥ १९ ॥
नित्यशश्चार्ज्जवं तस्मिन् स्थितिस्तस्यै च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ २० ॥

अश्व॰ उ॰ गुणैरुपेतं सर्वैस्तं भगवन् प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१ ॥

नारद उ॰ एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन न शक्यश्चातिवर्त्तितुम् ॥ २२ ॥
एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान् ।

सम्वत् सरेण क्षीणायु र्देहन्यासं करिष्यति ॥ २३ ॥

राजोवाच एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ २४ ॥
यथा मे भगवानाह नारदो देवसत्कृतः ।
सम्वत् सरेण सोऽल्पायु र्देहन्यासं करिष्यति ॥ २५ ॥

सावित्र्यु० सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥ २६ ॥
दीर्घायुरथ वाल्पायु सगुणो निर्गुणोऽपि वा ।
सकृद्‌वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम् ॥ २७ ॥
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात् प्रमाणं मे मनस्ततः ॥ २८ ॥

नारद उ० स्थिरा बुद्धि र्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥ २९ ॥
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ३० ॥

राजोवाच अविचाल्य मेतदुक्तं तथ्यञ्च भवता वचः ।
करिष्याम्येत देवञ्च गुरुर्हि भगवन् मम ॥ ३१ ॥

नारद उ० अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत् सर्वेषां भद्रमस्तु वः ॥ ३२ ॥

मार्क० उ० एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सज्जं वैवाहिक मकारयत् ॥ ३३ ॥

---

मार्क० उ० अथ कन्या प्रदाने स तमेवार्थं विचिंतयन् ।
अ० २६१ समानिन्ये च तत् सर्वं भाण्डं वैवाहिकं नृप ॥ १ ॥
ततो वृद्धान् द्विजान् सर्वा नृत्विजः सपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ २ ॥
मेध्यारण्य स गत्वा च द्युमत्सेना श्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्द्धं राजर्षिम् तमुपागमत् ॥ ३ ॥

तत्रा पश्यन् महाभागं शालवृक्ष मुपाश्रितम् ।
कौश्यां वृष्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४ ॥
स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्म निवेदनम् ॥ ५ ॥
तस्यार्घ्य मासनंचैव गाञ्चावेद्य स धर्मवित् ।
किमागमन मित्येवं राजा राजानमब्रवीत् ॥ ६ ॥
तस्य सर्वमभिप्राय मिति कर्त्तव्यताञ्च ताम् ।
सत्यवंतं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७ ॥
अश्वपतिरु० सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे ॥ ८ ॥
द्युमत्० उ० च्युताः स्म राज्याद्वनवास माश्रिताश्चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे निवत्स्यते क्लेशमिमं सुता तव ॥ ९ ॥
अश्वपतिरु० सुखञ्च दुःखञ्च भवाभवात्मकं यदा विजानाति सुताहमेव च ।
न मद्विधे युज्यति वाक्यमीदृशं विनिश्चये नाभिगतोऽस्मि ते नृप १०
आशां नार्हसि मे हन्तुं सौहृदात् प्रणतस्य च ।
अभितुष्ट गतं प्रेम्णा प्रत्याख्यातुं न मार्हसि ॥ ११ ॥
अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्य्यां सत्यवतः सतः ॥ १२ ॥
द्युमत्० उ० पूर्वमेवाभि लषितः सम्बन्धो मे त्वया सह ।
भ्रष्ट राज्यस्त्वह मिति तत एतत् विचारितम् ॥ १३ ॥
अभिप्रायस्त्वयं यो मे पूर्वमेवाभि काङ्क्षितः ।
स निर्वर्त्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ॥ १४ ॥
ततः सर्वान् समानाय्य द्विजानाश्रम वासिनः ।
यथाविधि समुद्वाहं कारयामासतु र्नृपौ ॥ १५ ॥
दत्वा त्वश्वपतिः कन्यां यथार्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६ ॥
सत्यवानपि तां भार्य्यां लब्ध्वा सर्व गुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १७ ॥

गते पितरि सर्वाणि सन्न्यस्याभरणानि सा।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १८ ॥
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ १९ ॥
श्वश्र्वाः शरीरसत्कारैः सर्वैराच्छादनादिभिः।
श्वशुरं देवसत्कारैर्वाचः संयमनेन च ॥ २० ॥
तथैव प्रियवादेन नैपुण्येन शमेन च।
रहश्चैवोपचारेण भर्त्तारं पर्य्यतोषयत् ॥ २१ ॥
एवं तत्राश्रमे तेषां तदा निवसतां सताम्।
कालस्तपस्यतां कश्चिदपाक्रामत भारत ॥ २२ ॥
सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशम्।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्त्तते ॥ २३ ॥

---

मार्कं० उ० अ० २९४ ततः काले बहुतिथे व्यतिक्रान्ते कदाचन।
प्राप्तः स कालो मर्त्तव्यं यत्र सत्यवता नृप ॥ १ ॥
गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते।
यद्वाक्यं नारदेनोक्तं वर्त्तते हृदि नित्यशः ॥ २ ॥
चतुर्थेऽहनि मर्त्तव्यमिति सञ्चिन्त्य भाविनी।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताभवत् ॥ ३ ॥
तं श्रुत्वा नियमं तस्या भृशं दुःखान्वितो नृपः।
उत्थाय वाक्यं सावित्रीमब्रवीत् परिसान्त्वयन् ॥ ४ ॥
द्युमत्० उ० अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे।
तिसृणां वसतीनां हि स्थानं परमदुश्चरम् ॥ ५ ॥
सावित्र्युवाच न कार्य्यस्तात सन्तापः पारयिष्याम्यहं व्रतम्।
व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ६ ॥
द्युमत्० उ० व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथञ्चन।
पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ७ ॥
मार्कं० उ० एवमुक्त्वा द्युमत्सेनो विरराम महामनाः।

तिष्ठन्ती चैव सावित्री काष्ठभूतेव लक्ष्यते ॥ ८ ॥
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ।
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्त्तत ॥ ९ ॥
अद्य तद्दिवसञ्चेति हुत्वा दीप्तं हुताशनम्।
युगमात्रोदिते सूर्य्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १० ॥
ततः सर्वान् द्विजान् वृद्धान् श्वश्रूं श्वशुरमेव च।
अभिवाद्यानुपूर्व्वेण प्राञ्जलिर्नियता स्थिता ॥ ११ ॥
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२ ॥
एवमस्त्विति सावित्री ध्यानयोगपरायणा।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् ॥ १३ ॥
तं कालं तं मुहूर्त्तञ्च प्रतीक्षन्ती नृपात्मजा।
यथोक्तं नारद वचश्चिन्तयन्ती सुदुःखिता ॥ १४ ॥
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम्।
एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ॥ १५ ॥
श्वशु० उ० व्रतं यथोपदिष्टं तत् तथा तत् पारितं त्वया।
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् । १६ ॥
सावित्र्युवाच अस्तं गते मयादित्ये भोक्तव्यं कृतकामया।
एष मे हृदि सङ्कल्पः समयश्च कृतो मया ॥ १७ ॥
मार्क० उ० एवं सम्भाषमाणायाः सावित्र्या भोजनं प्रति।
स्कन्धे परशुमादाय सत्यवान् प्रस्थितो वनम् ॥ १८ ॥
सावित्री त्वाह भर्त्तारं नैकस्त्वं गन्तुमर्हसि।
सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ॥ १९ ॥
सत्यवानुवाच वनं न गतपूर्वं ते दुःखं पन्थाश्च भाविनी।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ २० ॥
सावित्रीपु० उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः।
गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि ॥ २१ ॥
सत्यवानुवाच यदि ते गमनोत्साहः करिष्यामि तव प्रियम्।

मम त्वामन्त्रय गुरू न मा दोष स्पृशेदयम् ॥ २२ ॥
मार्क० उ० साभिवाद्याब्रवीच्छ्वश्रू श्वशुरञ्च महाव्रता ।
अयं गच्छति मे भर्त्ता फलाहारी महावनम् ॥ २३ ॥
इच्छेय मभ्यनुज्ञाता आर्य्यया श्वशुरेण ह ।
अनेन सह निर्गन्तु न मेऽद्य विरह क्षम ॥ २४ ॥
गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव ।
न निवार्य्यो निवार्य्ये स्यादन्यथा प्रस्थितो वनम् ॥ २५ ॥
युवाभ्या न निवार्य्याह सह यास्यामह वनम् ।
सम्वत्सर किञ्चिदूनो न निष्क्रान्ताहमाश्रमात् ।
वन कुसुमित द्रष्टु पर कौतूहल हि मे ॥ २६ ॥
द्युमत्० उ० यत प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाभ्यर्थनायुक्त मुक्तपूर्व स्मराम्यहम् ॥ २७ ॥
तदेषा लभता काम यथाभिलषित वधू ।
अप्रमादश्च कर्त्तव्य पुत्रि सत्यव्रत पथि ॥ २८ ॥
मार्क० उवाच उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीह हृदयेन विदूयता ॥ २९ ॥
सा वनानि विचित्राणि रमणीयानि सर्वश ।
मयूरगणजुष्टानि ददर्श विपुलेक्षणा ॥ ३० ॥
नदी पुण्यवहाश्चैव पुष्पिताश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्री मधुर वच ॥ ३१ ॥
निरीक्षमाणा भर्त्तार सर्वावस्थ मनिन्दिता ।
मृतमेव हि भर्त्तार काले मुनिवच स्मरन् ॥ ३२ ॥
अनुव्रजन्ती भर्त्तार जगाम मृदुगामिनी ।
द्विधेव हृदय कृत्वा तञ्च कालमवेक्षती ॥ ३३ ॥

---

मार० उ० अथ भार्य्या सहाय स फलान्यादाय वीर्य्यवान् ।
अ० २९६ कठिनं पूरयामास तत काष्ठान्य पातयत् ॥ १ ॥
तस्य पातयत काष्ठ स्वेदो वै समजायत ।

व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ।
सोऽभिगम्य प्रिया भार्य्या मुवाच श्रमपीड़ितः ॥ २ ॥

सत्यवान्० व्यायामेन ममानेन जाता शिरसि वेदना ।
अङ्गानि चैव सावित्रि हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ३ ॥
शूलैरिव शिरो विद्ध मिदं संलक्षयाम्यहम् ।
तत् स्वप्तु मिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ ४ ॥

मार्क० उ० सा समासाद्य सावित्री भर्त्तारमुपगम्य च ।
उत्सङ्गेऽस्य शिर कृत्वा निषसाद महीतले ॥ ५ ॥
तत सा नारदवचो विमृषन्ती तपस्विनी ।
तं मुहूर्त्तं क्षण वेलां दिवसञ्च युयोज ह ॥ ६ ॥
मुहूर्त्तादेव चापश्यत् पुरुष रक्तवाससम् ।
बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ७ ॥
श्यामावदात रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवत पार्श्वे निरीक्षन्तं तमेव च ॥ ८ ॥
तं दृष्ट्वा सहसोत्थाय भर्त्तुर्न्यस्य शनै शिर ।
कृताञ्जलिरुवाचार्त्ता हृदयेन प्रवेपती ॥ ९ ॥

सावित्र्यु० दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्वं किञ्च चिकीर्षसि ॥ १० ॥

यम उवाच पतिव्रतासि सावित्रि तथैव च तपोऽन्विता ।
अतस्त्वामभिभाषामि विद्धि मां त्व शुभे यमम् ॥ ११ ॥
अय ते सत्यवान् भर्त्ता क्षीणायु पार्थिवात्मज ।
नेष्यामि तमहं बद्ध्वा विद्ध्येव तन्मे चिकीर्षितम् ॥ १२ ॥

सावित्र्यु० श्रूयते भगवन् दूतास्तवागच्छन्ति मानवान् ।
नेतु किल भवान् कस्मादागतोऽसि स्वयं प्रभो ॥ १३ ॥

मार्क० उ० इत्युक्त पितृराजस्ता भगवान् स्वचिकीर्षितम् ।
यथावत् सर्वमाख्यातु तत् प्रियार्थं प्रचक्रमे ॥ १४ ॥
अयञ्च धर्मसंयुक्तो रूपवान् गुणसागर ।

नाहो मत् पुरुषैर्नेतुमतोऽस्मि स्वयमागत ॥ १५ ॥
तत सत्यवत कायात् पाशबद्धं वशङ्गतम् ।
अगुष्ठमात्र पुरुष निषचकर्ष यमो बलात् ॥ १६ ॥
तत समुद्धृतप्राण गतश्वास हतप्रभम् ।
निर्विचेष्ट शरीर तद् बभूवाप्रियदर्शनम् ॥ १७ ॥
यमस्तु त ततो बद्ध्वा प्रयातो दक्षिणामुख ।
सावित्री चैव दु खार्त्ता यममेवान्वगच्छत ।
नियम व्रतसंसिद्धा महाभागा पतिव्रता ॥ १८ ॥
यम उ० निवर्त्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम् ।
कृत भर्तुस्त्वया नृण्यं यावद्गम्य गत त्वया ॥ १९ ॥
सावि०पु० यत्र मे नियत भर्त्ता स्वय वा यत्र गच्छति ।
मया च तत्र गन्तव्यमेष धर्म सनातन ॥ २० ॥
तपसा गुरुभक्त्या च भर्त्तु स्नेहाद् व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गति ॥ २१ ॥
प्राहु साप्तपद मैत्र बुधास्तत्त्वार्थ दर्शिन ।
मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ २२ ॥
नानात्मवन्तस्तु वने चरन्ति धर्मञ्च वासञ्च परिश्रमञ्च ।
विज्ञानतोधर्ममुदाहरन्ति तस्मात् सन्तो धर्ममाहु प्रधानम्
एकस्य धर्मेण सता मतेन सर्वे स्म त मार्ग मनुप्रपन्ना ।
मावैद्वितीयमातृतीयञ्चयाच्छेत्तस्मात्सन्तोधर्ममाहु प्रधा
यम उवाच निवर्त्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतु युक्त्य
वर वृणीष्वेह विनास्य जीवितं ददामि ते सर्वमनिन्दिते व
सावित्र्युवाच च्युत च राज्याद्वनवासमाश्रितो विनष्टचक्षु श्वशुरो ममाश्र
स लब्धचक्षुर्बलवान् भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभ ।
यम उवाच ददानि तेऽह तमनिन्दिते वर यथा त्वयोक्तं भविता च तत
तथाध्वना ग्लानिमिवोपलक्षये निवर्त्त गच्छस्व न ते श्रमो भवे
सावि०पु० श्रम कुतो भर्तृसमीपतो हि मे यतो हि भर्त्ता मम सा गति
यत पतिं नेष्यसि तत्र मे गति सुरेश भूयश्च वचो निबोध
सता सकृत् सङ्गतमीप्सितं पर तत पर मित्रमिति प्रचक्षते

न चाफलं सत्पुरुषेण सङ्गतं ततः सतां सन्निवसेत् समागमे ॥२९॥

यम उवाच मनोऽनुकूलं बुधबुद्धिवर्द्धनं त्वया यदुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ।३०

सावित्र्युवाच हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः ।
जह्यात् स्वधर्मान्न च मे गुरुर्यथा द्वितीयमेतद्वरयामि ते वरम् ।३१

यम उवाच स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात् परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे निवर्त्त गच्छस्व न ते श्रमो भवेत् ।३२

सावित्र्युवाच प्रजास्त्वयैता नियमेन संयता नियम्य चैता नयसे निकामया ।
ततो यम त्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया ।३३

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥ ३४ ॥
एवम्प्रायश्च लोकोऽयं मनुष्या भक्तिपेशलाः ।
सन्तस्त्वे चाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३५ ॥

यम उवाच पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि ३६

सावित्र्युवाच ममानपत्यः पृथिवीपतिः पिता भवेत् पितुः पुत्रशतं तथौरसम् ।
कुलस्य सन्तानकरञ्च यद्भवेत् तृतीयमेतद्वरयामि ते वरम् ॥ ३७ ॥

यम उवाच कुलस्य सन्तानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे निवर्त्त दूरं हि पथस्त्वमागता ॥३८॥

सावित्र्युवाच न दूरमेतन्मम भर्तृसन्निधौ मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च । ३९ ।
विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्मेण चरन्ति ताः प्रजास्ततस्तवेहेश्वर धर्मराजता ॥ ४० ॥
आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात् सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ ४१ ॥
सौहृदात् सर्वभूतानां विश्वासो नाम जायते ।
तस्मात् सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ४२ ॥

यम उवाच उदाहृतं ते वचनं यदङ्गने शुभे न तादृक् त्वदृते श्रुतं मया ।
अनेन तुष्टोऽस्मि विनास्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ।४३

सावित्र्युवाच ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत् कुलोद्वहम्।
शतं सुतानां बलवीर्य्यशालिनामिदं चतुर्थं वरयामि ते वरम्॥४४
यम उवाच शतं सुतानां बलवीर्य्यशालिनां भविष्यति प्रीतिकरं तवायले।
परिश्रमस्ते न भवेन् नृपात्मजे निवर्त्त दूरं हि पथस्त्वमागता।४५
सावित्र्युवाच सतां सदा शाश्वत धर्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति।
सतां सद्भिर्नाफलः सङ्गमोऽस्ति सद्भयो भयं नानुवर्त्तंति संतः।४६
संतो हि सत्येन नयंति सूर्य्यं संतो भूमिं तपसा धारयंति।
संतो गतिर्भूत भव्यस्य राजन् सतां मध्ये नावसीदंति संतः॥४७॥
आर्य्यजुष्ट मिदं वृत्त मिति विज्ञाय शाश्वतम्।
सन्तः परार्थं कुर्वाणा नावेक्षंति परस्परम्॥ ४८॥
न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः।
यस्मादेतन् नियतं सत्सु नित्यं तस्मात् संतो रक्षितारो भवंति।४९
यम उवाच यथा यथा भाषसि धर्म संहितं मनोऽनुकूलं सुपदं महार्थवत्।
तथा तथा मे त्वयि भक्ति रुत्तमा वरं वृणीष्वा प्रतिमं पतिव्रते।५०
सावित्र्युवाच न तेऽपवर्गः सुकृता द्विना कृतस्तथा यथान्येषु वरेषु मानद।
वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना॥५१॥
न कामये भर्तृ विना कृता सुखं न कामये भर्तृ विनाकृता दिवम्।
न कामयेभर्तृ विनाकृताश्रियं न भर्तृहीनाव्यवसामिजीवितुम्।५२
वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः।
वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति॥ ५३॥
मार्क॰ उवाच तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः।
धर्मराजः प्रहृष्टात्मा सावित्री मिद मब्रवीत्॥ ५४॥
यम॰ उ॰ एष भद्रे मया मुक्तो भर्त्ता ते कुलनन्दिनि।
अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति॥ ५५॥
चतुर्वर्ष शतायुश्च त्वया सार्द्ध मवाप्स्यति।
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति॥ ५६॥
त्वयि पुत्र शतं चैव सत्यवान् जनयिष्यति।
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः॥ ५७॥
ख्यातास्त्वन्नाम धेयाश्च भविष्यन्तीह शाश्वताः।

पितुश्च ते पुत्र शतं भविता तव मातरि ॥ ५८ ॥
मालव्यां मालवा नाम शाश्वताः पुत्र पौत्रिणः ।
भ्रातरस्ते भविष्यंति क्षत्रियास्त्रिदशोपमाः ॥ ५९ ॥
मार्कं० उ० एवं तस्यै वरं दत्वा धर्मराजः प्रतापवान् ।
निवर्त्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ ६० ॥
सावित्र्यपि यमे याते भर्त्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्य भर्त्तुः श्यावं कलेवरम् ॥ ६१ ॥
सा भूमौ प्रेक्ष्य भर्त्तार मुपसृत्यौप गृह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुप विवेश ह ॥ ६२ ॥
संज्ञाञ्च स पुनर्लब्ध्वा सावित्री मभ्यभाषत ।
प्रोष्यागत इव प्रेम्ना पुनः पुनरुदीक्ष्य वै ॥ ६३ ॥
सत्यवानुवाच सुचिरं तव सुप्तोऽस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषः श्यामो योऽसौ मां सञ्चकर्ष ह ॥ ६४ ॥
सावित्र्युवाच सुचिरं त्वं प्रसुप्तोऽसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देवः प्रजा संयमनो यमः ॥ ६५ ॥
विश्रांतोऽसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढ़ां पश्य शर्वरीम् ॥ ६६ ॥
मार्कं० उ० उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनांतांश्च निरीक्ष्योवाच सत्यवान् ॥ ६७ ॥
फलाहारोऽस्मि निष्क्रांतस्त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाभवत् ॥ ६८ ॥
शिरोभितापसन्तप्तः स्थातुं चिरमशक्नुवन् ।
ततोत्सङ्गे प्रसुप्तोऽस्मि इति सर्वं स्मरे शुभे ॥ ६९ ॥
त्वयोप गूढ़स्य च मे निद्रयोपहृतं मनः ।
ततो ऽपश्यं तमो घोरं पुरुषञ्च महौजसम् ॥ ७० ॥
तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नेन यदि वा दृष्टो यदि वा सत्यमेव तत् ॥ ७१ ॥
तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्त माख्यास्यामि नृपात्मज ॥ ७२ ॥

उत्तिष्ठोत्तिष्ठ भद्रन्ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेय निवृत्तश्च दिवाकर ॥ ७३ ॥
नक्तञ्चराश्चरन्त्येते हृष्टा क्रूरा भिभाषिण ।
श्रूयन्ते पर्णशब्दाश्च मृगाणाञ्चरता वने ॥ ७४ ॥
एतान् घोराञ्छि वानादान् दिश दक्षिण पश्चिमाम् ।
आस्थाय विरुवन्त्युग्रा कम्पयन्त्यो मनो मम ॥ ७५ ॥
सत्यवानुवाच वन प्रतिभयाकार घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थान गन्तुञ्चैव न शक्ष्यसि ॥ ७६ ॥
सावित्र्युवाच अस्मिन्नद्य वने दग्धे शुष्कवृक्ष स्थितो ज्वलन् ।
वायुना धम्यमानोऽत्र दृश्यतेऽग्नि क्वचित् क्वचित् ॥ ७७ ॥
ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वत ।
काष्ठानीमानि सन्तीह जहि सन्तापमात्मन ॥ ७८ ॥
यदि नोत्सहसे गन्तु सरुज त्वा हि लक्षये ।
न च ज्ञास्यसि पन्थान तमसा सवृते वने ॥ ७९ ॥
श्व प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेका रुचित यदि तेऽनघ ॥ ८० ॥
सत्यवानुवाच शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि सङ्गम त्वत्प्रसादजम् ॥ ८१ ॥
न कदाचिद्विकाले हि गतपूर्वो मयाश्रम ।
अनागताया सन्ध्याया माता मे प्ररुणद्धि माम् ॥ ८२ ॥
दिवापि मयि निष्क्रान्ते सन्तप्येते गुरू मम ।
विचिनोति हि मा तात सहैवाश्रम वासिभि ॥ ८३ ॥
मात्रा पित्रा च सुभृश दु खिताभ्या मह पुरा ।
उपालब्धश्च बहुशश्चिरेणा गच्छसीति हि ॥ ८४ ॥
कात्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद्दुख भविष्यति ॥ ८५ ॥
पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ ।
भृश सुदु खितौ वृद्धौ बहुश प्रीति सयुतौ ॥ ८६ ॥

त्वया हीनौ न जीवाव मुहूर्त्तमपि पुत्रक।
यावद्‌ध्रियेते पुत्र तावन्नौ जीवितं ध्रुवम्॥ ८७॥
वृद्धयोरन्धयोर्यष्टिस्त्वयि वंशः प्रतिष्ठितः।
त्वयि पिण्डश्च कीर्त्तिश्च सन्तानश्चावयोरिति॥ ८८॥
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी।
अहञ्च संशयं प्राप्तः कृच्छ्रमापदमास्थितः॥ ८९॥
मातापितृभ्यां हि विना नाहं जीवितु मुत्सहे।
व्यक्तमा कुलया बुद्‌ध्या प्रज्ञाचक्षुः पिता मम॥ ९०॥
एकैकमस्यां वेलायां पृच्छत्या श्रमवासिनाम्।
नात्मान मनुशोचामि यथाहं पितरं शुभे॥ ९१॥
भर्त्तारञ्चाप्यनुगतां मातरं परिदुर्बलाम्।
मत्कृतेन हि तावद्य सन्तापं परमेष्यतः॥ ९२॥
जीवन्ता वनुजीवामि भर्त्तव्यौ तौ मयेति ह।
तयोः प्रियं मे कर्त्तव्य मिति जानामि चाप्यहम्॥ ९३॥
मार्कण्डेय उ॰ एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरु प्रियः।
उच्छ्रित्य बाहू दुःखार्त्तः सुस्वरं प्ररुरोद ह॥ ९४॥
ततोऽब्रवीत्तथा दृष्ट्वा भर्त्तारं शोककर्षितम्।
प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी॥ ९५॥
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि।
श्वश्रू श्वशुरभर्त्तॄणां मम पुण्यास्तु शर्वरी॥ ९६॥
न स्मराम्युक्तपूर्वां वै स्वैरेष्वप्यनृतां गिरम्।
तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम॥ ९७॥
सत्यवानुवाच कामये दर्शनं पित्रोर्याहि सावित्रि मा चिरम्।
पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम्॥ ९८॥
न जीविष्ये वरारोहे सत्येनात्मानमालभे।
यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्त मिच्छसि।
मम प्रियं वा कर्त्तव्यं गच्छावाश्रममन्तिकात्॥ ९९॥
मार्कण्डेय उ॰ सावित्री तत उत्थाय केशान् संयम्य भाविनी।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै॥ १००॥

उत्थाय सत्यवांश्चापि विसृज्याङ्गानि पाणिना ।
सर्वा दिशः समालोक्य कठिने दृष्टि मादधे ॥ १०१ ॥
तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थ मेतत्ते नेष्यामि परशुन्त्वहम् ॥ १०२ ॥
कृत्वा कठिन भारं सा वृक्षशाखा वलम्बिनम् ।
गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत् ॥ १०३ ॥
वामे स्कंधे तु वामोरुर्भर्तुर्बाहुं निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥ १०४ ॥
सत्यवानुवाच अभ्यास गमनाद्भीरु पन्थानो विदिता मम ।
वृक्षा तरालोकितया ज्योत्स्नया चापि लक्षये ॥ १०५ ॥
आगतौ स्वः पथा येन फलान्यत्र चितानि च ।
यथा गतं शुभे गच्छ पन्थानं मा विचारय ॥ १०६ ॥
पलाशखण्डे चैतस्मिन् पंथा व्यावर्त्तते द्विधा ।
तस्योत्तरेण य पंथा स्तेन गच्छ त्वरस्व च ॥ १०७ ॥
स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरा वुभौ ।
ब्रुवन्नेव त्वरायुक्तः संप्रदायाश्रमं प्रति ॥ १०८ ॥

---

मार्क॰ उ॰ अ॰ २९७ एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।
लब्ध चक्षुः प्रसन्नायां दृष्टां सर्वं ददर्श ह ॥ १ ॥
स सर्वानाश्रमान् गत्वा शैव्यया सह भार्य्यया ।
पुत्र हेतोः परामार्त्तिं जगाम भरतर्षभ ॥ २ ॥
तावाश्रमान्नदीश्चैव वनानि च सरांसि च ।
तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः ॥ ३ ॥
श्रुत्वा शब्दन्तु यं कञ्चिदुन्मुखौ सुतशङ्कया ।
सावित्र्या सहितोऽभ्येति सत्यवानित्यभाषताम् ॥ ४ ॥
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितो क्षितैः ।
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ॥ ५ ॥

ततोऽभिसृत्य ते विप्रैः सर्वैं राश्रमवासिभिः।
परिवार्य्य समाश्वास्य तावानीतौ स्वमाश्रमम्॥ ६॥
तत्र भार्य्यासहायः स वृतो वृद्धैस्तपोधनैः।
आश्वासितो विचित्रार्थैः पूर्वराज्ञां कथाश्रयैः॥ ७॥
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया।
बाल्ये वृत्तानि पुत्रस्य स्मरन्तौ भृशदुःखितौ॥ ८॥
पुनरुक्त्वा च करुणां वाचं तौ शोककर्षितौ।
हा पुत्र! हा साध्वि वधु! क्वासि क्वासीत्यरोदताम्।
ब्राह्मणः सत्यवाक् तेषामुवाचेदं तयो र्वचः॥ ९॥
सुवर्चा उवाच यथास्य भार्य्या सावित्री तपसा च दमेन च।
आचारेण च संयुक्ता तथा जीवति सत्यवान्॥ १०॥
गौतम उवाच वेदाः साङ्गा मयाऽधीता स्तपो मे सञ्चितं महत्।
कौमारं ब्रह्मचर्य्यञ्च गुरवोऽग्निश्च तोषिताः॥ ११॥
समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे।
वायुभक्षोपवासश्च कृतो मे विधिवत् सदा॥ १२॥
अनेन तपसा वेद्मि सर्वं परचिकीर्षितम्।
सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति॥ १३॥
शिष्य उवाच उपाध्यायस्य मे वक्त्राद् यथा वाक्यं विनिःसृतम्।
नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान्॥ १४॥
ऋषय ऊचुः यथास्य भार्य्या सावित्री सर्वैरेव सुलक्षणैः।
अवैधव्यकरै र्युक्ता तथा जीवति सत्यवान्॥ १५॥
भरद्वाज उ० यथास्य भार्य्या सावित्री तपसा च दमेन च।
आचारेण च संयुक्ता तथा जीवति सत्यवान्॥ १६॥
दाल्भ्य उ० यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम्।
गताहारमकृत्वा च तथा जीवति सत्यवान्॥ १७॥
माण्डव्य उ० यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः।
पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान्॥ १८॥
धौम्य उवाच सर्वैर्गुणै रुपेत स्ते यथा पुत्रो जनप्रियः।
दीर्घायु र्लक्षणोपेत स्तथा जीवति सत्यवान्॥ १९॥

मार्कण्डेय उ० एवमाश्वासित स्तैस्तु सत्यवाग्भि स्तपस्विभि ।
तास्तान् निगणयन् सर्वा स्तत स्थिर इवाभवत् ॥ २० ॥
ततो मुहूर्त्तात् सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रम रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१ ॥
ब्राह्मणा ऊचु पुत्रेण सङ्गत तान्तु चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वय वै पृच्छामो वृद्धिं वै पृथिवीपते ॥ २२ ॥
समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुष श्चात्मनो लाभात् त्रिभि र्दिष्ट्या विवर्द्धसे ॥ २३ ॥
सवरैरस्माभिरुक्त यत् तथा तन्नात्र सशय ।
भूयो भूय समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २४ ॥
ततोऽग्नि तत्र सज्वाल्य द्विजास्ते सर्व एव हि ।
उपासाञ्चक्रिरे पार्थ द्युमत्सेन महीपतिम् ॥ २५ ॥
शैब्या च सत्यवांश्चैव सावित्री चैकत स्थिता ।
सर्वैस्तैरभ्यनुज्ञाता विशोका समुपाविशन् ॥ २६ ॥
ततो राज्ञा सहासीना सर्वे ते वनवासिन ।
जातकौतूहला पार्थ पप्रच्छुर्नृपते सुतम् ॥ २७ ॥
ऋषय ऊचु प्रागेव नागत कस्मात् सभार्य्येण त्वया विभो ।
विरात्रे चागत कस्मात् कोऽनुबन्धस्तवाभवत् ॥ २८ ॥
सन्तापित पिता माता वयञ्चैव नृपात्मज ।
कस्मादिति न जानीमस्तत् सर्वं वक्तुमर्हसि ॥ २९ ॥
सत्यवानुवाच पित्राहमभ्यनुज्ञात सावित्रीसहितो गत ।
अथ मेऽभूच्छिरे दुख वने काष्ठानि भिन्दत ३० ॥
सुप्तश्चाह वेदनया चिरमित्युपलक्षये ।
तावत् काल न च मया सुप्तपूर्वं कदाचन ॥ ३१ ॥
सर्वेषामेव भवता सन्तापो मा भवेदिति ।
अतो विरात्रागमन नान्यदस्तीह कारणम् ॥ ३२ ॥
गौतम उवाच अकस्माच्चक्षुष प्राप्तिर्द्युमत्सेनस्य ते पितु ।
नास्य त्व कारण वेत्थि सावित्री वक्तुमर्हति ॥ ३३ ॥
श्रोतुमिच्छामि सावित्रि त्व हि वेत्थ परावरम् ।

त्वां हि जानामि सावित्रीं सावित्रीमिव तेजसा ॥ ३४ ॥
त्वमत्र हेतुं जानीषे तस्मात् सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किञ्चिदत्र वदस्व नः ॥ ३५ ॥
सावित्र्युवाच एवमेतद्यथा वेत्थ सङ्कल्पो नान्यथा हि वः ।
न हि किञ्चिद् रहस्यं मे श्रूयतां तथ्यमेव तत् ॥ ३६ ॥
मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ३७ ॥
सुप्तञ्चैनं यमः साक्षादुपागच्छत् सकिङ्करः ।
स एनमनयद् बद्ध्वा दिशं पितृनिषेविताम् ॥ ३८ ॥
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ३९ ॥
चक्षुषी च स्वराज्यञ्च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणाञ्चात्मन शतम् ॥ ४० ॥
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थन्तु मया चीर्णन्त्विदं व्रतम् ॥ ४१ ॥
एतत् सर्वं मयाख्यातं कारणं विस्तरेण वः ।
यथावृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ४२ ॥
ऋषय ऊचुः निमज्जमानं व्यसनैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं समुद्धृतं साध्वि पुनः कुलीनया ॥ ४३
मार्क० व० तथा प्रशस्य ह्यभिपूज्य चैव वरस्त्रियं तामृषयः समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा शिवेन जग्मुर्मुदिताः स्वमालयम् ॥ ४४

---

मार्क० व० अ० २९८ तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपूर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ १ ॥
तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन् कथयन्त पुनः पुनः ॥ २ ॥
ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप ।
आचख्युर्निहतञ्चैव स्वेनामात्येन तं द्विषम् ॥ ३ ॥

तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवम् ।
न्यवेदयन् यथावृत्तं विद्रुतञ्च द्विषद्बलम् ॥ ४ ॥
ऐकमत्यञ्च सर्वस्य जनस्याथ नृपं प्रति ।
सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५ ॥
अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।
प्राप्तानीमानि यानानि चतुरङ्गञ्च ते बलम् ॥ ६ ॥
प्रयाहि राजन् भद्रन्ते घुष्टस्ते नगरे जयः ।
अध्यास्व चिररात्राय पितृपैतामहं पदम् ॥ ७ ॥
चक्षुष्मन्तञ्च तं दृष्ट्वा राजानं वपुषान्वितम् ।
मूर्द्ध्ना निपतिताः सर्वे विस्मयोत्फुल्ललोचनाः ॥ ८ ॥
ततोऽभिवाद्य तान् वृद्धान् द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ ९ ॥
शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृतः ॥ १० ॥
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रञ्चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ ११ ॥
ततः कालेन महता सावित्र्याः कीर्त्तिवर्द्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्त्तिनाम् ॥ १२ ॥
भ्रातॄणां सोदराणाञ्च तथैवास्याभवत् शतम् ।
मद्राधिपस्याश्वपते मालव्यां सुमहद्बलम् ॥ १३ ॥
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलञ्च सावित्र्या सर्वं कृच्छ्रात् समुद्धृतम् ॥ १४ ॥
तथैवैषापि कल्याणी द्रौपदी शीलसम्मता ।
तारयिष्यति वः सर्वान् सावित्रीव कुलाङ्गना ॥ १५ ॥
वैशम्पायन उ॰ एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन् काम्यके न्यवसत् तदा ॥ १६ ॥
यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ॥ १७ ॥

---

## अनसूया सीता संवादः ।

अयो० सर्ग ११७ सोऽत्रे राश्रम मासाद्य तं ववन्दे महायशाः ।
तं चापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत ॥ ५ ॥
स्वयमातिथ्य-मादिश्य सर्वमस्य सुसत्कृतम् ।
सौमित्रिं च महाभागं सीतां च समसान्त्वयत् ॥ ६ ॥
पत्नीं च समनु प्राप्तां वृद्धा मामंत्र्य सत्कृतान् ।
सांत्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥ ७ ॥
अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
प्रतिगृह्णीष्व वैदेही मब्रवीदृषि सत्तमः ॥ ८ ॥
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ।
दश वर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ ९ ॥
यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता ।
उग्रेण तपसा युक्ता नियमैश्चाप्य लंकृता ॥ १० ॥
दश वर्ष सहस्राणि यया तप्तं महत्तपः ।
अनसूया व्रतैस्तात प्रत्यूहाश्च निबर्हिताः ॥ ११ ॥
देवकार्ये निमित्तं च यया संत्वरमाणया ।
दशरात्रं कृतारात्रिः सेयं मातेव ते ऽनघ ॥ १२ ॥
तामिमां सर्व भूतानां नमस्कार्यां तपस्विनीम् ।
अभिगच्छतु वैदेही वृद्धा मक्रोधनां सदा ॥ १३ ॥
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः ।
सीतामालोक्य धर्मज्ञा मिदं वचन मब्रवीत् ॥ १४ ॥
राजपुत्रि श्रुतं त्वेतन् मुनेरस्य समीरितम् ।
श्रेयोर्थमात्मनः शीघ्र मभिगच्छ तपस्विनीम् ॥ १५ ॥
अनसूयेति या लोके कर्मभिः ख्याति मागता ।
तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् ॥ १६ ॥
सीता त्वेतद्वचः श्रुत्वा राघवस्य यशस्विनी ।
तामत्रि पत्नीं धर्मज्ञा मभिचक्राम मैथिली ॥ १७ ॥
शिथिलां वलितां वृद्धां जरा पांडुरमूर्द्धजाम् ।

सततं वेपमानाङ्गीं प्रयाते कदलीमिव ॥ १८ ॥
तां तु सीता महाभागा मनसूयां पतिव्रताम् ।
अभ्यवादय दव्यग्रा स्वं नाम समुदाहरत् ॥ १९ ॥
अभिवाद्य च वैदेही तापसीं तां दमान्विताम् ।
बद्धाञ्जलि पुटा हृष्टा पर्यपृच्छ दनामयम् ॥ २० ॥
ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् ।
सान्त्वयन्त्य ब्रवीद् वृद्धा दिष्ट्या धर्मं मवेक्षसे ॥ २१ ॥
त्यक्त्वा ज्ञातिजनं सीते मानवृद्धिं च मानिनि ।
अवरुद्धं वने रामं दिष्ट्या त्वमनु गच्छसि ॥ २२ ॥
नगरस्थो वनस्थो वा शुभो वा यदि वा शुभः ।
यासां स्त्रीणां प्रियो भर्त्ता तासां लोका महोदयाः ॥ २३ ॥
दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ।
स्त्रीणामार्य स्वभावानां परमं दैवतं पतिः ॥ २४ ॥
नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् ।
सर्वत्र योग्यं वैदेहि तपः कृतमिवाव्ययम् ॥ २५ ॥
नत्वेव मनुगच्छन्ति गुणदोष मसत् स्त्रियः ।
काम वक्तव्य हृदया भर्तृनाथाश्चरन्ति याः ॥ २६ ॥
प्राप्नुवंत्य यशश्चैव धर्मभ्रंशं च मैथिलि ।
अकार्यवश मापन्नाः स्त्रियो याः खलु तद्विधाः ॥ २७ ॥
त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः ।
स्त्रियः स्वर्गे चरिष्यन्ति यथा पुण्यकृतस्तथा ॥ २८ ॥

---

अयो० सर्ग ११८ सा त्वेव मुक्ता वैदेही त्वनसूया नसूयया ।
प्रतिपूज्य वचो मन्दं प्रवक्तु मुपचक्रमे ॥ १ ॥
नैतदाश्चर्य मार्यायां यन्मां त्वमनु भाषसे ।
विदितं तु ममाप्येत द्यथा नार्याः पतिर्गुरुः ॥ २ ॥
यद्यप्येष भवेद्भर्ता अनार्यो वृत्तिवर्जितः ।
अद्वैधमत्र वर्तव्यं तथाप्येष मया भवेत् ॥ ३ ॥
किं पुनर्यो गुणः श्लाघ्यः सानुक्रोशो जितेन्द्रियः ।

स्थिरानुरागो धर्मात्मा मातृवत् पितृवत् प्रियः ॥ ४ ॥
यां वृत्तिं वर्तते रामः कौशल्यायां महाबलः ।
तामेव नृप नारीणा मन्यासामपि वर्तते ॥ ५ ॥
सकृद्दृष्टा स्वपि स्त्रीषु नृपेण नृपवत्सलः ।
मातृवद्वर्तते वीरो मान मुत्सृज्य धर्मवित् ॥ ६ ॥
आगच्छन्त्याश्च विजनं वनमेवं भयावहम् ।
समाहितं हि मे श्वश्रा हृदये यत् स्थिरं मम ॥ ७ ॥
पाणिप्रदानकाले च यत् पुरा त्वग्नि सन्निधौ ।
अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ॥ ८ ॥
न विस्मृतं तु मे सर्वं वाक्यैः स्वैर्धर्म चारिणि ।
पति शुश्रूषणान्नार्यास्तपो नान्यद्धि धीयते ॥ ९ ॥
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते ।
तथा वृत्तिश्च याता त्वं पतिशुश्रूषया दिवम् ॥ १० ॥
वरिष्ठा सर्वनारीणा मेषा च दिवि देवता ।
रोहिणी न विना चन्द्रं मुहूर्त मपि दृश्यते ॥ ११ ॥
एवं विधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः ।
देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥१२॥
ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ।
शिरस्या प्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३ ॥
नियमैर्विविधै राप्तं तपो हि महदस्ति मे ।
तत् संश्रित्य बलं सीते छन्दये त्वां शुचिव्रते ॥ १४ ॥
उपपन्नं च युक्तं च वचनं तव मैथिलि ।
प्रीता चास्म्युचितां सीते करवाणि प्रियं च किम् ॥ १५ ॥
तस्यास्तु द्वचनं श्रुत्वा विस्मिता मन्दविस्मया ।
कृत मित्यब्रवीत्सीता तपोबल समन्वितम् ॥ १६ ॥
सा त्वेव मुक्ता धर्मज्ञा तया प्रीततरा भवत् ।
सफलं च प्रहर्षन्ते हन्त सीते करोम्यहम् ॥ १७ ॥
इदं दिव्यं वरं माल्यं वस्त्र माभरणानि च ।

अङ्गरागं च वैदेहि महार्हं मनु लेपनम् ॥ १८ ॥
मया दत्तमिदं सीते तव गात्राणि शोभयेत् ।
अनुरूप मसंक्लिष्टं नित्यमेव भविष्यति ॥ १९ ॥
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे ।
शोभयिष्यसि भर्तारं यथा श्रीर्विष्णु मव्ययम् ॥ २० ॥
सा वस्त्र मङ्गरागं च भूषणानि स्रजस्तथा ।
क्षिप्ताञ्जलि पुटा धीरा समुपास्त तपोधनाम् ॥ २१ ॥

---

## सीतायाः पातिव्रतम् ॥

सुन्दर० सर्ग ४ स निर्जित्य पुरीं लङ्कां श्रेष्ठां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् कपि सत्तमः ॥ १ ॥
अद्वारेण महावीर्यः प्रकार मव पुप्लुवे ।
निशि लङ्कां महासत्वो विवेश कपि कुञ्जरः ॥ २ ॥
सुन्दर० सर्ग १५ स वीक्षमाण स्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ १ ॥
अशोक वनिकायां तु तस्यां वानर पुंगवः ।
स ददर्श विदूरस्थं चैत्य प्रासाद मूर्जितम् ।
मध्ये स्तम्भ सहस्रेण स्थितं कैलास पांडुरम् ॥ १६ ॥
प्रवाल कृत सोपानं तप्त कांचन वेदिकम् ।
मुष्णन्त मिव चक्षूंषि द्योतमान मिवश्रिया ॥ १७ ॥
निर्मलं प्रांशु भावत्वा दुल्लिखन्त मिवाम्बरम् ।
ततो मलिन संवीतां राक्षसीभिः समावृताम् ॥ १८ ॥
उपवास कृशां दीनां निःश्वसन्तीं पुनः पुनः ।
ददर्श शुक्ल पक्षादौ चन्द्ररेखा मिवामलाम् ॥ १९ ॥
मन्द प्रख्याय मानेन रूपेण रुचिर प्रभाम् ।
पिनद्धां धूम जालेन शिखा मिव विभावसोः ॥ २० ॥
पीते नैकेन संवीतां क्लिष्टे नोत्तम वाससा ।
सपङ्का मन लंकारां विपद्मा मिव पद्मिनीम् ॥ २१ ॥

पीडितां दुःख संतप्तां परिक्षीणां तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडिता मिव रोहिणीम् ॥ २२ ॥
अश्रुपूर्णमुखीं दीनां कृशामन ऽशनेन च ।
शोकध्यान परां दीनां नित्य दुःख परायणाम् ॥ २३ ॥
प्रियं जन मपश्यन्तीं पश्यन्तीं राक्षसीगणम् ।
स्वगणेन मृगीं हीनां श्वगणेनाऽऽवृतामिव ॥ २४ ॥
सुखार्हां दुःखसंतप्तां व्यसनानाम ऽकोविदाम् ।
तां विलोक्य विशालाक्षी मधिकं मलिनां कृशाम् ॥ २६ ॥
तर्कयामास सीतेति कारणै रुपपादिभिः ॥ २७ ॥
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ।
प्रणष्टापि सती यस्य मनसो न प्रणश्यति ॥ २८ ॥
इयं सा यत् कृते राम श्चतुर्भिरिह तप्यते ।
कारुण्येना ऽऽनृशंस्येन शोकेन मदनेन च ॥ ४९ ॥
स्त्री प्रणष्टेति कारुण्या दाश्रिते त्यानृशंस्यत. ।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ५० ॥
तस्या देव्या यथा रूप मङ्ग प्रत्यङ्ग सौष्ठवम् ।
रामस्य च यथारूपं तस्येय मसितेक्षणा ॥ ५१ ॥
अस्या देव्या मन स्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ५२ ॥
दुष्करं कृतवान् रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३ ॥
एवं सीतां तथा दृष्ट्वा हृष्टः पवनसंभवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ५४ ॥



सुन्दर सर्गे १७ प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुंगवः ।
गुणाभिरामं रामं च पुनश्चिन्ता परो ऽभवत् ॥ १ ॥
स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षण. ।
सीतामाश्रित्य तेजस्वी हनूमान् विललाप ह ॥ २ ॥

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीता हि दुःखार्ता कालो हि दुरतिक्रमः ॥ ३ ॥
यदि राम समुद्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३ ॥
राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ।
त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम् ॥ १४ ॥
विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः ।
स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञी यशस्विनी ॥ १७ ॥
धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः ।
इयं सा दयिता भार्या राक्षसीवश मागता ॥ १८ ॥
सर्वान् भोगान् परित्यज्य भर्तृस्नेहबलात् कृता ।
अचिन्तयित्वा कष्टानि प्रविष्टा निर्जनं वनम् ॥ १९ ॥
संतुष्टा फलमूलेन भर्तृशुश्रूषणा परा ।
या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २० ॥
सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी ।
सहते यातनामेता मनर्थानामभागिनी ॥ २१ ॥
अस्या नूनं पुनर्लाभा द्राघवः प्रीति मेष्यति ।
राजा राज्यपरिभ्रष्ट पुनः प्राप्येव मेदिनीम् ॥ २३ ॥
कामभोगैः परित्यक्ता हीना बन्धुजनेन च ।
धारयत्यात्मनो देहं तत् समागमकाङ्क्षिणी ॥ २४ ॥
नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् ।
एकस्थहृदया नूनं राम मेवानु पश्यति ॥ २५ ॥
भर्ता नाम परं नार्याः शोभनं भूषणादपि ।
एषा हि रहिता तेन शोभनार्हा न शोभते ॥ २६ ॥
दुष्करं कुरुते रामो हीनो यदनया प्रभु ।
धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७ ॥
इमाम ऽसितकेशान्तां शतपत्रनिभेक्षणाम् ।
सुखार्हां दुःखितां ज्ञात्वा ममापि व्यथितं मनः ॥ २८ ॥

---

सुन्दर सर्ग १८ तथा विप्रेक्षमाणस्य वनं पुष्पित पादपम् ।
विचिन्वतश्च वैदेहीं किंचिच्छेषा निशा ऽभवत् ॥ १ ॥
अवेक्षमाणश्च तदा ददर्श कपिकुञ्जरः ।
रूपयौवनसंपन्ना रावणस्य वरस्त्रियः ॥ २६ ॥
ताभिः परिवृतो राजा सुरूपाभि र्महायशाः ।
तन् मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥ २७ ॥
वृतः परमनारीभि स्ताराभिरिव चन्द्रमाः ।
तं ददर्श महातेजा स्तेजोवन्तं महाकपिः ॥ २९ ॥
रावणोऽयं महाबाहु रिति संचिन्त्य वानरः ।
सोऽयमेव पुरा शेते पुरमध्ये गृहोत्तमे ॥
अवप्लुतो महातेजा हनूमान् मारुतात्मजः ॥ ३० ॥
स तथाप्युग्रतेजाः स निर्धूत स्तस्य तेजसा ।
पत्रे गुह्यान्तरे सक्तो मतिमान् संवृतोऽभवत् ॥ ३१ ॥

---

सुन्दर सर्ग १९ तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता ।
रूप यौवन संपन्नं भूषणोत्तम भूषितम् ॥ १ ॥
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २ ॥
ऊरुभ्या मुदरं छाद्य बाहुभ्यां च पयोधरौ ।
उपविष्टा विशालाक्षी रुदती वरवर्णिनी ॥ ३ ॥
दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः ।
ददर्श दीनां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४ ॥
असंवृतायामासीनां धरण्यां संशित व्रताम् ।
छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५ ॥
मलमण्डन दिग्धाङ्गीं मण्डनार्हाममण्डनाम् ।
मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६ ॥
समीपं राजसिंहस्य रामस्य विदितात्मनः ।
संकल्प हयसंयुक्तै र्यान्ती मिव मनोरथैः ॥ ७ ॥

शुष्यन्तीं रुदतीमेका ध्यानशोकपरायणाम् ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥ ८ ॥
चेष्टमानां यथा विष्टां पन्नगेन्द्रवधूमिव ।
धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९ ॥
वृत्तशीले कुले जातां साचारवति धार्मिके ।
पुनः संस्कारमापन्नां जातामिव च दुष्कुले । १०॥
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् ।
प्रज्ञामिव परिक्षीणां माशां प्रतिहतामिव ॥ ११ ॥
आयतीमिव विध्वस्तमाज्ञां प्रतिहतामिव ।
दीप्तामिव दिशं काले पूजामपहृतामिव ॥१२॥
पौर्णमासीमिव निशां तमोग्रस्तेन्दुमण्डलाम् ।
पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ॥ १३ ॥
प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ।
वेदीमिव परामृष्टां शान्तामग्निशिखामिव ॥ १४ ॥
उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टामाकुलामिव पद्मिनीम् ॥ १५ ॥
पतिशोकातुरां शुष्कां नदीं विस्रावितामिव ।
परया मृजया हीनां कृष्णपक्षे निशामिव ॥ १६ ॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १७ ॥
गृहीतां साडितां स्तम्भे यूथपेन विना कृताम् ।
निःश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥ १८ ॥
एकया दीर्घया वेण्या शोभमानामयत्नतः ।
नीलया नीरदापाये वनराज्या महीमिव ॥ १९ ॥
उपवासेन शोकेन ध्यानेन च भयेन च ।
परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥ २० ॥
आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव ।
भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २१ ॥

---

सुन्दर सर्ग २० मतां परिवृतां दीनां निरानन्दां तपस्विनीम्।
साकारै मधुरैर्वाक्यै र्न्यदर्शयत रावणः ॥ १ ॥
मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम्।
अदर्शन मिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २ ॥
कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये।
सर्वाङ्ग गुण संपन्ने सर्वलोक मनोहरे ॥ ३ ॥
नेह किञ्चिन् मनुष्या वा राक्षसाः कामरूपिणः।
व्यपसर्पतु ते सीते भयं मत्तः समुत्थितम् ॥ ४ ॥
स्वधर्मो रक्षसां भीरु सर्वदैव न संशयः।
गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ॥ ५ ॥
एवं चैवमकामां त्वां न च स्प्रक्ष्यामि मैथिलि।
कामं कामः शरीरे मे यथा कामं प्रवर्ततां ॥ ६ ॥
देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये।
प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥ ७ ॥
एकवेणी अधःशय्या ध्यानं मलिन मम्बरम्।
अस्थाने ऽप्युपवासश्च नैतान्यौपयिकानि ते ॥ ८ ॥
विचित्राणि च माल्यानि चन्दनान्य ऽगुरूणि च।
विविधानि च वासांसि दिव्यान्या भरणानि च ॥ ९ ॥
महार्हाणि च पानानि शयनान्यासनानि च।
गीतं नृत्यं च वाद्यं च लभ मां प्राप्य मैथिलि ॥ १० ॥
स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम्।
मां प्राप्य हि कथं वास्या स्त्वमनर्हा सुविग्रहे ॥ ११ ॥
इदं ते चारु संजातं यौवनं व्यति वर्तते।
यद् ऽतीतं पुनर्नैति स्रोतः स्रोतस्विनामिव ॥ १२ ॥
त्वां कृत्वो परतो मन्ये रूपकर्ता स विश्वकृत्।
न हि रूपोपमा ह्यन्या तवास्ति शुभदर्शने ॥ १३ ॥
त्वां समासाद्य वैदेहि रूप यौवन शालिनीम्।
कः पुमनतिवर्तेत साक्षादपि पितामहः ॥ १४ ॥
यद्यत् पश्यामि ते गात्रं शीतांशु सदृशानने।

तस्मि स्तस्मिन् पृथु श्रोणि चक्षु र्मम निबद्धयते ॥ १५ ॥
भव मैथिलि भार्या मे मोह मेत विसर्जय ।
बहूीना मुत्तम स्त्रीणा ममाग्रमहिषी भव ॥ १६ ॥
लोकेभ्यो यानि रत्नानि सम्प्रमथ्या हृतानि मे ।
तानि ते भीरु सर्वाणि राज्य चैव ददामि ते ॥ १७ ॥
विजित्य पृथिवीं सर्वा नाना नगर मालिनीम् ।
जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥ १८ ॥
नेह पश्यामि लोकेऽन्य यो मे प्रतिबली भवेत् ।
पश्य मे सुमहद्वीर्य मप्रति द्वन्द्व माहवे ॥ १९ ॥
असकृत् संयुगे भग्ना मया विमृदित ध्वजा ।
अशक्ता प्रत्य ऽनीकेषु स्थातु मम सुरासुरा ॥ २० ॥
इच्छ मा क्रियता मद्य प्रतिकर्म तवोत्तमम् ।
सुप्रभाण्यव सज्जन्ता तवाङ्गे भूषणानि हि ॥ २१ ॥
साधु पश्यामि ते रूप सुयुक्त प्रति कर्मणा ।
प्रति कर्माभि संयुक्ता दाक्षिण्येन वरानने ॥ २२
भुङ्क्ष्व भोगान् यथाकाम पिब भीरु रमस्व च ।
यथेष्ट च प्रयच्छ त्व पृथिवी वा धनानि च ॥ २३ ॥
ललस्व मयि विश्रब्धा धृष्टमाज्ञापयस्व च ।
मत्प्रसादा ल्ललन्त्याश्च ललता बान्धवस्तव ॥ २४ ॥
ऋद्धि ममानुपश्य त्वं श्रिय भद्रे यशस्विनि ।
कि करिष्यसि रामेण सुभगे चीर वासिना ॥ २५ ॥
निक्षिप्त विजयो रामो गतश्री र्वनगोचर ।
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६ ॥
नहि वैदेहि रामस्त्वा द्रष्टु वाप्युपलप्स्यते ।
पुरो बलाकै रसितै र्मेघै र्ज्योत्स्नामिव वृतान् ॥ २७ ॥
न चापि मम हस्तात् त्वा प्राप्तुमर्हति राघव ।
हिरण्यकशिपु कीर्ति मिन्द्रहस्तगतामिव ॥ २८ ॥
चारुस्मिते चारुदति चारुनेत्रे विलासिनि ।

मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ॥ २९ ॥
क्लिष्टं कौशेय वसनां तन्वी मप्य ऽनलंकृताम्।
त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ॥ ३० ॥
अन्तः पुर निवासिन्यः स्त्रियः सर्वगुणान्विताः।
यावत्यो मम सर्वासा मैश्वर्यं कुरु जानकि ॥ ३१ ॥
मम ह्यसित केशान्ते त्रैलोक्य प्रवरस्त्रियः।
ता स्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ॥ ३२ ॥
यानि वैश्रवणे सुभ्रु रत्नानि च धनानि च।
तानि लोकांश्च सुश्रोणि मया भुंक्ष्व यथासुखम् ॥ ३३ ॥
न रामस्तपसा देवि न बलेन न विक्रमैः।
न धनेन मया तुल्य स्तेजसा यशसापि वा ॥ ३४ ॥
पिबविहररमस्व भुंक्ष्व भोगान् धन निचयं प्रदिशामिमेदिनींच।
मयिललललनेयथासुखंत्वं त्वयिचसमेत्यललन्तुबान्धवास्ते ॥३५॥
कुसुमित तरु जाल संततानि भ्रमर युतानि समुद्र तीरजानि।
कनकविमलहार भूषिताङ्गीविहर मयासहभीरु काननानि ॥३६॥

---

सुन्दरसर्ग २१ तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः।
आर्ता दीनस्वरा दीनं प्रत्युवाच ततः शनैः ॥ १ ॥
दुःखार्ता रुदती सीता वेपमाना तपस्विनी।
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २ ॥
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता।
निवर्तय मनो मत्तः स्वजने प्रीयतां मनः।
न मां प्रार्थयितुं युक्त स्त्वं सिद्धिमिव पापकृत् ॥ ३ ॥
अकार्यं न मया कार्य मेकपत्न्या विगर्हितम्।
कुलं संप्राप्तया पुण्यं कुले महति जातया ॥ ४ ॥
एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी।
रावणं पृष्ठतः कृत्वा भूयो वचन मब्रवीत् ॥ ५ ॥
नाहमौपयिकी भार्या परभार्या सती तव।

साधु धर्मं मवेक्षस्व साधु साधु व्रत चर ॥ ६ ॥
यथा तव तथान्येषा रक्ष्या दारा निशाचर ।
आत्मान मुपमा कृत्वा स्वेषु दारेषु रम्यताम् ॥ ७ ॥
अतुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम् ।
नयन्ति निकृति मन्तं परदारा पराभवम् ॥ ८ ॥
इह सन्तो न वा सन्ति सतो वा नानु वर्तसे ।
यथा हि विपरीता ते बुद्धि राचार वर्जिता ॥ ९ ॥
वचो मिथ्या प्रणीतात्मा पथ्य मुक्तं विचक्षणैः ।
राक्षसा नाम ऽभावाय त्वं वा न प्रतिपद्यसे ॥ १० ॥
अकृतात्मान मासाद्य राजानमनये रतम् ।
समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ ११ ॥
तथैव त्वा समासाद्य लङ्का रत्नौघ संकुला ।
अपराधात् तवैकस्य न चिराद्विनशिष्यति ॥ १२ ॥
स्वकृतै र्हन्यमानस्य रावण दीर्घदर्शिन. ।
अभिनन्दन्ति भूतानि विनाशे पाप कर्मण ॥ १३ ॥
एवं त्वा पाप कर्माणं वक्ष्यन्ति निकृता जना. ।
दिष्ट्यैत द्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥ १४ ॥
शक्या लोभयितुं नाह मैश्वर्येण धनेन वा ।
अनन्या राघवेणाहं भास्करेण यथा प्रभा ॥१५ ॥
उपधाय भुज तस्य लोकनाथस्य सत्कृतम् ।
कथं नामोपधास्यामि भुज मन्यस्य कस्यचित् ॥ १६ ॥
अहमौपयिकी भार्या तस्यैव च धरापते ।
व्रतस्नातस्य विद्येव विप्रस्य विदितात्मनः ॥ १७ ॥
साधु रावण रामेण मां समानय दु खिताम् ।
वने वासितया सार्धं करिण्येव गजाधिपम् ॥ १८ ॥
मित्रमौपयिकं कर्तुं राम स्थानं परीप्सता ।
बन्धं चानिच्छता घोरं त्वयासौ पुरुषर्षभः ॥ १९ ॥
विदित. सर्वधर्मज्ञ शरणागत वत्सल ।
तेन मैत्री भवतु ते यदि जीवितु मिच्छसि ॥ २० ॥

प्रसादयस्व त्वं चैनं शरणागत वत्सलम्।
मां चास्मै प्रयतो भूत्वा निर्यातयितु मर्हसि॥ २१॥
एवं हि ते भवेत् स्वस्ति संप्रदाय रघूत्तमे।
अन्यथा त्वं हि कुर्वाणः परां प्राप्स्यसि चापदम्॥ २२॥
वर्जये द्वज्र मुत्सृष्टं वर्जये दन्तक श्चिरम्।
त्वद्विधं न तु संक्रुद्धो लोकनाथः स राघवः॥ २३॥
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम्।
शतक्रतु विसृष्टस्य निर्घोषम ऽशने रिव॥ २४॥
इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः।
इषवो निपतिष्यन्ति रामलक्ष्मणलक्षिताः॥ २५॥
रक्षांसि निहनिष्यन्तः पुर्याम ऽस्यां न संशयः।
असंपातं करिष्यन्ति पतन्तः कङ्कवाससः॥ २६॥
राक्षसेन्द्र महासर्पान् स राम गरुडो महान्।
उद्धरिष्यति वेगेन वैनतेय इवोरगान्॥ २७॥
अपनेष्यति मां भर्ता त्वत्तः शीघ्र मरिन्दमः।
असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः॥ २८॥
जनस्थाने हतस्थाने निहते रक्षसां बले।
अशक्तेन त्वया रक्षः कृतमेत दसाधु वै॥ २९॥
आश्रमं तत्तयोः शून्यं प्रविश्य नरसिंहयोः।
गोचरं गतयो र्भ्रात्रो रपनीता त्वया ऽधम॥ ३०॥
नहि गन्ध मुपाघ्राय रामलक्ष्मणयो स्त्वया।
शक्यं संदर्शने स्थातुं शुना शार्दूलयो रिव॥ ३१॥
तस्य ते विग्रहे ताभ्यां युगग्रहण मस्थिरम्।
वृत्रस्ये वेन्द्रबाहुभ्यां बाहोरेकस्य विग्रहे॥ ३२॥
क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह।
तोय मल्पमिवादित्यः प्राणाना ऽऽदास्यते शरैः॥ ३३॥

---

इत्यार्षे सीताया वचनं श्रुत्वा परुषं राक्षसेश्वरः।
११ प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम्॥ १॥

यथा यथा सान्त्वयिता वश्य स्त्रीणां तथा तथा ।
यथा यथा प्रिय वक्ता परिभूतस्तथा तथा ॥ २ ॥
सनियच्छति मे क्रोध त्वयि काम समुत्थित ।
द्रवतो मार्गमासाद्य हयानिव सुसारथि ॥ ३ ॥
वाम कामो मनुष्याणा यस्मिन् किल निबद्ध्यते ।
जने तस्मिंस्त्वनु क्रोश स्नेहश्च किल जायते ॥ ४ ॥
एतस्मात् कारणान्नत्वा घातयामि वरानने ।
वधार्हा मवमानार्हा मिथ्या प्रव्रजने रताम् ॥ ५ ॥
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुण ॥ ६ ॥
एव मुक्त्वा तु वैदेहीं रावणो राक्षसाधिप ।
क्रोध सरम्भ सयुक्त सीतामुत्तरमब्रवीत् ॥ ७ ॥
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृत ।
तत शयन मारोह मम त्व वरवर्णिनि ॥ ८ ॥
द्वाभ्यामूर्ध्वं तु मासाभ्या भर्तार मामनिच्छतीम् ।
मम त्वा प्रातराशार्थं सूदाश्छेत्स्यन्ति खण्डश ॥ ९ ॥
ता भर्त्स्यमाना सम्प्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।
देवगन्धर्व कन्यास्ता विषेदुर्विकृते क्षणा ॥ १० ॥
ओष्ठप्रकारैरपरा नेत्रैर्वक्त्रै स्तथा ऽपरा ।
सीतामाश्वासयामासुस्तर्जिता तेन रक्षसा ॥ ११ ॥
ताभिराश्वासिता सीता रावण राक्षसाधिपम् ।
उवाचात्महित वाक्य वृत्तशौटीर्य गर्वितम् ॥ १२ ॥
नूनं न ते जन कश्चिदस्मिन् नि श्रेयसि स्थित ।
निवारयति यो न त्वा कर्मणोऽस्माद्विगर्हितात् ॥ १३ ॥
मा हि धर्मात्मन पत्नीं शचीमिव शचीपते ।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन् मनसापि क ॥ १४ ॥
राक्षसाधम रामस्य भार्या ममित तेजस ।
उक्तवानसि यत् पाप क्व गतस्तस्य मोक्ष्यसे ॥ १५ ॥
यथा दृप्तश्च मातङ्ग शशश्च सहितौ वने ।

तथा द्विरदवद्राम स्त्वं नीच शशवत्स्मृतः ॥ १६ ॥
स त्वमिक्ष्वाकु नाथं वै क्षिपन्निह न लज्जसे ।
चक्षुषो विषये तस्य न यावदुपगच्छसि ॥ १७ ॥
इमे ते नयने क्रूरे विकृते कृष्ण पिङ्गले ।
क्षितौ न पतिते कस्मा न्मामनार्यं निरीक्षितः ॥ १८ ॥
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ।
कथं व्याहरतो मां ते न जिह्वा पाप शीर्यति ॥ १९ ॥
असंदेशात्तु रामस्य तपसश्चानुपालनात् ।
न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा ॥ २०
नापहर्तु महं शक्या तस्य रामस्य धीमतः ।
विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१ ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च ।
अपोह्य रामं कस्माच्चिद्दारचौर्यं त्वया कृतम् ॥ २२ ॥
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ।
विवृत्य नयने क्रूरे जानकी मन्ववैक्षत ॥ २३ ॥
अवेक्षमाणो वैदेहीं कोप संरक्त लोचनः ।
उवाच रावणः सीतां भुजंग इव निःश्वसन् ॥ ३० ॥
अनये नाभिसंपन्न मर्थहीन मनुव्रते ।
नाशयाम्यहमद्य त्वां सूर्यः सन्ध्या मिवौजसा ॥ ३१ ॥



सुन्दर सर्ग इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः ।
२१ संदिश्य च ततः सर्वा राक्षसी र्निर्जगाम ह ॥ १ ॥
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तः पुरं गते ।
राक्षस्यो भीम रूपास्ताः सीतां समभिदुद्रुवु. ॥ २ ॥
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्छिताः ।
परं परुषया वाचा वैदेही मिद मब्रुवन् ॥ ३ ॥
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ।
दश ग्रीवस्य भार्या त्वं सीते न बहु मन्यसे ॥ ४ ॥
ततस्त्वेकजटा नाम राक्षसी वाक्य मब्रवीत् ।

आमन्त्र्य क्रोधताम्राक्षी सीता करतलोदरीम् ॥ ५ ॥
प्रजापतीनां षण्णां तु चतुर्थोऽयं प्रजापतिः ।
मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६ ॥
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः ।
नाम्ना स विश्रवानाम प्रजापतिसमप्रभः ॥ ७ ॥
तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः ।
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ ८ ॥
मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे ।
ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ ९ ॥
विवृत्य नयने कोपान्मार्जारसदृशेक्षणा ।
येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जितः ॥ १० ॥
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ।
वीर्योत्सिक्तस्य शूरस्य संग्रामेष्वनिवर्तिनः ।
बलिनो वीर्ययुक्तस्य भार्या त्वं किं न लिप्ससे ॥ ११ ॥
प्रिया बहुमता भार्या त्यक्त्वा राजा महाबलः ।
सर्वासां च महाभागा त्वामुपैष्यति रावणः ॥ १२ ॥
समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् ।
अन्तःपुरं तदुत्सृज्य त्वामुपैष्यति रावणः ॥ १३ ॥
अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत् ।
असकृद्भीमवीर्येण नागा गन्धर्वदानवाः ।
निर्जिताः समरे येन स ते पार्श्वमुपागतः ॥ १४ ॥
तस्य सर्वसमृद्धस्य रावणस्य महात्मनः ।
किमर्थं राक्षसेन्द्रस्य भार्या त्वं नेच्छसेऽधमे ॥ १५ ॥
ततस्तु दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् ।
यस्य सूर्यो न तपति भीतो यस्य स मारुतः ।
न वाति स्मायतापाङ्गि किं त्वं तस्य न तिष्ठसे ॥ १६ ॥
पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् ।
शैलाः सुस्रुवुः पानीयं जलदाश्च यदेच्छति ॥ १७ ॥
तस्य नैर्ऋतराजस्य राजराजस्य भामिनि ।

किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि ॥ १८ ॥
साधु ते तत्त्वतो देवि कथितं साधु भामिनि।
गृहाण सुस्मिते वाक्य मन्यथा न भविष्यसि ॥ १९ ॥

---

सुन्दर सर्ग २४ ततः सीतां समस्तास्ता राक्षस्यो विकृताननाः।
परुषं परुषानर्हामूचुस्तद्वाक्यमप्रियम् ॥ १ ॥
किं त्वमन्तः पुरे सीते सर्व भूत मनोरमे।
महार्हशयनोपेते न वास मनुमन्यसे ॥ २ ॥
मानुषे मानुषस्यैव भार्या त्वं बहुमन्यसे।
प्रत्याहर मनो रामान्नैवं जातु भविष्यति ॥ ३ ॥
त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम्।
भर्तारमुप संगम्य विहरस्व यथा सुखम् ॥ ४ ॥
मानुषी मानुषं तं तु राम मिच्छसि शोभने।
राज्याद् भ्रष्टम ऽसिद्धार्थं विक्लवन्त मनिन्दिते ॥ ५ ॥
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा।
नेत्राभ्या मश्रुपूर्णाभ्या मिदं वचन मब्रवीत् ॥ ६ ॥
यदिदं लोक विद्विष्ट मुदाहरत संगताः।
नैतन्मनसि वाक्यं मे किल्बिषं प्रतितिष्ठति ॥ ७ ॥
न मानुषी राक्षसस्य भार्या भवितु मर्हति।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८ ॥
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः।
तं नित्य मनु रक्तास्मि यथा सूर्यं सुवर्चला ॥ ९ ॥
यथा शची महाभागा शक्रं समुपतिष्ठति।
अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥ १० ॥
लोपामुद्रा यथा ऽगस्त्यं सुकन्या च्यवनं यथा।
सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥ ११ ॥
सौदासं मदयन्तीव केशिनी सगरं यथा।
नैषधं दमयन्तीव भैमी पति मनुव्रता।

तथाह मिक्ष्वाकुवरं रामं पतिमनुव्रता ॥ १२ ॥
सीताया वचनं श्रुत्वा राक्षस्य. क्रोध मूर्छिताः ।
भर्त्सयन्ति स्म परुषैर्वाक्यै रावण चोदिताः ॥ १३ ॥
अवलीन. स निर्वाक्यो हनुमान् शिंशपाद्रुमे ।
सीता संतर्जयन्तीस्ता राक्षसीरश्रृणोत् कपिः ॥ १४ ॥

---

सुन्दर सर्ग २५ अथ तासां वदंतीना परुषं दारुणं बहु ।
राक्षसीना मसौम्याना रुरोद जनकात्मजा ॥ १ ।
सा नि श्वसंती शोकार्ता कोपोपहतचेतना ।
आर्ता व्यसृज दश्रूणि मैथिली विललाप च ॥ २
हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च
हा श्वश्रूर्मम कौशल्ये हा सुमित्रेति भामिनी
लोक प्रवादः सत्योऽय पण्डितै समुदाहृतः
अकाले दुर्लभो मृत्यु स्त्रिया वा पुरुषस्य वा ।
यत्राहमाभि. क्रूराभी राक्षसीभिरिहार्दिता
जीवामि हीना रामेण मुहूर्तमपि दु.खिता ॥
त पद्मदलपत्राक्षं सिंह विक्रात गामिनम् ।
धन्या. पश्यंति मे नाथं कृतज्ञं प्रिय वादिनम् ॥
सर्वथा तेन हीनाया रामेण विदितात्मना ।
तीक्ष्ण विष मिवास्वाद्य दुर्लभं मम जीवनम् ॥
कीदृशं तु महापापं मया देहांतरे कृतम् ।
येनेदं प्राप्यते घोरं महा दु खं सुदारुणम् ॥ १८ ॥
जीवितं त्यक्तु मिच्छामि शोकेन महता वृता ।
राक्षसीभिश्च रक्षत्या रामो नासाद्यते मया ॥ १९
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत् परित्यक्तु मात्मच्छन्देन जीवितम्

---

सुन्दर सर्ग २६ नहि मे जीविते नार्थो नैवार्थै र्न च भूषणैः ।
वसंत्या राक्षसी मध्ये विना रामं महारथम् ॥ ५ ॥
अश्मसार मिदं नून मथवाप्य जरामरम् ।
हृदयं मम येनेदं न दुःखेन विशीर्यते ॥ ६ ॥
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुनरहं कामयेयं निशाचरम् ॥ ८ ॥
प्रत्याख्यानं न जानाति नात्मानं नात्मनः कुलम् ।
यो नृशंस स्वभावेन मां प्रार्थयितु मिच्छति ॥ ९ ॥
छिन्ना भिन्ना प्रभिन्ना वा दीप्तावाग्नौ प्रदीपिता ।
रावणं नोपतिष्ठेयं किं प्रलापेन व श्चिरम् ॥ १० ॥
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ।
सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ ११ ॥
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा ।
न तु राघव बाणानां गति रोधी भविष्यति ॥ १३ ॥
वृहस्यां मां न जानीते शङ्के लक्ष्मण पूर्वजः ।
जानन्नपि स तेजस्वी धर्षणां मर्षयिष्यति ॥ १५ ॥
यदि मामिह जानीयाद्वर्तं मानां हि राघवः ।
अद्य बाणै रभिक्रुद्धः कुर्याल्लोक मराक्षसम् ॥ १८ ॥
निर्दहेच्च पुरीं लङ्कां निर्दहेच्च महोदधिम् ।
रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ १९ ॥
अनेन तु नृशंसेन रावणेनाधमेन मे ।
समयो यस्तु निर्दिष्टस्तस्य कालोऽय मागतः ॥ ३० ॥
स च मे विहितो मृत्युरस्मिन्दुष्टे न वर्तते ।
अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः ॥ ३१ ॥
अधर्मात्तु महोत्पातो भविष्यति हि सांप्रतम् ।
नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः । ३२ ॥
ध्रुवं मां प्रातराशार्थं राक्षसः कल्पयिष्यति ।
साहं कथं करिष्यामि तं विना प्रियदर्शनम् ॥ ३३ ॥
रामं रक्तान्त नयन मपश्यन्ती सुदुःखिता ।

क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३४ ॥
धन्या देवा सगन्धर्वाः सिद्धाश्च परमर्षयः।
मम पश्यन्ति ये वीरं रामं राजीवलोचनम् ॥ ३७ ॥
अथवा न हि तस्यार्थो धर्म कामस्य धीमत.।
मया रामस्य राजर्षेर्भार्यया परमात्मन ॥ ३८ ॥
दृश्यमाने भवेत् प्रीति. सौहृदं नास्त्यदृश्यत ।
नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥ ३९ ॥
किं वा मय्यगुणाः केचित् किं वा भाग्यक्षयो हि मे।
या हि सीता वरार्हेण हीना रामेण भामिनी ॥ ४० ॥
श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मना।
रामादक्लिष्ट चारित्राच्छूराच्छत्रुनिबर्हणात् ॥ ४१ ॥
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना।
छद्मना घातितौ शूरौ भ्रातरौ राम लक्ष्मणौ ॥ ४३ ॥
साहमेवं विधे काले मर्तुमिच्छामि सर्वतः।
न च मे विहितो मृत्युरस्मिन् दु खेऽतिवर्तति ॥ ४४ ॥
धन्याः खलु महात्मानो मुनयः सत्य संमता ।
जितात्मानो माहाभागा येषां न स्तः प्रिया प्रिये ॥ ४५ ॥
प्रियान्न संभवेद्दुःख मप्रिया दधिकं भवेत्।
ताभ्या हि ते वियुज्यन्ते नमस्तेषा महात्मनाम् ॥ ४६ ॥
साहं त्यक्ता प्रियेणैव रामेण विदितात्मना।
प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ ४७ ॥

---

सुंदर सर्ग २७ इत्युक्ताः सीतया घोरं राक्षस्य क्रोध मूर्छिता ।
काश्चिज्जग्मुस्तदाख्यातुं रावणस्य दुरात्मन ॥ १ ॥
ततः सीता मुपागम्य राक्षस्यो भीम दर्शना. ।
पुनः परुषमेकार्थं मनर्थार्थमथा ब्रुवन् ॥ २ ॥
अद्येदानीं तवानार्ये सीते पाप विनिश्चये।
राक्षस्यो भक्षयिष्यन्ति मासमेतद् यथा सुखम् ॥ ३ ॥

सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत् ॥ ४४ ॥
आत्मानं खादता नार्यो न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५ ॥
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या भवाय च ॥ ६ ॥
सुंदर सर्ग ३१ हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसानां च गर्जितम् ॥ १ ॥
अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २ ॥
यां कपीनां सहस्राणि सुबहून्ययुतानि च ।
दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३ ॥
यदि ह्यहं सतीमेनां शोकोपहतचेतनाम् ।
अनाश्वास्य गमिष्यामि दोषवद् गमनं भवेत् ॥ ८ ॥
गते हि मयि तत्रेयं राजपुत्री यशस्विनी ।
परित्राणमपश्यन्ती जानकी जीवितं त्यजेत् ॥ ९ ॥

---

सुन्दर सर्ग एवं बहुविधां चिन्तां चिन्तयित्वा महामतिः ।
३१ संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १ ॥
राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्ति रिक्ष्वाकूणां महायशाः ॥ २ ॥
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ५ ॥
रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता ।
रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥ ६ ॥
तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः ।
सभार्यः सह च भ्रात्रा वीरः प्रव्रजितो वनम् ॥ ७ ॥
तेन तत्र महारण्ये मृगयां परिधावता ।

राक्षसा निहता शूरा बहव कामरूपिण ॥ ८ ॥
जनस्थान बध श्रुत्वा निहतौ खरदूषणौ ।
ततस्त्वमर्षा ऽपहृता जानकी रावणेन तु ॥ ९ ॥
वञ्चयित्वा वने राम मृग रूपेण मायया ।
स मार्गमाणस्ता देवी राम सीता मनिन्दिताम् ॥ १० ॥
आससाद वने मित्र सुग्रीव नाम वानरम् ॥
सुग्रीवेणा भिसंदिष्टा हरय काम रूपिण ॥ १२ ॥
दिक्षु सर्वासु ता देवीं विचिन्वन्त सहस्रश ।
अह सपाति वचना च्छतयोजन मायतम् ॥ १३ ॥
तस्या हेतो र्विशालाक्ष्या समुद्र वेगवान् प्लुत ।
यथारूपा यथावर्णा यथालक्ष्यवतीं च ताम् ॥ १४ ॥
अश्रौष राघवस्याह सेयमासादिता मया ।
विरराभैव मुक्त्वा स वाच वानरपुगव ॥ १५ ॥
जानकी चापि तच्छ्रुत्वा विस्मय परम गता ।
तत सा वक्रकेशान्ता सुकेशी केश सवृतम् ।
उन्नम्य वदन भीरु शिंशपा मन्ववैक्षत ॥ १६ ॥

---

सुंदर सर्ग सोऽवतीर्य द्रुमात् तस्माद्विद्रुम प्रतिमाऽऽनन ।
३३ विनीतवेष कृपण प्रणिपत्योपसृत्य च ॥ १ ॥
तामब्रवीन् महातेजा हनूमान् मारुतात्मज ।
शिरस्यञ्जलिमाधाय सीता मधुरया गिरा ॥ २ ॥
रावणेन जनस्थानाद् बलात् प्रमथिता यदि ।
सीता त्वमसि भद्र ते तन्ममाचक्ष्व पृच्छत ॥ १२ ॥
यथा हि तव वै दैन्य रूप चा प्रतिमानुपम् ।
तपसा चान्वितो वेषस्त्व राममहिषी ध्रुवम् ॥ १३ ॥
सा तस्य वचन श्रुत्वा रामकीर्तन हर्षिता ।
उवाच वाक्य वैदेही हनूमन्त द्रुमाश्रितम् ॥ १४ ॥
पृथिव्या राजसिंहाना मुख्यस्य विदितात्मन ।

स्नुषा दशरथस्याहं शत्रु सैन्य प्रणाशिनः ॥ १५ ॥
दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम्ना चोक्ताहं भार्या रामस्य धीमतः ॥ १६ ॥

---

सुन्दर सर्ग ३४ तस्यास्तद्वचनं श्रुत्वा हनूमान् हरिपुंगवः ।
दुःखात् दुःखाभिभूतायाः सान्त्व मुत्तर मब्रवीत् ॥ १ ॥
अहं रामस्य संदेशाद्देवि दूतस्तवाग्रतः ।
वैदेहि कुशली रामः स त्वां कौशल मब्रवीत् ॥ २ ॥
यो ब्राह्म मस्त्रं वेदांश्च वेद वेदविदां वरः ।
स त्वां दाशरथी रामो देवि कौशल मब्रवीत् ॥ ३ ॥
लक्ष्मणश्च महातेजा भर्तुस्ते ऽनुचरः प्रियः ।
कृतवाञ्छोक संतप्तः शिरसा तेऽभिवादनम् ॥ ४ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।
प्रति संहृष्ट सर्वाङ्गी हनूमन्तमथा ऽब्रवीत् ॥ ५ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा ।
एति जीवन्त मानन्दो नरं वर्ष शतादपि ॥ ६ ॥
तयोः समागमे तस्मिन् प्रीति रुत्पादिता द्भुता ।
परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ ७ ॥

---

सुन्दर सर्ग ३६ भूय एव महातेजा हनूमान् पवनात्मजः ।
अब्रवीत् प्रश्रितं वाक्यं सीता प्रत्यय कारणात् ॥ १ ॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं पश्यचेदं देव्यं ऽगुलीयकम् ॥ २ ॥
प्रत्ययार्थं तवानीत तेन दत्तं महात्मना ।
समाश्वसि हि भद्रं ते क्षीणदु:खफला ह्यसि ॥ ३ ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम् ।
भर्तार मिव संप्राप्तं जानकी मुदिता ऽभवत् ॥ ४ ॥
चारु तद्वदनं तस्या स्ताम्र शुक्लायते क्षणम् ।
बभूव हर्षोदग्रं च राहु मुक्त इवोडुराट् ॥ ५ ॥

तत सा ह्रीमती बाला भर्तुः संदेशहर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ ६ ॥
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्व वानरोत्तम ।
येनेद राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ७ ॥
शतयोजन विस्तीर्णः सागरो मकरालयः ।
विक्रम श्लाघनीयेन क्रमता गोष्पदी कृत. ॥ ८ ॥
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति संत्रासो रावणादपि संभ्रमः ॥ ९ ॥
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् ।
यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥ १० ॥
प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रम मविज्ञाय मत्सकाश विशेषत· ॥ ११ ॥
दिष्ट्या च कुशली रामो धर्मात्मा सत्यसंगरः ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धन ॥ १२ ॥
कुशली यदि काकुत्स्थ कि न सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्नि रिवोत्थितः ॥ १३ ॥
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ १४ ॥
कच्चिन्न विगतस्नेहो विवासान् मयि राघव ।
कच्चिन्मा व्यसना दस्मान् मोक्षयिष्यति राघवः ॥ २० ॥
सुखाना सुचितो नित्यमसुखाना मनूचित ।
दुःख मुत्तरमासाद्य कच्चिद्रामो न सीदति ॥ २१ ॥
कौशल्यायाः स्तथा कच्चित् सुमित्रायाः स्तथैव च ।
अभीक्ष्णं श्रूयते कच्चित् कुशलं भरतस्य च ॥ २२ ॥
कच्चिच्च लक्ष्मण शूर सुमित्रानन्दवर्धनः ।
अस्त्रविच्छरजालेन राक्षसान् विधमिष्यति ॥ २६ ॥
धर्मापदेशात्त्यजतः स्वराज्यं मां चाप्यरण्यं नयतः पदाते· ।
नासीद्यथा यस्य न भीर्न शोक कच्चित्सधैर्यं हृदये करोति ॥ २९
न चास्य माता न पिता न चान्य. स्नेहाद्विशिष्टोऽस्ति मयासमो

तावद्ध्यहं दूत जिजीविषेयं यावत् प्रवृत्तिं शृणुयां प्रियस्य ॥ ३० ॥
इतीव देवी वचनं महार्थं तं वानरेन्द्रं मधुरार्थं मुक्त्वा ।
श्रोतुं पुनस्तस्य वचोऽभिरामं रामार्थं युक्तं विरराम रामा ॥३१॥
सीताया वचनं श्रुत्वा मारुति र्भीम विक्रमः ।
शिरस्यञ्जलिमाधाय वाक्य मुत्तर मब्रवीत् ॥ ३२ ॥
न त्वा मिहस्थां जानीते रामः कमललोचनः ।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ३३ ॥
श्रुत्वैव च वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन् महतीं हर्यृक्षगण संकुलाम् ॥ ३४ ॥
क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्रस्रवणे गिरौ ।
शतक्रतु मिवासीनं नाग पृष्ठस्य मूर्धनि ॥ ४० ॥
अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन् प्रति बुध्यते ॥ ४४ ॥
दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत्स्त्री मनोहरम् ।
बहुशो हा प्रिये त्येवं श्वसं स्त्वामभिभाषते ॥ ४५ ॥
स देवि नित्यं परितप्यमान स्त्वामेव सीतेत्यभिभाषमाणः ।
धृतव्रतो राजसुतो महात्मा तवैव लाभाय कृतप्रयत्नः ॥ ४६ ॥

---

सुन्दर सर्ग ३७ सा सीता वचनं श्रुत्वा पूर्णचन्द्र निभानना ।
हनुमन्तमुवाचेदं धर्मार्थं सहितं वचः ॥ १ ॥
अमृतं विषसंपृक्तं त्वया वानर भाषितम् ।
यच्च नान्यमना रामो यच्च शोक परायणः ॥ २ ॥
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषं बध्वा कृतान्तः परिकर्षति ॥ ३ ॥
विधि र्नूनं मसंहार्यं प्राणिनां प्लवगोत्तम ।
सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ॥ ४ ॥
शोकस्यास्य कदा पारं राघवोऽधिगमिष्यति ।
प्लवमानः परिश्रान्तो हतनौः सागरे यथा ॥ ५ ॥

राक्षसानां वधं कृत्वा सूदयित्वा च रावणम् ।
लङ्का मुन्मथितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥ ६ ॥
स वाच्य संत्वरस्वेति यावदेव न पूर्यते ।
अयं संवत्सर कालस्तावद्धि मम जीवितम् ॥ ७ ॥
वर्तते दशमो मासो द्वौ तु शेषौ प्लवंगम ।
रावणेन नृशंसेन समयो य कृतो मम ॥ ८ ॥
विभीषणेन च भ्रात्रा मम निर्यातनं प्रति ।
अनुनीत प्रयत्नेन न च तत् कुरुते मतिम् ॥ ९ ॥
मम प्रति प्रदानं हि रावणस्य न रोचते ।
रावणं मार्गते सख्ये मृत्यु- कालवश गतम् ॥ १० ॥
आशंसेयं हरिश्रेष्ठ क्षिप्र मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्ध स्तस्मिंश्च बहवो गुणा ॥ १४ ॥
उत्साहः पौरुष सत्व मानृशंस्यं कृतज्ञता ।
विक्रमश्च प्रभावश्च सन्ति वानर राघवे ॥ १५ ॥
चतुर्दश सहस्राणि राक्षसाना जघान यः ।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥ १६ ॥
न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभ ।
अहं तस्यानुभावज्ञा शक्रस्येव पुलोमजा ॥ १७ ॥
इति संजल्प माना ता रामार्थे शोक कर्शिताम् ।
अश्रुसपूर्णवदना मुवाच हनुमान् कपिः ॥ १८ ॥
श्रुत्वैव च वचो मह्य क्षिप्रमेष्यति राघव ।
चमू प्रकर्षन् महतीं हर्यृक्षगण संकुलाम् ॥ २० ॥
अथवा मोचयिष्यामि त्वामद्यैव स राक्षसात् ।
अस्माद् दुःखादुपारोह मम पृष्ठ मनिन्दिते ॥ २१ ॥
पृष्ठ मारोह मे देवि मा विकाङ्क्षस्व शोभने ।
योग मन्विच्छ रामेण शशाङ्केनैव रोहिणी ॥ २६ ॥
मैथिली तु हरिश्रेष्ठाच्छ्रुत्वा वचनमद्भुतम् ।
हर्ष विस्मितसर्वाङ्गी हनुमन्तमथाब्रवीत् ॥ ३० ॥

हनूमन् दूरमध्वानं कथं मां नेतुमिच्छसि।
तदेव खलु ते मन्ये कपित्वं हरि यूथप॥ ३१॥
कथं चाल्प शरीरस्त्वं मामितो नेतुमिच्छसि।
सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ॥ ३२॥
सीतायास्तु वचः श्रुत्वा हनूमान् मरुतात्मजः।
चिंतयामास लक्ष्मीवान्नवं परिभवं कृतम्॥ ३३॥
न मे जानाति सत्वं वा प्रभावं वासितेक्षणा।
तस्मात् पश्यतु वैदेही यद्रूपं मम कामतः॥ ३४॥
इति संचिंत्य हनुमां स्तदा प्लवगसत्तमः।
दर्शयामास सीतायाः स्वरूप मरिमर्दनः॥ ३५॥
स तस्मात् पादपा द्धीमानाप्लुत्य प्लवगर्षभः।
ततो वर्धितुमारेभे सीता प्रत्यय कारणात्॥ ३६॥
मेरुमन्दरसंकाशो बभौ दीप्तानलप्रभः।
अग्रतो व्यवतस्थे च सीताया वानरर्षभः॥ ३७॥
हरिः पर्वतसंकाश स्ताम्रवक्त्रो महाबलः।
वज्र दंष्ट्रनखो भीमो वैदेही मिदमब्रवीत्॥ ३८॥
सपर्वतवनोद्देशां साट्टप्राकारतोरणाम्।
लङ्कामिमां सनाथां वा नयितुं शक्ति रस्ति मे॥ ३९॥
तदव स्थाप्यतां बुद्धि रलं देवि विकाङ्क्षया।
विशोकं कुरु वैदेहि राघवं सह लक्ष्मणम्॥ ४०॥
तं दृष्ट्वाऽचलसंकाशमुवाच जनकात्मजा।
पद्मपत्र विशालाक्षी मारुतस्यौरसं सुतम्॥ ४१॥
तव सत्वं बलं चैव विजानामि महाकपे।
वायोरिव गतिश्चापि तेजश्चाग्ने रिवाद्भुतम्॥ ४२॥
जानामि गमने शक्तिं नयने चापि ते मम।
अवश्यं संप्रधार्याशु कार्य सिद्धि रिवात्मनः॥ ४४॥
अयुक्तं तु कपिश्रेष्ठ मया गन्तुं त्वया सह।
वायुवेगसवेगस्य वेगो मां मोहयेत्तव॥ ४५॥
अहं माकाश मासक्ता उपर्युपरि सागरम्।

प्रपतेयं हि ते पृष्ठाद् भूयो वेगेन गच्छत ॥ ४६ ॥
न च शक्ष्ये त्वया सार्धं गन्तुं शत्रुविनाशन ।
कलत्रवति सन्देहस्त्वयि स्यादप्यसंशयम् ॥ ४८ ॥
ह्रियमाणां तु मां दृष्ट्वा राक्षसा भीमविक्रमाः ।
अनुगच्छेयु रादिष्टा रावणेन दुरात्मना ॥ ४९ ॥
तैस्त्वं परिवृतः शूरैः शूलमुद्गरपाणिभिः ।
भवेस्त्वं संशयं प्राप्तो मया वीर कलत्रवान् ॥ ५० ॥
सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः ।
कथं शक्ष्यसि संयातुं मां चैव परिरक्षितुम् ॥ ५१ ॥
मयि जीवितमायत्तं राघवस्यामितौजसः ।
भ्रातॄणां च महाबाहो तव राजकुलस्य च ॥ ६० ॥
भर्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर ।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तम ॥ ६२ ॥
यदहं गात्रसंस्पर्शं रावणस्य गता बलात् ।
अनीशा किं करिष्यामि विनाथा विवशा सती ॥ ६३ ॥
यदि रामो दशग्रीवमिह हत्वा सराक्षसम् ।
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥ ६४ ॥
समेत्य कपिश्रेष्ठ सलक्ष्मणं प्रियं सयूथपं क्षिप्रमिहोपपादय ।
चिराय रामं प्रतिशोककर्शितां कुरुष्व मां वानरवीर हर्षिताम् ॥

---

सुंदर सर्ग ३८ ततः स कपिशार्दूलस्तेन वाक्येन तोषितः ।
सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥ १ ॥
युक्तरूपं त्वया देवि भाषितं शुभदर्शने ।
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥ २ ॥
स्त्रीत्वान्नत्वं समर्थासि सागरं व्यतिवर्तितुम् ।
मामधिष्ठाय विस्तीर्णं शतयोजनमायतम् ॥ ३ ॥
द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते ।
रामादन्यस्य नार्हामि संसर्गमिति जानकी ॥ ४ ॥

एतत्ते देवि सदृशं पत्न्यास्तस्य महात्मनः ।
का ह्यन्या त्वामृते देवि ब्रूयाद्वचन मीदृशम् ॥ ५ ॥
श्रोष्यते चैव काकुत्स्थः सर्वं निरवशेषतः ।
चेष्टितं यत्त्वया देवि भाषितं च ममाग्रतः ॥ ६ ॥
कारणै र्बहुभिर्देवि रामप्रियचिकीर्षया ।
स्नेहप्रस्कन्नमनसा मयैतत्समुदीरितम् ॥ ७ ॥
लङ्काया दुष्प्रवेशत्वाद् दुस्तरत्वान्महोदधेः ।
सामर्थ्यादात्मनश्चैव मयैतत् समुदीरितम् ॥ ८ ॥
इच्छामि त्वां समानेतु मद्यैव रघुनन्दिना ।
गुरुस्नेहेन भक्त्या च नान्यथा तदुदाहृतम् ॥ ९ ॥
यदि नोत्सहसे यातुं मया सार्धं मनिन्दिते ।
ज्ञानं अभिप्रयच्छ त्वं जानीया द्राघवो हि यत् ॥ १०
ब्रूहि यद्राघवो वाच्यो लक्ष्मणश्च महाबलः ।
सुग्रीवो वापि तेजस्वी हरयो वा समागताः ॥ ५२ ॥
इत्युक्तवति तस्मिंश्च सीता पुनरथाब्रवीत् ।
कौशल्या लोकभर्तारं सुषुवे यं मनस्विनी ॥ ५३ ॥
तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ।
स्रजश्च सर्वरत्नानि प्रियायाश्च वराङ्गनाः ॥ ५४ ॥
ऐश्वर्यं च विशालायां पृथिव्या मपि दुर्लभम् ।
पितरं मातरं चैव संमान्याभिप्रसाद्य च ॥ ५५ ॥
अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः ।
आनुकूल्येन धर्मात्मा त्यक्त्वा सुख मनुत्तमम् ॥ ५६ ॥
अनुगच्छति काकुत्स्थं भ्रातरं पालयन् वने ।
सिंहस्कन्धो महाबाहु र्मनस्वी प्रियदर्शनः ॥ ५७ ॥
पितृवत् वर्तते रामे मातृवन्मां समाचरत् ।
ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः ॥ ५८ ॥
वृद्धोपसेवी लक्ष्मीवान् शक्तो न बहुभाषिता ।
राजपुत्र प्रियश्रेष्ठः सदृशः श्वशुरस्य मे ॥ ५९ ॥

मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ।
न युक्तो धुरि यस्यां तु तामुद्वहति वीर्यवान् ॥ ६० ॥
यं दृष्ट्वा राघवो नैव वृत्तमार्य मनुस्मरत् ।
स ममार्थाय कुशलं वक्तव्यो वचनान्मम ॥ ६१ ॥
मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः ।
यथा हि वानरश्रेष्ठ दुःखक्षय करो भवेत् ॥ ६२ ॥
इदं ब्रूयाश्च मे नाथं शूरं रामं पुनः पुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ॥ ६३ ॥
ऊर्ध्वं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ।
रावणेनो परुद्धां मां निकृत्या पाप कर्मणा ।
त्रातुमर्हसि वीर त्वं पातालादिव कौशिकीम् ॥ ६४ ॥
ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणि शुभम् ।
प्रदेयो राघवायेति सीता हनुमते ददौ ॥ ६५ ॥
मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ।
सीतां प्रदक्षिणां कृत्वा प्रणतः पार्श्वतः स्थितः ॥ ६७ ॥
हर्षेण महता युक्तः सीता दर्शनजेन सः ।
हृदयेन गतो रामं लक्ष्मणं च स लक्षणम् ॥ ६८ ॥
मणिवर मुपगृह्य तं महार्हं जनक नृपात्मजया धृतं प्रभावात् ।
गिरिवर पवना वधूतमुक्तः सुखितमना. प्रति संक्रमं प्रपेदे ॥ ७० ॥

---

सुन्दर सर्ग ३६ ज्ञात्वा संप्रस्थितं देवी वानरं पवनात्मजम् ।
बाष्प गद्गदया वाचा मैथिली वाक्य मब्रवीत् ॥ ६ ॥
हनूमन् कुशलं ब्रूयाः सहितौ राम लक्ष्मणौ ।
सुग्रीवं च सहामात्यं सर्वान् वृद्धांश्च वानरान् ।
ब्रूयास्त्वं वानरश्रेष्ठ कुशलं धर्म संहितम् ॥ ७ ॥
यथा च स महाबाहु र्मां तारयति राघवः ।
अस्माद् दु खाम्बु संरोधात् त्वं समाधातुमर्हसि ॥ ८ ॥

जीवन्तीं मां यथा रामः संभावयति कीर्तिमान् ।
तत्त्वया हनुमन् वाच्यं वाचा धर्ममवाप्नुहि ॥ ९ ॥

---

सुन्दर सर्ग ४० यथा तं पुरुषव्याघ्रं गात्रैः शोकाभिकर्षितैः ।
संस्पृशेयं सकामाहं तथा कुरु दयां मयि ॥ ३ ॥
अभिज्ञानं च रामस्य दद्या हरिगुणोत्तम ।
क्षिप्तामिषीकां काकस्य कोपादेकाक्षि शातनीम् ॥ ४ ॥
मनःशिलाया स्तिलको गण्डपार्श्वे निवेशितः ।
त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ॥ ५ ॥
स वीर्यवान् कथं सीतां हृतां समनुमन्यसे ।
वसन्तीं रक्षसां मध्ये महेन्द्रवरुणोपम ॥ ६ ॥
एष चूडामणिर्दिव्यो मया सुपरिरक्षितः ।
एतं दृष्ट्वा प्रहृष्यामि व्यसने त्वामिवानघ ॥ ७ ॥
एष निर्यातितः श्रीमान् मया ते वारिसंभवः ।
अतः परं न शक्ष्यामि जीवितुं शोकलालसा ॥ ८ ॥
असह्यानि च दुःखानि वाचश्च हृदयच्छिदः ।
राक्षसैः सह संवासं त्वत्कृते मर्षयाम्यहम् ॥ ९ ॥
धारयिष्यामि मासं तु जीवितं शत्रुसूदन ।
मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज ॥ १० ॥
घोरो राक्षसराजोऽयं दृष्टिश्च न सुखा मयि ।
त्वां च श्रुत्वा विषज्जन्तं न जीवेयमपि क्षणम् ॥ ११ ॥
वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् ।
अथाब्रवीन् महातेजा हनूमान् मारुतात्मजः ॥ १२ ॥
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ।
रामे शोकाभिभूते तु लक्ष्मणः परितप्यते ॥ १३ ॥

दृष्टा कथञ्चिद् भवती न कालः परिदेवितुम् ।
इमं मुहूर्तं दुःखाना मन्तं द्रक्ष्यसि भामिनि ॥ १४ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रा वनिन्दितौ ।
त्वद्दर्शन कृतोत् साहौ लङ्कां भस्मी करिष्यतः ॥ १५ ॥
हत्वा तु समरे रक्षो रावणं सह बान्धवैः ।
राघवौ त्वां विशालाक्षि स्वां पुरीं प्रति नेष्यतः ॥ १६ ॥
यत्तु रामो विजानीया दभिज्ञान मनिन्दिते ।
प्रीतिसंजननं भूयस्तस्य त्वं दातु मर्हसि ॥ १७ ॥
साऽब्रवीद्दत्तमेवाहो मयाऽभिज्ञान मुत्तमम् ।
एतदेव हि रामस्य दृष्ट्वा यत्नेन भूषणम् ॥ २० ॥
श्रद्धेयं हनुमन् वाक्यं तव वीर भविष्यति ।
स तं मणिवरं गृह्य श्रीमान् प्लवगसत्तमः ॥ २१ ॥
प्रणम्य शिरसा देवीं गमनायोपचक्रमे ।
तमुत्पात कृतोत्साह मवेक्ष्य हरियूथपम् ॥ २२ ॥
वर्धमानं महावेग मुवाच जनकात्मजा ।
अश्रुपूर्णमुखी दीना बाष्प गद्गदया गिरा ॥ २३ ॥
हनूमन् सिंहसंकाशौ भ्रातरौ रामलक्ष्मणौ ।
सुग्रीवं च सहामात्यं सर्वान् ब्रूया अनामयम् ॥ २४ ॥
यथा च स महाबाहु मां तारयति राघवः ।
अस्माद् दुःखाम्बु संरोधात् त्वं समाधातु मर्हसि ॥ २५ ॥
इदं च तीव्रं ममशोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरि प्रवीर ॥ २६ ॥
स राजपुत्र्या प्रतिवेदितार्थः कपिः कृतार्थः परिहृष्टचेताः ।
तदल्पशेषं प्रसमीक्ष्य कार्यं दिशं ह्युदीचीं मनसा जगाम ॥ २७ ॥

---

## स्वर्गनरकगति वर्णनम् ।

इतिहास. ८ युधि॰ उ॰ कीदृशैः कर्मभिः प्रेत्य गच्छन्ति नरकं नराः ।
अनु॰ २३ स्वर्गं च कीदृशैश्चैव तन्मे त्वं वक्तुमर्हसि ॥ १ ॥
भीष्म उ॰ ब्राह्मण्यं पुण्यमुत्सृज्य ये द्विजा लोभमोहिताः ।
कुकर्माण्यपि कुर्वंति ते वै निरयगामिनः ॥ २ ॥
परुषाः पिशुनाश्चैव मानिनोऽनृतवादिनः ।
अनिबद्धप्रलापाश्च नरा निरयगामिनः ॥ ३ ॥
ये परस्वापहर्तारस्तद्गुणानामसूयकाः ।
परश्रियाभितप्यंते ते वै निरयगामिनः ॥ ४ ॥
कूपानां च तडागानां प्रपानां च परंतप ।
रथ्यानां चैव भेत्तारस्ते वै निरयगामिनः ॥ ५ ॥
प्राणिनां प्राणहिंसायां ये नरा निरताः सदा ।
प्रव्रज्यावसिता ये च ते वै निरयगागामिनः ॥ ६ ॥
विसृज्यादंति ये दारान् शिशून् भृत्यातिथींस्तथा ।
उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ॥ ७ ॥
यतीनां दूषका राजन् सतीनां दूषकास्तथा ।
वेदानां दूषकाश्चैव ते वै निरयगामिनः ॥ ८ ॥
आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् ।
न चिन्तयन्ति ये विष्णुं ते वै निरयगामिनः ॥ ९ ॥
ब्राह्मणानां गवां चैव कन्यानां सुहृदां तथा ।
येऽन्तरं यान्ति कार्येषु ते वै निरयगामिनः ॥ १० ॥
काष्ठैर्वा शंकुभिर्वापि कंटकैरुपलैस्तथा ।
पंथानं येऽवरुन्धन्ति ते वै निरयगामिनः ॥ ११ ॥
सर्वभूतेषु निःस्वस्थाः सर्वभूतेषु निर्दयाः ।
सर्वभूतेषु जिह्माश्च ते वै निरयगामिनः ॥ १२ ॥
आगतान् भोजनार्थं वा ब्राह्मणान् वृत्तिकर्शितान् ।
परीक्षां ये च कुर्वंति ते वै निरयगामिनः ॥ १३ ॥
क्षेत्रवृत्तिगृहच्छेदं प्रीतिच्छेदं च ये नराः ।
आशाछेदं प्रकुर्वन्ति ते वै निरयगामिनः ॥ १४ ॥

अनन्यां शरणां भार्य्यां ऋतुकालव्यतिक्रमम् ।
कुर्वन्ति पुरुषा लुब्धास्ते वै निरयगामिनः ॥ १५ ॥
केशविक्रयितारश्च रसविक्रयिकाश्च ये ।
विषविक्रयितारश्च ते वै निरयगामिनः ॥ १६ ॥
आशया समनुप्राप्तान् क्षुत्तृष्णाश्रमकर्शितान् ।
येऽतिथीनवमन्यंते ते वै निरयगामिनः ॥ १७ ॥
मद्यमांसरताश्चैव गीतवाद्यरताश्च ये ।
द्यूतसंगरताश्चैव ते वै निरयगामिनः ॥ १८ ॥
अयोनौ च वियोनौ च पशुयोनौ च भारत ।
समुत्सृजन्ति ये वीर्य्यं ते वै निरयगामिनः ॥ १९ ॥
ये शरीरमलान्यग्नौ प्रक्षिपन्ति जले तथा ।
उद्यानेष्वपि गोष्ठे वा ते वै निरयगामिनः ॥ २० ॥
स्त्रीधनान्युपजीवन्ति ये नरा स्त्रीजितास्तथा ।
स्त्रियश्चैव न रक्षन्ति ते वै निरयगामिनः ॥ २१ ॥
शस्त्राणां ये च कर्त्तारः शल्यानां धनुषां तथा ।
विक्रेतारश्च राजेन्द्र ते वै निरयगामिनः ॥ २२ ॥
अनाथं कृपणं दीनं रोगार्त्तं वृद्धमेव च ।
नानुकम्पन्ति येमूढा स्ते वै निरयगामिनः ॥ २३ ॥
एतत्ते कथिता राजन् नरा निरयगामिनः ।
भागिनः स्वर्गलोकस्य ये प्रोक्तास्तान्निबोध मे ॥ २४ ॥
सत्येन तपसा क्षांत्या दानेनाध्ययनेन च ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ २५ ॥
ये च होमजपस्नानदेवतार्चनतत्पराः ।
श्रद्धाना महात्मनस्ते नराः स्वर्गगामिनः ॥ २६ ॥
मातापित्रोश्च शुश्रूषां ये कुर्वन्ति सदादृताः ।
वर्जयन्ति दिवास्वापं ते नराः स्वर्गगामिनः ॥ २७ ॥
सर्वहिंसानिवृत्ताश्च नित्यं सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ २८ ॥
शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत ।
ये प्रतिग्रहनिस्नेहा स्तेन राः स्वर्गगामिनः ॥ २९ ॥

भयार्त्तानां सशोकानां दरिद्रान् व्याधिकर्शितान् ।
विमोचयन्ति ये जन्तून् ते नराः स्वर्गगामिनः ॥ ३० ॥
सहस्रपरिवेष्टार स्तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥ ३१ ॥
आढ्याश्च रूपवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरा स्ते नराः स्वर्गगामिनः ॥ ३२ ॥
सुवर्णस्य च दातारो गवां भूमेश्च भारत ।
अन्नानां वाससां चैव ते नराः स्वर्गगामिनः ॥ ३३ ॥
निवेशनानां धान्यानां रसानां च परंतप ।
स्वयमुत्पाद्य दातार स्ते नराः स्वर्गगामिनः ॥ ३४ ॥
द्विषतामपि ये दोषान्न वदन्ति कदाचन ।
कीर्तयन्ति गुणानेव ते नराः स्वर्गगामिनः ॥ ३५ ॥
प्रवृत्तिं च निवृत्तिं च वेदशास्त्रोक्तवर्त्मना ।
आचरंतो महात्मान स्ते नराः स्वर्गगामिनः ॥ ३६ ॥
येऽनभ्यास्य बलाद्वक्तुं न जानन्ति वचोऽप्रियम् ।
प्रियवाक्यैकविज्ञाना स्ते नराः स्वर्गगामिनः ॥ ३७ ॥
ये चापि भागं कुर्वन्ति क्षुत् तृष्णाश्रमकर्षितान् ।
हंतकारस्य दातार स्ते नराः स्वर्गगामिनः ॥ ३८ ॥
वापीकूपतडागानां प्रपानां देववेश्मनाम् ।
आश्रमाणां च कर्तार स्ते नराः स्वर्गगामिनः ॥ ३९ ॥
असत्येष्वपि सत्या ये ऋजवो नार्जवेषु च ।
रिपुष्वपि हितेच्छाश्च ते नराः स्वर्गगामिनः ॥ ४० ॥
यस्मिन् कस्मिन् कुले जाता बहुपुत्राः शतायुषः ।
सानुक्रोशा जितक्रोधा स्ते नराः स्वर्गगामिनः ॥ ४१ ॥
अवन्ध्यं दिवसं कर्त्तुं धर्मेणैकेन सर्वथा ।
प्रीतिं गृह्णन्ति ये नित्यं ते नराः स्वर्गगामिनः ॥ ४२ ॥
परैरप्यगृहीतं यत् तृणमप्यटवी गतम् ।
मनसापि न गृह्णन्ति ते नराः स्वर्गगामिनः ॥ ४३ ॥
आक्रोशंतं स्तुवंतं च तुल्यं पश्यन्ति ये नराः ।
शांतात्मानो जितात्मान स्ते नराः स्वर्गगामिनः ॥ ४४ ॥

ये च दस्युभयग्रस्तान् ब्राह्मणान् याः स्त्रियस्तथा ।
सर्वं च परिरक्षंति ते नराः स्वर्गगामिनः ॥ ४५ ॥
आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
मातृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ ४६ ॥
मनमश्चेन्द्रियाणां च नित्यं संयमने रताः ।
त्यक्तशोकभयक्रोधास्ते नराः स्वर्गगामिनः ॥ ४७ ॥
यूकामत्कुणदंशादीन् ये जंतून् तुदतस्तनुम् ।
पुत्रवत्परिरक्षंति ते नराः स्वर्गगामिनः ॥ ४८ ॥
अर्थानि च यथोक्तेन विधिना संचयन्ति ये ।
सर्वद्वन्द्वसहा धीराः स्वर्गं यान्ति न संशयः ॥ ४९ ॥
कर्मणा मनसा वाचा नोपतापयते परम् ।
सर्वथा शुद्धभावो यः स याति त्रिदिवं नरः ॥ ५० ॥
ये पुनः परदारांश्च कर्मणा मनसा गिरा ।
रमयन्ति न सत्वस्था स्ते नराः स्वर्गगामिनः ॥ ५१ ॥
निंदितानि न कुर्वन्ति कुर्वन्ति विहितानि ये ।
आत्मशक्तिं च विज्ञाय ते नराः स्वर्गगामिनः ॥ ५२ ॥
एतत्ते कथितं सर्वं मया तत्वेन भारत ।
दुर्गतिः सुगतिश्चैव प्राप्यते कर्मभिर्यथा ॥ ५३ ॥
नरः परेषां प्रतिकूलमाचरन् प्रयाति घोरं नरकं सुदुःसहम् ।
सदानुकूलस्य नरस्य जीवितं सुखावहं मुक्तिरदूरतः स्थिता ॥५४॥

---

## परमश्रेयः ।

म.भा.अनु.९-युधि. उ. अतिक्रामति कालेऽस्मिन् सर्वभूतक्षयावहे ।
शान्ति १७५. किं कर्तव्यं परं श्रेयस्तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म. उ. सर्वसत्वदयालुत्वं सर्वेन्द्रियविनिग्रहः ।
सर्वत्रानित्यबुद्धिश्च श्रेयः परमिदं स्मृतम् ॥ २ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रस्य संवादं तन्निबोध युधिष्ठिर ॥ ३ ॥

द्विजातेः कस्यचित्पुत्रो मेधावी नामतो ऽभवत् ।
अब्रवीत्पितरं प्राज्ञः स्वाध्यायाध्ययने रतः ॥ ४ ॥
पु.उ. धीरः किंस्वित्तात कुर्याच्छुभार्थी क्षिप्रं ह्यायुः क्षीयते मानवानाम् ।
पितस्तदाचक्ष्व ममत्वमाशु यथा परं धर्ममिमं चरेयम् ॥ ५ ॥
पि.उ. अधीत्य वेदान् ब्रह्मचर्येण पुत्र पुत्रानिच्छेत्पावनार्थं पितॄणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषे ॥ ६ ॥
पु. उवाच. मृत्युनाभ्याहते लोके जरया परिपीडिते ।
व्याधिभिर्ग्रस्यमानस्य किं स्वस्थ इव भाषसे ॥ ७ ॥
सर्वोपायैर्यदा नास्ति मर्त्यस्य प्रतिक्रिया ।
सो ऽहं कथं प्रतीक्षिष्ये जालेनेवधृतिश्चिरम् ॥ ८ ॥
रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा ।
स्वल्पोदके मत्स्य इव धृतिं विन्देत कः पुमान् ॥ ९ ॥
कुतो नु खलु दीर्घत्वमायुषस्तात देहिनाम् ।
आदित्यरथवेगेन क्षीयते हि प्रतिक्षणम् ॥ १० ॥
प्रतिक्षणमयं कालः क्षीयमाणो न लक्ष्यते ।
अश्वत्थचलपत्रस्थे नलिनीजलवत् स्थिते ॥ ११ ॥
स्थिराशा जीविते यस्य तत्तुल्यो नास्त्यचेतनः ।
जातमेवान्तकोऽन्वेति जरावन्वेति देहिनम् ॥ १२ ॥
अनुपक्तं द्वयेनैव सर्वं स्थावरजङ्गमम् ।
को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ॥ १३ ॥
कर्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत् ।
दूरस्थमपि भावित्वाद्विनाशं समुपस्थितम् ॥ १४ ॥
अयमेव हि नः कालः पूर्वमासीदनागतः ।
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने ॥ १५ ॥
आयाति नीयमानस्य वध्यस्येव पदे पदे ।
उत्पत्तेरेव योऽदृश्यं महद्भयमुपस्थितम् ॥ १६ ॥
मरणव्याधिदुःखानां किमद्य निपतिष्यति ।
न तं पश्यामि लोकेऽस्मिन् यो न जातो मरिष्यति ॥ १७ ॥
इति संप्रत्ययं बुद्ध्वा स्वस्थैस्तु कथमास्यते ।
न व्याधयो न च यमः श्रेयः प्राप्तुं प्रतीक्षते ॥ १८ ॥

ये च दस्यु भयग्रस्तान् ब्राह्मणान् याः स्त्रियस्तथा ।
सर्वं च परिरक्षंति ते नराः स्वर्गगामिनः ॥ ४५ ॥
आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
मातृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ ४६ ॥
मनसश्चेन्द्रियाणां च नित्यं संयमने रताः ।
त्यक्तशोकभयक्रोधास्ते नराः स्वर्गगामिनः ॥ ४७ ॥
यूकामत्कुणदंशादीन् ये जंतून् तुदतस्तनुम् ।
पुत्रवत्परिरक्षंति ते नराः स्वर्गगामिनः ॥ ४८ ॥
अर्थानि च यथोक्तेन विधिना संचयन्ति ये ।
संवद्वन्द्वसहा धीराः स्वर्गं यान्ति न संशयः ॥ ४९ ॥
कर्मणा मनसा वाचा नोपतापयते परम् ।
सर्वथा शुद्धभावो यः स याति त्रिदिवं नरः ॥ ५० ॥
ये पुनः परदारांश्च कर्मणा मनसा गिरा ।
रमयन्ति न सत्वस्था स्ते नराः स्वर्गगामिनः ॥ ५१ ॥
निंदितानि न कुर्वन्ति कुर्वन्ति विहितानि ये ।
आत्मशक्तिं च विज्ञाय ते नराः स्वर्गगामिनः ॥ ५२ ॥
एतत्ते कथितं सर्वं मया तत्वेन भारत ।
दुर्गतिः सुगतिश्चैव प्राप्यते कर्मभिर्यथा ॥ ५३ ॥
नरः परेषां प्रतिकूल माचरन् प्रयाति घोरं नरकं सुदुःसहम् ।
सदानुकूलस्य नरस्य जीवितं सुखावहं मुक्तिरदूरतः स्थिता ॥५४॥

---

## परमश्रेयः ।

इति समु १८ युधि उ० अतिक्रामति कालेऽस्मिन् सर्वभूतक्षयावहे ।
शान्ति १७५. किं कर्तव्यं परं श्रेयस्तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म० उ सर्वसत्वदयालुत्वं सर्वेन्द्रियविनिग्रहः ।
सर्वत्रानित्यबुद्धिश्च श्रेयः परमिदं स्मृतम् ॥ २ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रस्य संवादं तन्निबोध युधिष्ठिर ॥ ३ ॥

यावदेव भवेत्काल स्तावच्छ्रेयः समाचरेत् ।
बाल एव चरेद्धर्ममनित्यं जीवितं यतः ॥ १९ ॥
फलानामिव पक्वानां शश्वत्पतनतो भयम् ।
युवत्वापेक्षया बालो वृद्धत्वापेक्षया युवा ॥ २० ॥
मृत्योरुत्संगमारूढः स्वचिरः किमपेक्षते ।
पापं परिहरंनित्यमात्मानं परिपालयेत् ॥ २१ ॥
वर्षासु जीर्णमुदजं तिष्ठन्नेवाशु सीदति ।
व्रजन्ति न निवर्त्तन्ते श्रोतांसि सरितामिव ॥ २२ ॥
आयुरादाय मर्त्यानां यथा रात्र्यहनी पुनः ।
अहोरात्राणि मासांश्च क्षणान् काष्ठान् कलालवान् ॥ २३ ॥
संपीडयति नः कालो वृद्धिं वार्द्धुषिको यथा ।
यथागारं दृढस्थूणं जीर्णं भिन्नं च सीदति ।
तथा च सीदति नरः कालस्य वशमागतः ॥ २४ ॥
कालस्य वशमायान्ति विवशाः सर्वदेहिनः ।
न मृत्युमवगच्छन्ति विषयासक्तचेतसः ॥ २५ ॥

इदं श्वो नेदमद्येति नैतन्मर्त्यस्य युज्यते।
अवश्यं भाविता तथ्यं यस्मिन्न भविता भवान्॥ ३३॥
न कश्चिदपि जानीते कस्य किं श्वो भविष्यति।
तस्मात् श्वो करणीयानि कुर्य्यादद्यैव बुद्धिमान्॥ ३४॥
श्वकार्य्यं मद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षयते मृत्युः कृतं वास्य न वा कृतम्॥ ३५॥
इदं कृतमिदं कार्य्य मिदमन्यत्कृता कृतम्।
एवमीहा समायुक्तं कृतांतः कुरुते वशः॥ ३६॥
मोहेन त्वं समाविष्टः पुत्रदारार्थमुद्यतः।
कृत्वा कार्य्यमकार्य्यं वा पुष्टिमेषां प्रयच्छति॥ ३७॥
तं पुत्र पशुमित्रार्थं व्यासक्तमनसं नरम्।
व्याघ्रः पशुमिवाक्रम्य मृत्यु रादाय गच्छति॥ ३८॥
मस्तकस्थायिनं मृत्युं यदि पश्येदिदं जनः।
आहारोऽपि न रोचेत किमु वा कार्य कारिता॥ ३९॥
स्नेहपाशैर्बहुविधै रासक्तमनसो जनाः।
अकृतार्था वसीदन्ति सैकताः सेतवो यथा॥ ४०॥
अपर्य्यन्तस्य कालस्य कियद्वा शारदां शतम्।
तन्मात्र परमायुर्यः कथं स्वस्थः स तिष्ठति॥ ४१॥
दश वर्षाः षोडशिका विंशत्त्रिंशतिकास्तथा।
सर्वे वर्ष शतादूर्द्ध्वं न भविष्यन्ति मानवाः॥ ४२॥
सम्पदः स्वप्नसंकाशा यौवनं कुसुमोपमम्।
तडिच्चंचल मायुश्च कस्य स्याज्जानतो धृतिः॥ ४३॥
किमनेन करिष्यामि जरामरणभीरुणा।
अध्रुवेण शरीरेण मृत्यु छन्दानुवर्त्तिना॥ ४४॥
तृणानल नदी वेग स्वप्न संकाश वृत्तिषु।
आयुर्यौवन रूपेषु प्राज्ञः को नाम विश्वसेत॥ ४५॥
दृष्ट्वाऽनाथ मिवाक्रंदच्छोषन्तं मृत्युना जगत॥ ४६॥
इदं हि मरणायत्तं संसारौघे निराश्रये।
जगन्न स्थानमाप्नोति भ्राम्यमाणं स्वकर्मभिः॥ ४७॥

इदमेवं करिष्यामि तत एवं भविष्यति ।
संकल्पः क्रियते योऽयं न तं मृत्युः प्रतीच्छति ॥ ४८ ॥
अहमेको न मे कश्चि न्नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं न च सोऽस्ति यो मम ॥ ४९ ॥
एकः प्रसूयते जन्तु रेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृत मेकश्चाप्नोति दुष्कृतम् ॥ ५०
मृतं श रीर मुत्सृज्य काष्टलोष्ठसमं क्षितौ ।
विमुखा बान्धवा यांति धर्मस्तमनुगच्छति ॥ ५१
बलिनो मृत्युसिंहस्य संसारवनचारिणः ।
शृण्वन्व्याधिजरानादान् कथं तिष्ठसि निर्भयः ॥
सपुत्रदारभृत्यस्य सपशुद्रविणस्य च ।
कियन्तो दिवसा स्तात यास्यन्ति कुशलेन ते
यावन्न ग्रस्यसे रोगै यावन्नोपेति ते जरा ।
यावन्न क्षीयते चायु स्तावच्छ्रेयः समाचर
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
जरापंकार्णवे मग्ना जीर्णा वन गजा इव ॥
लोहदारुमयैः पाशैर्दृढं बद्धो विमुच्यते ।
पुत्रदारमयैः पाशैः पुमान्बद्धो न मुच्यते ॥
न च ते पुत्रदारेषु कर्तव्या मतिरीदृशी ।
कथं नु कृपया ह्येते वर्तिष्यन्ते मया विना
संगत्या जठरे न्यस्तं रेतोविन्दु मचेतनम् ।
केन यत्नेन जीवंतं गर्भस्थमिह पश्यसि ॥ ५८
अन्नपानादि जीर्यंते यत्र भक्षाश्चभक्षिताः ।
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते ॥ ५९
यद्गर्भे पालयत्येनं यच संवर्द्धयत्यपि ।
तदेवास्य स्वकं कर्म सुखदुःखोपपादने ॥ ६० ॥
स्वयं मृत्पिंडभूतस्य परतन्त्रस्य सर्वशः ।
स्वरक्षणेऽप्यशक्तस्य को हेतु स्तस्य रक्षणे ॥ ६१
स्वकृतै जायते जन्तुः स्वकृतै रेव वर्धते ।
सुखदुःखे तथामृत्युं स्वकृतैरेव । ६

क्वासं क्व च गमिष्यामि कश्चाहं किमिहागतः ।
को बन्धु र्मम कस्याहं मित्यात्मानं विचिन्तय ॥ ६३ ॥
न बन्धुरस्ति ते कश्चिन्न त्वं बन्धुश्च कस्यचित् ।
पथि संगतमेवैतद् दार बन्धुसुहृज्जनैः ॥ ६४ ॥
पुरासीत् स्वजनस्तेऽन्यः सांप्रतं वर्त्तते परः ।
देहांते भविता चान्य स्तस्मात्त्वं परतः परः ॥ ६५ ॥
एवं व्यवस्थिते लोके कः कस्य स्वजनो जनः ।
को वा परजनः कस्य मोह एव तु केवलम् ॥ ६६ ॥
पुत्रदारमयैः पाशै र्मोहजैः कर्मतंतुभिः ।
कोशकार इवात्मानं वेष्टयन्नाववुध्यसे ॥ ६७ ॥
दह्यमानोऽपि लोकेऽस्मिन् महता कालवह्निना ।
को लभेत धृतिं प्राज्ञः प्रदीप्त इव वेश्मनि ॥ ६८ ॥
किं ते धनै र्बान्धवै र्वा किं मित्रैः पुत्रपौत्रकैः ।
आत्मानमन्विच्छ गुहां प्रविष्टं पितामहस्ते क्वगतः पिता च ६९
सर्वावासं सर्वगं ज्ञानगम्यं योगिध्येयं वासुदेवं समग्रम् ।
नित्यानन्दं चिन्तय त्वं चिराय सर्वद्वंद्वै र्मोक्षमन्विच्छमानः ७०
न माता न पिता कश्चित् कस्यचित्प्रति पद्यते ।
दानमध्ययनं जन्तुः स्वकर्म फल मश्नुते ॥ ७१ ॥
स्वकर्म फल निक्षेपं विधानं विधिनिर्मितम् ।
भूत ग्राम मिमं कालः समंतादपकर्षति ॥ ७२ ॥
हा तात हा स्वकान्तेति क्रन्दन्ते च सुदुःखिता ।
मंडूक इव सर्पेण मृत्युना ग्रस्यते जनः ॥ ७३ ॥
पण्डिते चैव मूर्खे च बलवत्यथ दुर्बले ।
ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ ७४ ॥
जरामृत्यू हि लोकानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महता मपि ॥ ७५ ॥
न कश्चिद्यात्यतिक्रामन् जरां मृत्युं च मानवः ।
अपि सागरपर्य्यन्तां विजित्येमां वसुन्धराम् ॥ ७६ ॥
मृत्युं नैव विजेष्यन्ति कः पुमान् बुद्धिमान् भवेत् ।
व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः ॥ ७७ ॥

जातं मृत्युर्जरयति निमेषं नातिवर्त्तते ।
निमेषा दश चाष्टौ च काष्ठास्त्रिंशत्तु ताः कलाः ॥७८॥
त्रिंशत्कला मुहूर्तः स्यात्त्रिंशतस्ते त्वहर्निशम् ।
निमेषादि रयं कालः शीघ्रत्वात्सर्वदेहिनाम् ॥ ७९ ॥
हरत्यायुर्द्विजश्रेष्ठ नदीवेग इव प्लवम् ।
निमेषमात्र मपि ते वयो गच्छन्नतिष्ठति ॥ ८० ॥
तस्माद्देहेष्वनित्येषु यन्नित्यं तत्समाचर ।
अनित्ये सति मानुष्ये विद्युत्स्फुरण चंचले ॥ ८१ ॥
ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ।
किमतः परमन्यंते कथयामि पुनः पुनः ॥ ८२ ॥
अनित्यं सर्वमेवेदं यत्किञ्चिदपि पश्यसि ।
तदनित्य मिति ज्ञात्वा सर्वभावेष्वनित्यताम् ॥ ८३ ॥
सर्वारम्भान् परित्यज्य भव चात्मनि योगवित् ।
आत्मज्ञान मधीयानो यजन्नात्मान मात्मना ॥ ८४ ॥
आत्मज्ञानो भविष्यामि न मां तारयते प्रजाः ।
सोऽहं त्वहिंस्रः सत्यात्मा कामक्रोधविवर्जितः ॥ ८६ ॥
जितेन्द्रियः समो भूत्वा मृत्युं जेष्याम्यमर्त्यवत् ।
अन्तर्बहिश्च यत्किञ्चिन्मनो वा सङ्गकारणम् ॥ ८७ ॥
तत्सर्वं संपरित्यज्य ध्यानाभ्यासे मनः सदा ।
मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ॥ ८८ ॥
तावत् स्थास्यामि नियतो यावन्नत्ययमागतम् ।
विमुक्तहृदयासंगं सन्निरुध्य मनो हृदि ॥ ८९ ॥
यदा यात्युन्मनीभावं तदा निर्वाणमृच्छति ।
कामक्रोधभयेनेह तमसा हृततेजसः ॥ ९० ॥
पिशुनाश्च कृतघ्नाश्च नास्तिका भिन्नवृत्तयः ।
एतन्मूढा न पश्यन्ति मोक्षद्वारमपावृतम् ॥ ९१ ॥
अश्वमेधसहस्राणि राजसूयशतानि च ।
ध्यानयोगस्य सर्वाणि कलां नार्हन्ति षोडशीम् ॥ ९२ ॥
भोष्म.उ. पुत्रस्य तद्वचः श्रुत्वा मोक्षधर्मविदस्तथा ।
तथैव कृतवान्विप्रो यथैतद ऽवदत् सुतः ॥ ९३ ॥

एवं समेधावि वचः प्रचोदितः शरीरमध्यात्महितं विचिंतयन् ।
तथैव सर्वार्थविरक्तिमेयिवान् द्विजोत्तमः सर्वसुखेषु निस्पृहः ६४
सशंख चक्रं रविमण्डले स्थितं कुशेशया क्रांत मनन्त मच्युतम् ।
जगाम बुद्ध्या सवनीयरूपिणं द्विजोत्तमश्चित्र विभूषणोज्वलम् ६५

---

## आचारः

मनुः अ. १. आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
तस्मादस्मिन् सदायुक्तो नित्यं स्या दात्मवान् द्विजः ॥१०८
आचारा द्विच्युतो विप्रो न वेद फल मश्नुते ।
आचारेण तु संयुक्तः संपूर्णफलभाग भवेत् ॥ १०९ ॥
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ ११० ॥
मनुः अ. ४ श्रुति स्मृत्युदितं सम्यग् निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥ १५५ ॥
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ १५६ ॥
दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितो ऽल्पायुरेव च ॥ १५७ ॥
सर्वलक्षणहीनो ऽपि यः सदाचारवान् नरः ।
श्रद्दधानो ऽनसूयश्च शतं वर्षाणि जीवति ॥ १५८ ॥

---

महा. अनु. १०४ युधि. उ. शतायुरुक्तः पुरुषः शतवीर्य्यश्च जायते ।
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ १ ॥
आयुष्मान् केन भवति अल्पायु र्वापि मानवः ।
केन वा लभते कीर्त्तिं केन वा लभते श्रियम् ॥ २ ॥
तपसा ब्रह्मचर्येण जपहोमै स्तथौषधैः ।
कर्मणा मनसा वाचा तन्मे ब्रूहि पितामह ॥ ३ ॥
भीष्म उ. अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि ।
अल्पायु र्येन भवति दीर्घायु र्वापि मानवः ॥ ४ ॥

येन वा लभते कीर्ति येन वा लभते श्रियम्।
यथा वर्त्तयन् पुरुषः श्रेयसा सम्प्रयुज्यते ॥ ५ ॥
आचाराल्लभते चायु राचाराल्लभते श्रियम्।
आचाराल्लभते कीर्ति पुरुषः प्रेत्य चेह च ॥ ६ ॥
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्।
यस्मात् त्रसन्ति भूतानि तथा परिभवन्ति च ॥ ७ ॥
तस्मात् कुर्य्यादिहाचारं यदीच्छेद्भूति मात्मनः।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥ ८ ॥
आचारलक्षणो धर्मः सन्त श्चारित्रलक्षणाः।
साधूनाञ्च यथावृत्तमेतदाचारलक्षणम् ॥ ९ ॥
ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ११ ॥
विशीला भिन्न मर्यादा नित्यं सङ्कीर्णमैथुनाः।
अल्पायुषो भवन्तीं ह नरा निरयगामिनः ॥ १२ ॥
सर्वलक्षण हीनोऽपि समुदाचारवान्नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ १३ ॥
अक्रोधनः सत्यवादी भूतानामविहिंसकः।
अनसूयुरजिह्मश्च शतंवर्षाणि जीवति ॥ १४ ॥
लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः।
नित्योच्छिष्टः शङ्कुशुको नेहायु र्विन्दते महत् ॥ १५ ॥
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्।
उत्थायाचम्य तिष्ठेत पूर्वां सन्ध्यां कृताञ्जलिः ॥ १६ ॥
एवमेवापरां सन्ध्यां समुपासीत वाग्यतः।
नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन ॥
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ १७ ॥
ऋषयो नित्यसन्ध्यत्वा दीर्घमायु रवाप्नुवन्।
तस्मात्तिष्ठेत् सदा पूर्वां पश्चिमा ञ्चैव वाग्यतः ॥ १८ ॥
ये न पूर्वामुपासन्ते द्विजाः सन्ध्यां न पश्चिमाम्।
सर्वांस्तान् धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ १९ ॥

परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् ।
न हीदृशमनायुष्यं लोके किञ्चन विद्यते ॥
यादृशं पुरुषस्येह परदारोपसेवनम् ॥ २० ॥
यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः ।
तावद्वर्षसहस्राणि नरकं पर्युपासते ॥ २१ ॥
प्रसाधनञ्च केशानामञ्जनं दन्तधावनम् ।
पूर्वाह्ण एव कार्याणि देवतानाञ्च पूजनम् ॥ २३ ॥
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ।
उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ॥ २४ ॥
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ २५ ॥
ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत् ।
अमावास्यां पौर्णमास्यां चतुर्दश्यां च सर्वशः ॥ २६ ॥
अष्टम्यां सर्वपक्षाणां ब्रह्मचारी सदा भवेत् ।
आक्रोशं परिवादं च पैशून्यञ्च विवर्जयेत् ॥ ३० ॥
नारुन्तुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याम् ॥ ३१ ॥
वाक् सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि ।
परस्य ना मर्मसु निष्पतन्ति तान् पण्डितो नावसृजेत परेषु ॥ ३२ ॥
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तया विद्धं न संरोहति वाक्क्षतम् ॥ ३३ ॥
कर्णिनालीकनाराचा निर्हरन्ति शरीरतः ।
वाक् शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ३४ ॥
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् विगर्हितान् ।
रूपद्रविणहीनांश्च सत्वहीनांश्च नाक्षिपेत् ॥ ३५ ॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषस्तम्भाभिमानञ्च तैक्ष्ण्यञ्च परिवर्जयेत् ॥ ३६ ॥
परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याच्च शिक्षार्थं ताडनं स्मृतम् ॥ ३७ ॥

कृत्वा मूत्रपुरीषे तु रथ्या माक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात् स्वाध्याये भोजने तथा ॥ ३९ ॥
नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा ।
वाग्यतो दन्तकाष्ठञ्च नित्यमेव समाचरेत् ॥
न चाभ्युदितशायी स्यात् प्रायश्चित्ती तथा भवेत् ॥ ४२ ॥
मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्य्य मथवा ऽप्यन्यं तथायु र्विन्दते महत् ॥ ४३ ॥
वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि विवर्जयेत् ॥ ४४ ॥
उदक्शिरा न स्वपेत तथा प्रत्यक् शिरा न च ।
प्राक्शिरास्तु शयेद्विद्वा नथवा दक्षिणा शिराः ॥ ४८ ॥
न चैवार्द्राणि वासांसि नित्यं सेवेत मानवः ।
उदक्यया च संभाषां न कुर्वीत कदाचन ॥ ५४ ॥
नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चान्तिके ।
उभे मूत्रपुरीषे तु नाप्सु कुर्यात् कदाचन ॥ ५५ ॥
नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः ।
अन्यस्य चाप्यवस्नातं दूरतः परिवर्जयेत् ॥ ६० ॥
निषण्ण श्चापि खादेत न तु गच्छन् कदाचन ।
मूत्रं नोतिष्ठता कार्यं न भस्मनि न गोव्रजे ॥ ६१ ॥
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ॥ ६२ ॥
ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ ६५ ॥
अभिवादयेत वृद्धांश्च दद्याच्चैवा सनं स्वयम् ।
कृताञ्जलि रुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ॥ ६६ ॥
न चासीतासने भिन्ने भिन्नं कांस्यं च वर्जयेत् ।
नैक वस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति ॥ ६७ ॥
स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ।
उच्छिष्टो न स्पृशे च्छीर्षं सर्व प्राणा स्तदाश्रयाः ॥ ६८ ॥

केशग्रहं प्रहारांश्च शिरस्येतान् विवर्जयेत्।
न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः॥ ६६॥
न चाभीक्ष्णं शिरः स्नायात् तथा ऽस्यायुर्न रिष्यते।
नाध्यापयेत् तथोच्छिष्टो नाधीयीत कदाचन।
वाते च पूतिगन्धे च मनसा पि न चिन्तयेत्॥ ७०॥
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुरा विदः।
आयु रस्य निकृन्तामि प्रजास्तस्याददे तथा।
य उच्छिष्टः प्रद्रवति स्वाध्यायञ्चाधिगच्छति॥ ७२॥
यश्चानध्यायकाले ऽपि मोहादभ्यसति द्विजः।
तस्य वेदः प्रणश्येत आयुश्च परिहीयते।
तस्माद्युक्तो ह्यनध्याये नाधीयीत कदाचन॥ ७४॥
प्रत्यादित्यं प्रत्यनलं प्रतिगाञ्च प्रतिद्विजान्।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः॥ ७५॥
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर।
सम्यङ् मिथ्याप्रवृत्ते ऽपि वर्तितव्यं गुराविह॥
गुरुनिन्दा दहत्यायु र्मनुष्याणां न संशयः॥ ८१॥
दूरादावसथान् मूत्रं दूरात् पादावसेचनम्।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा॥ ८२॥
विपर्ययं न कुर्वीत वाससो बुद्धिमान् नरः।
तथा नान्यधृतं धार्यं न चापदशमेव च॥ ८३॥
अन्यदेव भवेद् वासः शयनीये नरोत्तम।
अन्यद्रथ्यासु देवानामर्चाया मन्यदेव हि॥ ८७॥
प्रियङ्गु चन्दनाभ्यां च बिल्वेन तगरेण च।
पृथगेवानुलिंपेत केशरेण च बुद्धिमान्॥ ८८॥
उपवासञ्च कुर्वीत स्नातः शुचिरलङ्कृतः।
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत्॥ ८९॥
भूमौ सदैव नाश्नीयान् मानासीनो न शब्दवत्।
तोयपूर्वं प्रदायान्न मतिथिभ्यो विशेषतः॥ ९७॥
तस्माद् भुञ्जीत मेधावी न चाप्यन्यमना नरः।
समानमेकपङ्क्त्यां तु भोज्यमन्नं नरेश्वर॥ ९८॥

विषं हालाहलं भुङ्क्ते यो ऽप्रदाय सुहृज्जने ।
पानीयं पायसं शक्तून् दधिसर्पि मधून्यपि ॥ ६६ ॥
निरस्य शेषमेतेषां न प्रदेयन्तु कस्यचित् ।
भुञ्जानो मनुजव्याघ्र ! नैव शङ्कां समाचरेत् ॥ १०० ॥
परापवादं न ब्रूयान्नाप्रियं च कदाचन ।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ॥ १०६ ॥
पतितैस्तु कथां नेच्छेद् दर्शनञ्च विवर्जयेत् ।
संसर्गं न च गच्छेत तथायुर्विन्दते महत् ॥ १०७ ॥
न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम् ।
न चास्नातां स्त्रियं गच्छेत्तथायुर्विन्दते महत् ॥ १०८ ॥
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् ।
वृद्धोज्ञाति स्तथामित्रं दरिद्रो यो भवेदपि ।
गृहे वासयितव्यास्ते धन्य मायुष्य मेव च ॥ ११३ ॥
महात्मनो ऽतिगुह्यानि न वक्तव्यानि कर्हिचित् ।
अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीं तथा ॥ ११७ ॥
वैद्यानां बालवृद्धानां भृत्यानाञ्च युधिष्ठिर ।
बन्धूनां ब्राह्मणानाञ्च तथा शारणिकस्य च ।
संबन्धिनां च राजेन्द्र ! तथायुर्विन्दते महत् ॥ १८ ॥
ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम् ।
तदावसेत्सदा प्राज्ञो भवार्थी मनुजेश्वर ॥ १६ ॥
सन्ध्यायां न स्वपेद्राजन् विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथायुर्विन्दते महत् ॥ २० ॥
महाकुले प्रसूतां च प्रशस्तां लक्षणैस्तथा ।
वयस्थां च महाप्राज्ञः कन्यामावोढुमर्हति ॥ २५ ॥
अपत्य मुत्पाद्य ततः प्रतिष्ठाप्य कुलं ततः ।
पुत्राः प्रदेया ज्ञानेषु कुलधर्मेषु भारत ॥ १२६ ॥
कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते ।
पुत्रा निवेश्याश्च कुलाद् भृत्या लभ्याश्च भारत ॥ १२७ ॥
शिरः स्नातोऽथ कुर्वीत दैवं पित्र्यमथापि वा ।
परिवादं न च ब्रूयात् परेषा मात्मनस्तथा ।
परिवादो ह्यधर्माय प्रोच्यते भरतर्षभ ॥ ३१ ॥

लक्षणै रन्विता या च प्रशस्ता या च लक्षणैः ।
मनोज्ञा दर्शनीया च तां भवान् वोढु मर्हसि ॥ १३५ ॥
महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ।
अवरा पतिताश्चैव न ग्राह्या भूति मिच्छता ॥ १३७ ॥
धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ।
अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः ।
वेदे च ब्राह्मणैः प्रोक्ता स्ताश्च सर्वाः समाचरेत् ॥१३८॥
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥ १३९ ॥
अनायुष्यं दिवा स्वप्नं तथाभ्युदितशायिता ।
प्रगे निशामाशु तथा ये चोच्छिष्टाः स्वपन्ति वै ॥१४०॥
परदार्य्य मनायुष्यं नापितोच्छिष्टता तथा ।
यत्नतो नैव कर्तव्य मभ्यासश्चैव भारत ॥ १४१ ॥
सन्ध्यायां न च भुञ्जीत न स्नायेन्न पठेत्तथा ।
देवांश्च प्रणमेत् स्नातो गुरूं श्चाप्यभि वादयेत् ॥ १४२ ॥
अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः ।
अनर्च्चिते ह्यनायुष्यं गमनं तत्र भारत ॥ १४३ ॥
न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि ।
अनागतायां सन्ध्याया मागत्य च गृहे वसेत् ॥ १४४ ॥
मातुः पितुर्गुरूणां च कार्य्य मेवानुशासनम् ।
हितं वा प्यहितं वापि न विचार्यं कथंचन ॥ १४५ ॥
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्य्यासु चैव हि ।
यत्नवान् भव राजेन्द्र यत्नवान् सुखमेधते ॥ १४७ ॥
अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ।
प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् ॥ १४८ ॥
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ।
गान्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ॥ १४९ ॥
पत्नी रजस्वला या च नाभिगच्छेन्न चाह्वयेत् ।
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद् विचक्षणः ॥ १५१ ॥

पंचमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत् ।
एतेन विधिना पत्नी मुपागच्छेत पण्डितः ॥ १५२ ॥
ज्ञाति सम्बन्धि मित्राणि पूजनीयानि सर्वशः ।
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥ १५३ ॥
अत ऊर्ध्वं मरण्यं च सेवितव्यं नराधिप ।
एव ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ॥ १५४ ॥
आचारो भूतिजनन आचारः कीर्ति वर्द्धनः ।
आचाराद् वर्धते ह्यायु राचारो हन्त्यलक्षणम् ॥१५५॥
आगमानां हि सर्वेषा माचारः श्रेष्ठ उच्यते ।
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥ १५६ ॥
एतद्यशस्य मायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्प्य सर्ववर्णान् ब्रह्मणा समुदाहृतम् ॥ १५७ ॥

---

## शिष्टाचारः ।

महा. वन. २०६· मार्कण्डेय उ. स तु विप्रो महाप्राज्ञो धर्मव्याध मपृच्छत
शिष्टाचारं कथमहं विद्या मिति नरोत्तम ॥ ५९ ॥
एतदिच्छामि भद्रन्ते श्रोतुं धर्मभृतांवर ।
त्वत्तो महामते व्याध तद् ब्रवीहि यथातथम् ॥ ६० ॥
व्याध उ. यज्ञो दानं तपो वेदाः सत्यञ्च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ६१ ॥
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्ममित्येव सन्तुष्टास्ते शिष्टाः शिष्ट संमताः ॥ ६२ ॥
न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनञ्चैव द्वितीयं शिष्टलक्षणम् ॥ ६३ ॥
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मन् शिष्टाचारेषु नित्यदा ॥ ६४ ॥
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते वृत्तिं सा न शक्या ह्यतोऽन्यथा ॥ ६५ ॥
वेदस्योपनिषत् सत्यः सत्य स्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ६६ ॥

ये तु धर्मानसूयन्ते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाता च पीड्यते ॥ ६७ ॥
ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः ।
धर्मपन्थान मारूढाः सत्य धर्म परायणाः ॥ ६८ ॥
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता जनाः ।
उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः ॥ ६९ ॥
नास्तिकान् भिन्नमर्यादान् क्रूरान् पापमतौ स्थितान् ।
त्यज तान् ज्ञानमाश्रित्य धार्मिका नुपसेव्य च ॥ ७० ॥
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥ ७१ ॥
क्रमेण सञ्चितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत् साधू रागः शुक्ले च वाससि ॥ ७२ ॥
अहिंसा सत्य वचनं सर्वभूतहितं परम् ।
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ॥ ७३ ॥
सत्ये कृत्वा प्रतिष्ठान्तु प्रवर्त्तन्ते प्रवृत्तयः ।
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ॥ ७४ ॥
आचारश्च सतां धर्मः सन्तश्चाचारलक्षणाः ।
यो यथा प्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते ॥ ७५ ॥
पापात्मा क्रोधकामादीन् दोषानाप्नोत्यनात्मवान् ।
आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः ॥ ७६ ॥
अनाचारस्त्वधर्मेति एतत् शिष्टानुशासनम् ।
अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ॥ ७७ ॥
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ।
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ॥ ७८ ॥
गुरुशुश्रूषवो दान्ता शिष्टाचारा भवन्त्युत ।
तेषामहीनसत्वानां दुष्कराचारकर्मणाम् ॥ ७९ ॥
स्वैः कर्मभिः सत्कृतानां घोरत्वं सम्प्रणश्यति ।
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥ ८० ॥
धर्मं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः ।
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ॥ ८१ ॥

श्रुतवृत्तोपसंपन्नाः सन्तः स्वर्ग निवासिनः ।
वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः ॥ ८२ ॥
शिष्टाचारश्च शिष्टानां त्रिविधं धर्मलक्षणम् ।
पारणं चापि विद्यानां तीर्थाना मवगाहनम् ॥ ८३ ॥
क्षमा सत्यार्जवं शौचं सतामाचारदर्शनम् ।
सर्वभूतदयावन्तो अहिंसानिरताः सदा ॥ ८४ ॥
परुषञ्च न भाषन्ते सदा सन्तो द्विजप्रियाः ।
शुभानामशुभानाञ्च कर्मणां फलसञ्चये ॥ ८५ ॥
विपाक मभिजानन्तस्ते शिष्टाः शिष्टसम्मताः ॥
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ॥ ८६ ॥
सन्तः स्वर्गजिताः शुक्लाः सन्निविष्टाश्च सत्पथे ।
दातारः संविभक्तारो दीनानुग्रहकारिणः ॥ ८७ ॥
सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः ।
सर्वभूत दयावन्तस्ते शिष्टाः शिष्टसम्मताः ॥ ८८ ॥
दाननिष्ठाः सुखांल्लोका नाप्नुवन्तीह च श्रियम् ।
पीडया च कलत्रस्य भृत्यानां च समाहिताः ॥ ८९ ॥
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः ।
लोकयात्राञ्च पश्यन्तो धर्ममात्महितानि च ॥ ९० ॥
एवं सन्तो वर्त्तमानास्त्वेधन्ते शाश्वतीः समाः ।
अहिंसा सत्य वचन मानृशंस्य मथार्जवम् ॥ ९१ ॥
अद्रोहो नाभिमानश्च ह्रीः तितिक्षा दमः शमः ।
धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ॥ ९२ ॥
अकामद्वेषसंयुक्तास्ते सन्तो लोकसाक्षिणः ।
त्रीण्येव तु सता माहुः सन्तः पद मनुत्तमम् ॥ ९३ ॥
न चैव द्रुह्येद्दद्याच्च सत्यञ्चैव सदा वदेत् ।
सर्वत्र च दयावन्तः सन्तः करुणवेदिनः ॥ ९४ ॥
गच्छन्ती ह च सन्तुष्टा धर्मपंथानमुत्तमम् ।
शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ॥ ९५ ॥
अनसूया क्षमा शान्तिः सन्तोषः प्रियवादिता ।
कामक्रोधपरित्यागः शिष्टाचार निषेवणम् ॥ ९६ ॥

कर्म च श्रुतसम्पन्नं सतां मार्गमनुत्तमम् ।
शिष्टाचारं निषेवन्ते नित्यं धर्मेष्वनुव्रताः ॥ ९७ ॥
प्रज्ञाप्रासाद माश्ह्य मुच्यन्ते महतो भयात् ।
प्रेक्षन्ते लोक वृत्तानि विविधानि द्विजोत्तम ॥ ९८ ॥
अतिपुण्यानि पापानि तानि द्विजवरोत्तम ।
एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणं ब्रह्मन् पुरस्कृत्य द्विजर्षभ ॥ ९९ ॥

---

## तीर्थाटनम् ।

म०भ०१युधि०उ० प्रदक्षिणां यः कुरुते पृथिवीं तीर्थतत्परः ।
किं फलं तस्य कार्त्स्न्येन तद्भवान् वक्तुमर्हति ॥ ११ ॥
नारदउवाच. शृणु राजन्नवहितो यथा भीष्मेण धीमता ।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ १२ ॥
पुरा भागीरथीतीरे भीष्मो धर्मभृतां वरः ।
पित्र्यं व्रतं समास्थाय न्यवसन् मुनिभिः सह ॥ १३ ॥
शुभे देशे तथा राजन् पुण्ये देवर्षिसेविते ।
गङ्गाद्वारे महाभाग देवगन्धर्वसेविते ॥ १४ ॥
स पितॄंस्तर्पयामास देवांश्च परमद्युतिः ।
ऋषींश्च तर्पयामास विधिदृष्टेन कर्मणा ॥ १५ ॥
कस्यचित्त्वथ कालस्य जपन्नेव महायशाः ।
ददर्शाद्भुतसङ्काशं पुलस्त्यमृषिसत्तमम् ॥ १६ ॥
स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया ।
प्रहर्षमतुलं लेभे विस्मयं परमं ययौ ॥ १७ ॥
उपस्थितं महाभागं पूजयामास भारत ।
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ १८ ॥
शिरसा चार्घ्यमादाय शुचिः प्रयतमानसः ।
नाम सङ्कीर्तयामास तस्मिन् ब्रह्मर्षिसत्तमे ॥ १९ ॥
भीष्मोऽहमिति भद्रं ते दासोऽस्मि तव सुव्रत ।
तव संदर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ २० ॥

एवमुक्त्वा महाराज भीष्मो धर्मभृतां वरः ।
वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ २१ ॥
तं दृष्ट्वा नियमेनाथ स्वाध्यायेनापकर्षितम् ।
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमना भवत् ॥ २२ ॥

---

पुलस्त्य उ. अनेन तव धर्मज्ञ प्रश्रयेण दमेन च ।
सत्येन च महाभाग तुष्टोऽस्मि तव सुव्रत ॥ १ ॥
यस्येदृशस्ते धर्मोऽयं पितृ भक्त्या श्रितोऽनघ । ।
तेन पश्यसि मां पुत्र प्रीतिश्च परमा त्वयि ॥ २ ॥
अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते
यद् वक्ष्यसि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ ॥ ३ ॥

भीष्मउवाच· प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते ।
कृतमेतावता मन्ये यदहं दृष्टवान् प्रभुम् ॥ ४ ॥
यदि त्वहमनुग्राह्य स्तव धर्मभृतां वर ।
संदेहं ते प्रवक्ष्यामि तन्मे त्वं छेत्तुमर्हसि ॥ ५ ॥
अस्ति मे हृदये कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तमहं श्रोतुमिच्छामि तद्भवान् वक्तुमर्हति ॥ ६ ॥
प्रदक्षिणां यः पृथिवीं करोत्यमरसन्निभ ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि सुनिश्चितम् ॥ ७ ॥

पुलस्त्य. उ. हन्त ते कथयिष्यामि यदृषीणां परायणम् ।
तदेकाग्रमनाः पुत्र शृणु तीर्थेषु यत् फलम् ॥ ८ ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ ९ ॥
प्रतिग्रहादपावृत्तः संतुष्टो येन केन चित् ।
अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ १० ॥
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वपापेभ्यः स तीर्थफलमश्नुते ॥ ११ ॥
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ १२ ॥

ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् ।
फलञ्चैव यथातथ्यं प्रेत्य चेह च सर्वशः ॥ १३ ॥
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥ १४ ॥
प्राप्यन्ते पार्थिवैरेतैः समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनैर्नावगणैरेकात्मभिरसाधनैः ॥ १५ ॥
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तन्निबोध युधांवर ॥ १६ ॥
ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ १७ ॥
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ १८ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत् फलमवाप्नोति तीर्थाभिगमनेन तत् ॥ १९ ॥
अनु. २५. कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किञ्चिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥

---

## कर्तव्यः धर्मसाधनः ।

वन.३१.युधि.उ. नाहं कर्मफलान्वेषी राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ २ ॥
अस्तु वात्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे वा वसता कृष्णे यथाशक्ति करोमि तत् ॥ ३ ॥
धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥ ४ ॥
धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ।
धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥ ५ ॥
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥ ६ ॥

अतिवादांस्तदाप्येव माधर्ममभिशङ्किथाः ।
धर्माभिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥ ७ ॥
धर्मो यस्याभिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।
वेदात् शूद्र इवापेयात् स लोकादजरामरात् ॥ ८ ॥
वेदाध्यायी धर्मपरः कुले जातो मनस्विनि ।
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥ ९ ॥
पापं यान् स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते ।
शास्त्रातिगो मन्दबुद्धि र्यो धर्ममभिशङ्कते ॥ १० ॥
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन् महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविता ॥ ११ ॥
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च ऋषयः सर्वे धर्मेणैव सुचेतसः ॥ १२ ॥
प्रत्यक्षं पश्यसि ह्येतान् दिव्य योग समन्वितान् ।
शापानुग्रहणे शक्तान् देवेभ्यो ऽपि गरीयसः ॥ १३ ॥
एते हि धर्ममेवादौ वर्णयन्ति सदानघे ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ १४ ॥
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
राज्ञि मूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ १५ ॥
उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ।
धर्माभिशङ्की नान्यस्मात् प्रमाण मधिगच्छति ॥ १६ ॥
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ।
इन्द्रिय प्रीतिसम्बद्धं यदिदं लोक साक्षिकम् ।
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ॥ १७ ॥
प्रायश्चित्तं न तस्यास्ति यो धर्ममभिशंकते ।
ध्यायन् स कृपणः पापो न लोकान् प्रतिपद्यते ॥ १८ ॥
प्रमाणाद्धि निवृत्तो हि वेद शास्त्रार्थ निन्दकः ।
कामलोभातिगो मूढो नरकं प्रति पद्यते ॥ १९ ॥
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
आशंकमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ॥ २० ॥
आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् ।

सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ २१ ॥
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भाविनि ।
नैव तस्य परो लोको नायमस्तीति निश्चयः ॥ २२ ॥
शिष्टैराचरितं धर्मं कृष्णे मा स्माभिशंकिथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ २३ ॥
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ २४ ॥
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन् मज्जेदनिन्दिते ॥ २५ ॥
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ॥
विद्यया नैव युज्येयु र्न ह्यार्थं केचिदाप्नुयुः ॥ २६ ॥
तपश्च ब्रह्मचर्यञ्च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ २७ ॥
नाचरिष्यन् परे धर्मं परे परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥ २८ ॥
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ॥
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्मं माहताः ॥ २९ ॥
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवम् ।
धर्मं ते व्यचरन् कृष्णे तद्धि शर्म सनातनम् ॥ ३० ॥
स नायमफलो धर्मो नाधर्मो फलवानपि ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसा तथा ॥ ३१ ॥
त्वमात्मनो विजानीहि जन्म कृष्णे यथाश्रुतम् ।
वेत्थ चापि यथाजातो धृष्टद्युम्नः प्रतापवान् ॥ ३२ ॥
एतावदेव पर्याप्त मुपमानं शुचिस्मिते ।
कर्मणां फलमाप्नोति धीरो ऽल्पेनापि तुष्यति ॥ ३३ ॥
बहुनापि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किञ्चित् प्रेत्य शर्मास्ति वा पुनः ॥ ३४ ॥
कर्मणां श्रुतपुण्यानां पापानाञ्च फलोदयः ।
प्रभवश्चात्ययश्चैव देवगुह्यानि भाविनि ॥ ३५ ॥

नैतानि वेद यः कश्चिन्मुह्यन्ते ऽत्र प्रजा इमाः ।
अपि कल्पसहस्रेण न स श्रेयो ऽधिगच्छति ॥ ३६ ॥
रक्षाण्येतानि देवानां गूढमाया हि देवताः ।
कृताशाश्च व्रताशाश्च तपसा दग्धकिल्बिषाः ॥ ३७ ॥
प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ।
न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ॥ ३८ ॥
यष्टव्यञ्च प्रयत्नेन दातव्यञ्चान सूयता ।
कर्मणां फलमस्तीह तथैतद्धर्म शाश्वतम् ॥ ३९ ॥
ब्रह्मा प्रोवाच पुत्राणां यद्धपि वेद कश्यपः ।
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ॥ ४० ॥
व्यवस्य सर्वमस्तीति नास्तिक्यं भाव मुत्सृज ।
ईश्वरञ्चापि भूतानां धातारं मा च वै क्षिप ।
शिक्षस्वैनं नमस्वैनं मा ते ऽभूद् बुद्धिरीदृशी ॥ ४१ ॥
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमां देवतां कृष्णे मा मवंस्थाः कथंचन ॥ ४२ ॥